# ŚRAUTA SÚTRA OF ÁPASTAMBA

BELONGING TO THE

# TAITTIRÍYA SAṂHITÁ

WITH THE

## COMMENTARY OF RUDRADATTA

EDITED BY


DR. RICHARD GARBE,

PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF KÖNIGSBERG


## VOLUME II.

PRAŚNAS 8–15


CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57 PARK STREET.

1885.

ओम् ॥

अथ नित्यत्वसामान्याद्धविर्यज्ञसामान्याच्च चातुर्मास्यानि व्याचष्टे ॥

**अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । १ ।**

चतुर्षु चतुर्षु मासेषु भवानि चातुर्मास्यानि वैश्वदेवादीनि । तैः समुदितैरिष्टवतो ऽल्पकालिकेन भोगेन क्षपयितुमशक्यं पुण्यं भवतीति । नित्यत्वे ऽप्येषां फलोपन्यासः पशुबन्धवदेव प्रत्येतव्यः ॥ नित्यत्वं चैषां ब्राह्मणे चतुर्होत्रादिविधिष्वनेकत्र नित्यैः समभिव्याहारात् । सूत्रकृता च नित्याधिकारे वचनात् । आश्वलायनेन च दर्शपूर्णमासाभ्यामिष्टपशुचातुर्मास्यैरिति नित्यानुक्रमे पाठात् । तथा च बौधायनेन यावज्जीवप्रयुक्तानि चातुर्मास्यानि स्युरिति यावज्जीवाभ्यासवचनात् । भारद्वाजेनाप्यादौ फलाननुबन्धेनामूनि विधाय ततः का- चातुर्मास्यानि व्याख्यास्याम इति नित्यकाम्यविभागप्रदर्शनाच्च ॥

**फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते । २ ।**

देवतात्वेन विश्वदेवसंबन्धात् निरिष्टत्वेन पुराकल्पश्रवणाच्च पर्वणः समाख्या वैश्वदेवमिति । तेन चैत्रफाल्गुनयोश्चान्द्रमसयोरन्यतरस्य पौर्णमास्यां यजेत । भारद्वाजबौधायनाभ्यां तु पि पर्वणामुदगयनमात्रे प्रयोगो द्वादशाहेनापवर्गश्चोक्तः ॥ उदगयन आपूर्यमाणपक्षे संभवानि तेषां प्रयोग- भावः ॥

निवर्तनमन्ते वपनमिति। तथा अथ यदि द्वादशाहचातुर्मास्याः यक्ष्यमाणः प्रतिपदि वैश्वानरपार्जन्याभ्यामिष्ट्वा द्वितीये वैश्वदेवेन तृतीये चतुर्थे चोपरम्य पञ्चमे वरुणप्रघासैः षष्ठे सप्तमे चोपरम्याष्टमे नवमे च साकमेधा दशम एकादशे चोपरम्य द्वादशे शुनासीरीया त्रयोदशे पशुरिति। संवत्सरप्रतिमा वै द्वादश रात्रयः संवत्सरमेव यजत इति विज्ञायत इति॥ बौधायनस्त्वाह नक्षत्रप्रयोग उदगयन इत्येके उदगयन आपूर्यमाणपक्षे पुण्याहे प्रयुञ्जीतेति। तथा द्वादशाहेऽपि चातुर्मास्यैर्यजेत प्रथमायां वैश्वदेवेनेष्ट्वा चतुर्थ्यां वरुणप्रघासैरष्टम्यां नवम्यां च साकमेधैर्द्वादश्यां शुनासीरीयपशुना यजेतेति विज्ञायत इति॥ केचित्तु यथाप्रयोगमित्यौपमन्यव इत्यनेन, बौधायनवचनेनार्वागपि द्वादशाहाद्यावत्प्रयोगभाविना काले चातुर्मास्यापवर्गोऽभिहित इति मन्यन्ते। तदयुक्तं प्रयोगकालावधिकब्रह्मचर्यनियमपरत्वात्तस्य। तच्च पूर्वापरपर्यालोचनयैवाध्यवसानमित्यलं विस्तरेण॥

पूर्वस्मिन्पर्वणि पञ्चहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वान्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं च चरुम्। ३।

पूर्वं पर्वेति चतुर्दश्यत्राभिप्रेता न पञ्चदशी पूर्वसूत्रेण तस्याः प्रवचनात्। पञ्चदश्यां वैश्वदेवेन यजत इति लिङ्गात् श्वोभूते ग्राह्येष्टिरिति लिङ्गाच्च। अन्वारम्भणेऽनया चातुर्मास्यानीत्यन्वारम्भणीया वैश्वानरपार्जन्या। वैश्वानरश्च चाग्निर्वैश्वानरो देवतेति

पुनराधेये। न पञ्चहोत्रन्वारम्भणीययोः समानाग्निकं उभयोरप्या-रम्भार्थयोः स्वतन्त्रत्वात् वैश्वानरपार्जन्या पञ्चहोता च नाभ्यावर्ततेति पृथगुपादानाच्च ॥

वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य या-ज्यानुवाक्ये॥ पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु॥ अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसाविवास। कनिक्रदद्वृषभो जीरदानू रेतो, दधात्वोषधीषु गर्भमिति पार्जन्यस्य॥ हिरण्य नरे ददाति धेनुं पार्जन्ये। सिद्धमिष्टिः संतिष्ठते। ४।

प्राचीनप्रवणे वैश्वदेवेन यजते। ५।

प्रवणे यजते पूर्वस्मिन्नेव देशे देशान्तरे वा साधारणनिर्देशात् प्रघासेषूदवसाननियमाच्च। सत्याषाढस्त्वाह प्राचीनप्रवणे वैश्व-यजेतोदवसाय वेति॥

अनुबन्ध्यवद्गार्हपत्यादग्निं प्रणयन्नोद्यतहोमं जुहो-। ६।

वैश्वदेवायागूर्याप उपस्पृश्य पशुबन्धवदाहृताहवनीयं प्रणयति। नोद्यतहोमं जुहोति। पूर्वो यत्नपरो भवाग्नीति लिङ्गविरोधा-भावः॥

ऊर्णावन्तं प्रथमः सीद योनिमिति होतुरभिज्ञायाहवनीयायतन ऊर्णास्तुकां निधाय तस्यामग्निं प्रतिष्ठापयति । ७ ।

पुनरूर्णास्तुकाग्रहणात्सभारान्तराणि परिसंख्यातानि भवन्तीति । तस्यामग्निं प्रतिष्ठाप्य समानमातिमुक्तिभ्यः ॥

नानुत्तरवेदिके पांसुकं प्रणयनं विद्यत इत्यपरम् । ८ ।

अनुत्तरवेदिक इति वचनात् उत्तरवेदिमति वरुणप्रघासतन्त्रे महाहविषि च नित्यं पांसुकं प्रणयनम् ॥

अग्नीनन्वाधाय शाखामाहृत्य वैश्वदेव्या आमिक्षायै वत्सानपाकरोति । ९ ।

आमावास्यतन्त्रतामस्य पर्वणः ख्यापयितुमन्वाधानादेरनुक्रमः । तत्र च वैश्वदेविकं हविः । विश्वेभ्यो देवेभ्यो देवभागं विश्वेभ्यो देवेभ्यः शरदो दुहाना इत्यादयो विकाराः प्रत्येतव्याः ॥

प्रसूमयं बर्हिः प्रस्तरश्च । १० ।

प्रसूः पुष्पम् । तद्वन्तो दर्भा लाव्या इत्यर्थः । ननु प्रसूमयं बर्हिरित्यादिवद्बर्हिर्ग्रहणेनैव प्रस्तरस्यापि सिद्धे ग्रहणे किमर्थं पृथक् ग्रहणम् । परमतनिरासार्थमिति ब्रूयात् कल्पान्तरकारैः कैश्चित्प्रस्तरस्य प्रसूमयत्ववचनात् । आदरार्थं वा ब्राह्मणपरिव्राजकन्यायेन यथा प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषेत्यादौ ॥

त्रेधा संनद्धं पुनरेकधा । ११ ।

तदेतदुभयात्मकं बर्हिर्बहुनिधनोपपन्नमपि प्रथमं त्रेधा विभज्य संनह्य त्रीनपि तान्भागान्पुनरेकधा संनह्यतीत्यर्थः ॥

तस्मिन्मन्त्रः ।१२।

तस्मिन्नेकधासंनहने संनहनमन्त्रः। प्रथमानि तु संनहनानि तूष्णीं भवन्ति। तत्र च ... संनद्धस्य बर्हिषः प्रस्तररहितौ भागौ। प्रथमं बर्हिर्मन्त्रेण संभृत्य तयोः प्रस्तरवन्तं भागं बर्हिर्मन्त्रेण प्रस्तरमन्त्रेण चात्याधाय ततः सर्वं संनहनमन्त्रेणैकधा संनह्यति ॥

तथेध्मः ।१३।

तथेध्मो ऽपि प्रक्रमयः पुष्पितशाखाद्दूरादाहार्य इत्यर्थः ॥

त्रयोविंशतिदारुः ।१४।

गतः ॥

त्रीन्कलापान्संनह्यैकधा पुनः संनह्यति ।१५।

तत्रापि प्रथममष्टाभिरष्टाभिः सप्तकेन च तूष्णीं त्रीन्पुञ्जान्संनह्य ततस्तान्संनहनशुल्बे मन्त्रेण संभृत्य ततः संनहनमन्त्रेणैकधा संनह्यति ॥

पूर्ववद्वैश्वदेव्याः सायंदोहं दोहयति ।१६।

पूर्ववत् सांनाय्यवत्। तत्र च यवाग्वा सायं स्वयंहोमः। इह वो विश्वे देवा रमयन्तु गाव इत्यादयो मन्त्रविकाराः ॥

इति प्रथमा कण्डिका।

श्वोभूते पात्रसंसादनकाले पालाशं वाजिनपात्रं प्रयुनक्ति स्रुचं वा । १ ।

पात्रं चमसं चमसेन जुहोति स्रुचा वेत्यनुवादात् । कंसं चमसं वेति तु कल्पान्तरकाराः । न च तयोर्जुहूधर्माः जुहूवत्कल्प इत्यवचनात पालाशवचनाच्च । तेन प्रातर्दोहपात्रैः सह प्रयोगः ॥

निर्वपणकाल आग्नेयमष्टाकपालमिति यथासमाम्नातमष्टौ हवींषि निर्वपति । २ ।

राजसूयिकान्याग्नेयादीनि द्यावापृथिव्यान्तानि हवींषि समाम्नातानि क्रमेण निर्वपति ॥

तेषां पौष्णान्तानि पञ्च संचराणि । ३ ।

संचरन्ति पर्वान्तराण्यपीति संचराणि पर्वचतुष्टयसाधारणानीति यावत् । यथा तत्र तत्र समाम्नातमेतद्ब्राह्मणान्येव पञ्च हवींषीति ॥

पिष्टानां पौष्णं श्रपयति । ४ ।

पिष्टैस्तण्डुलैस्तत्र चरुपुरोडाशगणन्यायेन प्रागधिवपनात् । पौष्णार्थानामपि पुरोडाशीयैः सह विभागः न चरव्यैः पेष्ट्यत्वसामान्यात् उभयोश्च राश्योर्यथाभागं व्यावर्तध्वमिति विभज्य देवतोपदेश सङ्कलादिभज्यानाम् । ततः पात्र्यां पिष्टेषु समुप्तेषु प्रणीताभिः संयुते, न च पौष्णार्थानां पूर्ववद्विभागः ॥ तथा च भारद्वाजः सङ्केतराग्निपनदि संयुतानां पिष्टानां पौष्णमपोद्धरतीति । सत्याषाढश्चाह संयुतानां पिष्टानां विभागमन्तेण पौष्णमपच्छिद्य चरुकल्पेन श्रपयतीति ॥

ततश्चाधिश्रयणकाले चरुवद्यजुरुत्पूताश्चमु पौष्णमोप्य श्रपयति । कपालोपधानकाले भृगूणामङ्गिरसां तपसा तप्यस्वेत्यूहेनैककपाले ऽङ्गारानध्यूह्य प्रातर्दोहः ॥

तस्मै प्रातर्दोहे सायंदोहमानयति । ५ ।

मारुताधिश्रयणानन्तरमानयति पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोतीति लिङ्गात् व्यक्तोक्तत्वाच्च बौधायनेन ॥

यत्संवर्तते सामिक्षा । यदन्यत्तद्वाजिनम् । ६ ।

तत्र यद्घनीभूतं संपद्यते तदामिक्षाहविः । अवशिष्टं तु वाजिनम् । तदुभयमपि तथैवावस्थाप्य द्यावापृथिव्यस्याधिश्रयणादि करोति ॥

पशुवत्संप्रैषः । तथाज्यानि । ७ ।

पशुवदाज्येन दध्नोदेहीति विकृतः संप्रैषः । तथाज्यानि चतुर्गृहीतानि भवन्ति पृषदाज्यवन्ति च ॥

पृषदाज्ये विकारः । महीनां पयो ऽसीति पृषदाज्यधान्यां द्विराज्यं गृह्णाति द्विर्दधि सकृदाज्यम् । ८ ।

पृषदाज्ये पृथगेव गृह्णाति न तु दधन्याज्यमानीय । तथा महीनां पयो ऽसीति पुनर्वचनाज्ज्योतिरसीति मन्त्रो निवर्तते ॥ मादनकाले दधिस्थाली न साद्या कार्याभावात् । अभिघारणकाले सौम्यवर्जं पश्वाम्नानामाग्नेयविकारत्वान्मन्त्रेणाभिघारणं तूष्णीमितरेषां प्रातर्दोहवदामिक्षायाः ॥

उद्वासनकाल आमिक्षां संहृत्य द्वयोः पात्रयोरुद्धृत्य वाजिनैकदेशेनोपसिञ्चति । ९ ।

उद्वासनकाले मारुतोद्वासनानन्तरमामिक्षां सांनाय्यवदुद्वास्य संनहनाद्युपसेचनान्तं कृत्वा ततो वाजाग्र्यंशिरस्य मुद्वासयति ॥

अलंकरणकाल आज्येनैककपालमभिपूरयत्याविः-पृष्ठं वा कृत्वा व्याहृतीभिर्हवींष्यासादयति । १० ।

व्याख्यातः ॥

उत्करे वाजिनम् । ११ ।

वाजिनं तु तूष्णीमासादयति न व्याहृतिभिर्न च प्रियेणेति प्रधानहविर्मन्त्रप्रत्याम्नायत्वादुभयोर्मन्त्रयोः अप्रधानत्वाच्च वाजिनस्य । यथो-मष्टौ हवींषि निर्वपतीति ॥

पञ्चहोत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति । १२ ।

आमावास्यतन्त्रत्वादेव सिद्धे पञ्चहोतुः पुनरुपादानमितरमन्त्रपरिसंख्यानार्थम् । आगन्तुको ऽयमधिकः प्राकृतेभ्य इत्यन्ये । तद्वैन्द्राग्नवदभिमर्शनं मारुतस्य यथोक्तं भारद्वाजेन द्वाचरव्यच ऐन्द्राग्नविकारा इति ॥ सांनाय्यमन्त्रयोस्त्वामिक्षायामूहो वप व्याख्यातः । तस्याश्चोभयदोहविकारत्वं वरुणप्रघासेषु वक्ष्यति ॥

पशुवन्निर्मन्थ्यः सामिधेन्यश्च । १३ ।

हवींष्यासाद्य पशुवन्निर्मन्थ्यः सामिधेन्यश्च सप्तदश ॥

नव प्रयाजाः । १४ ।

गतः ॥

चतुर्थोत्तमावन्तरेण पाशुकाश्चत्वारो दुरःप्रभृतयः प्रैषप्रतीकयाज्याः । १५ ।

प्रैषाणां प्रतीका आदयो याज्या येषां ते तथोक्ताः। तद्यथा दुरो अग्न आज्यस्य वियन्त्वित्याद्यनुमन्त्रणान्येषां पशुवदेव द्रष्टव्याः॥

पशुवत्समानयनम् । १६ ।

चतुर्थाष्टमयोरित्यर्थः॥

प्रचरणकाल उपांशु सावित्रेण प्रचर्य पूर्ववदेकक-पालेन प्रचरति । १७ ।

पात्राभिज्ञायाः सकृत्सकृदवदानम्। पात्रद्वयादेकस्माद्वा यागः। इतरस्माच्छेषकार्याणि हविरेकत्वात्। केचित्तु पात्रद्वयाद्द्विर्द्विरवद्यन्ति द्वयोरुद्धरणस्यार्थवत्त्वाय। पूर्ववत् आग्रयणैककपालवत्॥ यद्यप्ययमेव प्रकृतिः सर्वैककपालानां तथापि तत्रैव धर्माणां सूत्रकृता प्रथमोक्तेरतिदेशः। कृतानुमन्त्रणं चाग्नीषोमीयवत्सौम्यस्य आग्नेयवत्सावित्रस्य ऐन्द्राग्नवन्मारुतस्य। प्रत्यक्षाम्नातास्त्वितरेषामनुमन्त्रणाः॥

मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपालम-भिजुहोति । १८ ।

गतः॥

दक्षिणाकाले प्रथमजं वत्सं ददाति मिथुनौ वा गावौ । १९ ।

प्रथमजस्तस्मिन्संवत्सर इति शेषः ॥

पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेन नवानूयाजान्यजति । २० ।

गतः ॥

इति द्वितीया कण्डिका ।

---

अष्टावाद्याः पाशुकाः प्रैषवर्जम् । १ ।

आदितस्तावदष्टावनूयाजा मैत्रावरुणप्रैषवर्जम् । आदित एवाष्टौ पाशुकैः समानास्त एवैषां याज्याः त एव च कृतानुमन्त्रप इत्यर्थः ॥

उत्तमेनोत्तमम् । २ ।

नवमं तूत्तमेनैकादशेनैव निगदेन यजति । अथवा प्राकृतेनोत्तमेनेत्यर्थः ॥

देवान्यजेति प्रथमं संप्रेष्यति । यज यजेतीतरान् । ३ ।

एवं प्रकृतिवदेव संप्रेष्यति न पशुवत्संप्रेष्यतीत्यर्थः ॥ ननु मैत्रावरुणाभावात् प्रैषवर्जमिति वचनाच्च प्रकृतिवदेव संप्रैषो भविष्यति तस्मिन्नर्थमारम्भः । सत्यं तथा भविष्यति ॥ भ्रमस्त्वन्यः प्रादुः स्यात्

प्रकृतौ हि सर्वार्थेनाग्न्यंप्रैषेण प्रातिस्विकेन च द्वितीयेन मध्यमौत्तमयोरेव द्वियजत्वं दृष्टम्। तथा पश्चादपि तद्विकाराणामेव द्वियजत्वमुक्तं उत्तरयोर्विकारेष्विति। वक्ष्यति च पितृयज्ञे देवौ यजेति प्रथममिति। तेनात्रापि तद्विकाराणां पञ्चमप्रभृतीनामेव द्वियजत्वं न तु प्रथमविकाराणां द्वितीयतृतीयचतुर्थानामिति। तस्माद्भ्रमनिवृत्त्यर्थो युक्तः पुनरारम्भः॥

संवत्सरीणां स्वस्तिमाशास्ते। दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते। ४।

अथ पशुवद्बूहनादि सर्वोपभृता पृषदाज्यधान्याः। सूक्तवाके तु होता दिव्यं धामाशास्त इत्यस्य पुरस्तात्संवत्सरीणां स्वस्तिमाशास्त इत्यावपति॥

एवं यजमानो जपति। आशास इति मन्त्रं संनमति। ५।

यजमानोऽपि मा मे सत्याशीरित्यस्य यजुषोऽनन्तरं संवत्सरीणां स्वस्तिमाशास इति जपति॥

न परिधीन्प्रहृत्य संस्रावान्तं कृत्वा वाजिनपात्र उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति। ६।

संस्रावान्तं कृत्वेत्येतावतैव सिद्धे परिधीन्प्रहृत्येति वचनं प्रहृत्य परिधीञ्जुहोतीति वाजिनब्राह्मणस्याप्ययमेवार्थ इति दर्शयितुम्। तेन संस्रावः परिधिप्रहरणाङ्गमिति ख्यापितं भवति। बर्हिरनुविषिञ्चन् बर्हिषि स्कन्दयन्॥

नाभिघारयति। ७।

अभिघारणप्रतिषेधादवदानावचनाच्च द्विर्गृहीतेनैवेज्या न चतुर्गृहीतेन॥

वाजिभ्यो ऽनुब्रूहि वाजिनो यजेति संप्रैषौ। वषट्कृते चमसेन जुहोति। स्रुचा वानुविपिच्यमानयानुवषट्कृते च। ८।

गताः॥

ऊर्ध्वज्ञुरासीनो ऽनवानं होता यजति। ९।

अनवानं अनुच्छ्वसन्नर्धर्चे। सांनाय्यवद्धुतानुमन्त्रणम्। नेत्यन्ये प्रधानार्थत्वात्तस्य॥

वाजिनस्याग्ने वीहीत्यनुयजति। १०।

अनुवषट्कारस्य स्विष्टकृदर्थत्वादग्नेरहमायुष्मानित्यनुमन्त्रणम्॥

त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यति सोमस्य वाजिनस्य घर्मस्येति। ११।

समवदानं सहग्रहणम्। सोमादीनां त्रयाणां ग्रहणे ऽनुवषट्कारात् स्विष्टकृदर्थे न पृथग्गृह्णाति किं तु देवतेज्याशिष्टेनैव यजतीत्यर्थः। अन्ये त्वाहुः त्रयाणां हविषामयमेवानुयागः न तु स्विष्टकृदिज्यास्तीति॥

उद्रेकेण पशुबन्धवद्दिशः प्रतीज्यान्तर्वेदि प्रैषं समुपहूय भक्षयन्ति। १२।

उद्रेकः शेषः। प्रतीक्ष्य प्रतियागं. कृत्वान्तर्वेदि सादितं शेषं सर्वे सर्वानुपहूय भक्षयन्ति पात्रादादाय ॥

असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते।१३।

कर्मनामधेयेन कर्मनिमित्तेन नाम्ना यथा होतरुपह्वयस्वाध्वर्यवुपह्वयस्वेत्यादि ॥

उपहूत इति प्रतिवचनः। १४।

प्रतिवचनो मन्त्र इति शेषः। उपहूतो ऽस्मि मयेत्यर्थः ॥

होता प्रथमो भक्षयति यजमान उत्तमः। यजमानः प्रथमस्योत्तमस्येत्येके। १५।

अनियतक्रमास्त्वितरे प्रवर्ग्यपितृयज्ञयोरिव विशेषावचनात्। भारद्वाजस्त्वाह होताग्रे ऽथाध्वर्युरथ ब्रह्माथाग्नीदथ यजमान इति ॥

वाजिनां भक्षो अवतु वाजो अस्माँ रेतः सिक्तममृतं बलाय। स न इन्द्रियं द्रविणं दधातु मा रिषाम वाजिनं भक्षयन्तः। तस्य ते वाजिभिर्भक्षंकृतस्य वाजिभिः सुतस्य वाजिपीतस्य वाजिनस्योपहूतस्योपहूतो भक्षयामीति भक्षयति। १६।

भक्षयिता योयः स सर्वो ऽनेन भक्षयति ॥

पशुवत्समिष्टयजूंषि। १७।

देवा यज्ञमिति त्रीणि ॥

सिद्धमिष्टिः संतिष्ठते ।।१८।

दर्शवत्संस्था। आमिक्षा यजमानभागो दधिपयोमन्त्राभ्यां प्राश्यः॥

इति तृतीया कण्डिका।

श्वोभूते पौर्णमास्येष्ट्वा प्रसूता देवेन सवित्रा दैव्या आप उन्दन्तु ते तनुं दीर्घायुत्वाय वर्चस इत्युपोद्य त्र्येण्या शलल्येषुकाण्डेनेषुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण नि केशान्वर्तयते वापयते श्मश्रूणि।१।

अद्भिः क्लेदनं उपोन्दनम्। त्रीणि श्वेतान्येनानि यस्याः सा त्र्येणी। शल्यकमृगस्याङ्गरुहा सूचिः शलली। इषुकाण्डं इषोरनन्तरं का[...] शलाका वा। उदुम्बरं ताम्रं औदुम्बरेणेति लोहविशेषणं लोहि[...] यसेन निवर्तयत इति श्रुतेः। तत्र तु ताम्रस्य केवलस्य वपना[...] मर्थात्तन्मिश्रेण कालायसेन क्षुरं कुर्वन्ति। तेनेषुशललीभ्यां गृहो[...] क्षुरेण केशान्निवर्तयते छिनत्ति। शललीक्षुभ्यां केशान्विनीय क्षु[...] निवर्तयत इति कल्पान्तरम्। श्मश्रूणि वापयते स्वार्थिको णि[...] वापयते वाध्वर्युणा यजमानः सर्वं वापयत इति सत्याषाढः॥

ऋतमेव परमेष्ठ्यृतं नात्येति किंचन। ऋते समु[...] आहित ऋते भूमिरियं श्रिता॥ अग्निस्तिग्मेन शोचिषा[...] तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा॥ ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपर

स्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तय इति निवर्तयति । २ ।

अनेन मन्त्रेण केशानध्वर्युर्निवर्तयति । श्मश्रूणि तूष्णीं वपतीति ॥

तद्दत्तं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति यजमानो जपति । ब्राह्मण एकहोतेति चानुवाकम् । ३ ।

निवर्त्यमानेषु केशेषु जपति ॥

तस्य पर्वस्वन्तरालव्रतानि । ४ ।

...मानस्य वैश्वदेवादिषु पर्वसु चतुर्मासभाविषु तत्तदन्तरालकालि-
...नि व्रतानि वक्ष्यन्ते ॥

न मांसमश्नाति न स्त्रियमुपैति । ५ ।

प्राप्तस्य प्रतिषेधः । नित्ये पशौ वैधमिडामांसभक्षणं भवत्येव ॥

...त्वे वा जायाम् । ६ ।

...तौ महिषीं जायामुपैति वा ॥

...नोपर्यास्ते । ७ ।

...रि पीठादावासने शयीत वा । प्रदर्शनार्थं लासनवचनम् । अधः
...तेत्येवाश्वलायनः ॥

...जुगुप्सेतानृतात् । ८ ।

जुगुप्सया वर्जनं लक्ष्यते। वर्जयेदनृतम्। आहिताग्नित्वादेव सिद्धस्य पुनर्वचनमादरार्थम्॥

प्राङ् शेते। ९।

प्राक्शिराः॥

मध्वश्नाति। १०।

ओदनत्वेन व्यञ्जनत्वेन वेति संशये निर्णयमाह॥

मध्वशनं स्यादित्येकम्। व्यञ्जनार्थमित्यपरम्। ११।

मध्वश्नातीति श्रुत्यर्थस्य विशयित्वादिति भावः॥ अत्रानुग्रहमाह भारद्वाजः मध्वलाभे दैव्यं मधु वेति विज्ञायते वनस्पते मधुना दैव्येनेति। दैव्यं मध्विति घृतमित्यर्थः। बौधायनश्च मध्वश्नाती प्रकृत्याह घृतमित्येवेदमुक्तं भवति दैव्यं मध्विति विज्ञायत इति आश्वलायनस्तु मधुमांसलवणस्त्र्यवलेखनानि वर्जयेदिति॥

ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यः। १२।

वैश्वदेवादीनां पर्वणां संवत्सरकालसाध्यानां प्रवृत्तिद्वैविध्यमनेन प्रदर्श्यते। स एष चातुर्मास्ययाजी द्विविधः एक ऋतुयाजी इतरश्चातुर्मास्ययाजी। तत्र यो वसन्तादीनृतूनेव प्रतीक्षमाणस्तत्तदृतौ जातेनतेन पर्वणा यजेत न तु चतुर्मासावधिः फाल्गुन्याषाढ्यादीरपेक्षते स ऋतुयाजी। यस्त्वेवमुभयमप्यपेक्ष्य यजते स चातुर्मास्ययाजी। एतदुक्तं भवति वक्ष्यमाणप्रकारेण चतुर्षु चतुर्षु मासेषु चातुर्मास्यैर्यजेत वसन्ताद्यृतुषु वा जातेषु तस्यतस्यर्तोरादिम आदि पर्वणीति॥ तत्रर्तुयाजिनो विधिं दर्शयति॥

यो वसन्तोऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी । अथ यश्चतुर्षुचतुर्षु मासेषु स चातुर्मास्ययाजी॥ वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते । १३ ।

ऋतुयाजिविषय एवायं विधिर्न चातुर्मास्ययाजिविषयः इतरथा साकमेधानां शरद्विधाने चातुर्मास्यावधिविरोधात् फाल्गुन्याषाढ्यादिविधिनैव सिद्धेः वसन्तप्रावृड्विधिवैयर्थ्याच्च । न च वाच्यं सौरे वसन्ते या फाल्गुनी या प्रावृषि चाषाढी तत्रैव प्रवृत्त्यर्थं वसन्तप्रावृड्विधानमिति चान्द्रमासानुसारेणैव चातुर्मास्यप्रवृत्तेर्दर्शयिष्यमाणत्वात् । तस्मादृतुयाजिन एवायं विधिः ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

ततश्चतुर्षु मासेष्वाषाढ्यां श्रवण्यां वोदवसाय वरुणप्रघासैर्यजते । १ ।

चातुर्मास्येषु मासान्संचष्ट इति वक्ष्यति । ततः पर्वगणनया देवकालात्पर्वणः फाल्गुनाद्वैत्राद्वारभ्य चतुर्षु चान्द्रमसेषु मासेष्वतीतेषु यानन्तराषाढी श्रावणी वा तयोरन्यतरस्यामुदवसाय देशान्तरं गत्वा वरुणप्रघासाख्येन पर्वणा यजेत । आषाढी श्रावणी च फाल्गुनीचैत्र्यौ व्याख्याते । उदवसायेति वचनं वैश्वदेववदनियमे प्राप्ते

नियमार्थम् ॥ वरुणप्रघासमसमाख्या तु यदादित्यो वरुणं राजानं वरुणप्रघासैरयजतेति वरुणस्येज्यत्वस्तवनेनाभिव्यादेवतात्वेन च वरुण-संबन्धात् शमीपर्णान्युपवपति घासमेवाभ्यामपियच्छतीति घाससंबन्धाच्च निर्वक्तव्या। शब्दश्चायं नित्यं बहुवचनान्तः पुंलिङ्गान्तश्च प्रयुज्यते ॥ चतुर्मासेष्वाषाढ्यामिति नियमात् अधिकमासवति वत्सरे न चातु-र्मास्यारम्भः ॥

प्ररूढकक्षे यष्टव्यमिति बह्वृचब्राह्मणं भवति। २।

बह्वृचब्राह्मणवचनं विकल्पार्थम्। प्ररूढाः कक्षाः गुल्माः यस्मिन्देशे तत्र वा यजेत। यत्र क्वचिद्वा देशान्तर इत्यर्थः ॥

तस्य वैश्वदेववत्कल्पः। ३।

तस्येति कर्मापेक्षया पर्वापेक्षया वैकवचनम्। कल्पः प्रयोगः ॥

वेदी कृत्वाग्रेण गार्हपत्यं समे प्राची वेदी भवतः।

आगूर्याप उपस्पृश्य उद्दवसाय गार्हपत्ये निहिते ऽनन्तरं वेदी कृ वेद्यौ कार्ये ते चाग्रेण गार्हपत्यं नापरेणाहवनीयं नापि कल्पान्त भिप्रायेणाग्रेणाहवनीयम्। प्राची प्राक्कान समे द्वे अपि दार्शपूर्णम सिक्याविव्यर्थः। उत्तरस्याः पाग्‍वन्धिकत्वभ्रमनिरासार्थं समवचन कः प्रसङ्गः। अस्ति भ्रमहेतुः उत्तरवेदिसंबन्धात् पाशुको वेक्त कल्पान्तरे। तन्निरासार्थं च। तस्माद्युक्तमेव साम्यवचनम्॥ तत्रा गार्हपत्यस्य प्रतिप्रस्थातृसंचरार्थमन्तरालं मुक्त्वा शिरःस्थानीयस्य गा पत्यस्य बाहुद्वयस्थत्पार्श्वयोर्द्वे वेदी भवतः ब्राह्मणे तासां दक्षि

बाहुरिति प्रहृत्य तस्माच्चातुर्मास्ययाज्यमुष्मिंल्लोक उभयाबाहुरिति बाहुत्वेन वेद्याः स्तवनात् तस्मात्पृथमात्रं व्यंसाविति लिङ्गाच्च ॥

उत्तरामध्वर्युः करोति दक्षिणां प्रतिप्रस्थाता । उत्तरे विहारे ऽध्वर्युश्चरति दक्षिणे प्रतिप्रस्थाता । ५ ।

चरति कर्माणि करोतीत्यर्थः ॥

उभयत्र कृत्स्नं तन्त्रम् । ६ ।

विहारसंयुक्तं कृत्स्नं तन्त्रमुभयोर्विहारयोर्भवति । उभयदेशभावित्वात्प्रधानानां देशभेदे चाङ्गानामविभक्तादिति भावः । यथोक्तं न्यायविद्भिः वैश्वदेवे ऽग्नौ वरुणप्रघासेषु देशभेदात्स्वतन्त्रं तन्त्रं क्रियतेति ॥

अपि पत्नीसंयाजाः । ७ ।

पत्नीसंयाजग्रहणं प्रदर्शनार्थम् । अपराग्निहोमानां तेषां त्वेकाग्नित्वात् कल्पान्तरमताच्च तन्त्रता मा विज्ञायीति पुनर्वचनम् । एकत्वे ऽग्नेः कर्तृभेदादुभयविहारिकाणां पृथगुभये कार्या इत्यर्थः । उक्तं जैमिनिना एकाग्नित्वादपरेषु तन्त्रं स्यादिति नाना वा कर्तृभेदादिति च ॥

एकवत्संप्रैषः । ८ ।

पत्न्यालानां निगदानामध्वर्युरेव वक्तेति वक्ष्यति । तत्रार्थद्वयीया अपि ये संप्रैषास्ते ऽप्येकवदेकार्था इवैकवचनेन प्रयोज्याः । अग्नये प्रणीयमानायाग्नये समिध्यमानायाग्नीत्परिधींश्चाग्निं च संमृड्ढि । इध्माबर्हिरुपसादयेत्यादि । तेषां चार्थद्व-

ऽविषयत्वे ऽपि अग्निमादधीतेत्यादिवज्जात्यभिप्रायेणैकत्वोपपत्तेर्मा भूदार्थबाध इति भावः। संसर्गिद्रव्याभिधायित्वाचानूहो ऽग्निशब्दस्य यथाहुर्मीमांसकाः संसर्गिषु चार्थस्य स्थिरपरिमाणत्वादिति॥ सत्याषाढश्चाह तदध्वर्युः संप्रेष्यत्येकवदग्निसंयुक्तानि सामिधेनीष्वग्निप्रणयने ऽग्निसंमार्जने चेति। बौधायनश्चाग्नये समिध्यमानायेत्येव पठितवान्॥ अतश्च न्यायाद्याजमाने ऽप्यग्न्यभिधायिनामनूहः यथा युनज्मि त्वा समिद्धो अग्निराहुत इत्यादेः॥

अत्र च संप्रैष इति वचनादन्ये संप्रैषेभ्यो ये निगदाः संवादामन्त्रणादिविषयाः ते द्विवदेव प्रयोज्याः यथागतामग्नीत्प्रणेष्यावः प्रोक्षिष्यावः निर्वप्स्याव इत्यादयः। केचित्त्वामन्त्रणनिगदानप्येकवद्योज्यानमन्यन्ते। तदयुक्तं संप्रैषग्रहणात् एकवदामन्त्रितस्य द्विवदनुवचनविरोधाच। सत्याषाढस्तुभाभ्यामप्येकवदामन्त्रणमाह यथ॥ ब्रह्माणमामन्त्रयेते द्विवद्ब्रह्मानुजानातीति॥ [illegible]तः

द्विवद्ब्रह्मानुजानाति। ९।

ब्रह्मा तु द्विवचनेनानुजानाति यथा प्रणयतं यज्ञं देवता वर्धयतं प्रोक्षतमित्यादि। प्रवराश्रावणे त्वामन्त्रणमनुज्ञा चैकवदेव [illegible] आश्रावयितुरेकत्वात्। ब्रह्मग्रहणमनुज्ञाग्रहणं च यजमानादेः संवदेश प्रदर्शनार्थं तुल्यन्यायत्वात्। तस्मादोः निर्वपतं संवदेथामनुप्रवगतामित्याद्यपि द्विवद्भवति॥

घ्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं पृथमात्रं रथवर्त्म सीतामात्रं प्रादेशमात्रेण वा तिर्यगसंभिन्ने वेदी भ[illegible]

असंभिन्ने असंश्लिष्टे। पृथगादयः प्रकृतावेव व्याख्याताः। एवमन्तरम-मुभयोरन्तरालपरिमाणमित्यर्थः। तच्च वेदिश्रोण्यंसकोण्योरेव भवति मध्ये तु संनमनवशाद्विस्तारः संपद्यते॥

अन्तरा वेदी प्रतिप्रस्थातुः संचरः। ११।

अन्तरा वेदी यो देशः स प्रतिप्रस्थातुः संचरः कर्मार्थः। एवं चोत्तरतःऽउपचारत्वं दक्षिणविहारस्यापि संपादितं भवति॥

अपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमभिपरि-हरति। १२।

प्रतिप्रस्थातेति शेषः। अपरेण वेदिमिति वचनात् गार्हपत्यवेद्योर्म-ध्यतो गमनदेशाभावाच्च स्वयं पश्चाद्गार्हपत्यस्य गच्छन्स्तम्बयजुः पुरतो हरति न चाध्वर्योर्बहिर्नयति॥

उत्करे निवपति। १३।

... ॥

समान उत्करः। १४।

एक एवोत्तरो द्वाभ्यामुत्करः। तत्रोभाभ्यां न्युप्तमाग्नीध्रस्तन्त्रेणा-भिगृह्णाति यजमानश्च तन्त्रेणानुमन्त्रयते विभवात्॥

पञ्चर्त्विजः। १५।

भवन्ति। न तु प्राकृता एव चत्वारः न च पञ्चभ्यो ऽधिकाः। द्वितीयवेद्यर्थमपि पृथगग्नीध्रादय इत्यर्थः॥

यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता । १६ ।

यद्यदेव कर्माध्वर्युः करोति तदेव कर्म तमनु प्रतिप्रस्थातापि स्वस्मिन्विहारे करोतीत्यर्थः। तथा च कात्यायनः प्रणीतापत्नीसंनहनाग्निमन्थनादीन्यनुक्रम्य प्रतिप्रस्थातेत्युक्त्वाह कृतानुकारो ऽन्यत्रेति। बौधायनश्चाह अथान्यत्राध्वर्योः कृतानुकारो भवतीति। एवं च क्रमभावित्वादुभयोः कर्मणः आवृत्तिसंभवे याज्यमानानां यथान्वाधीयमाने जपति वेदिं संमृज्यमानां बर्हिरासाद्यमानमित्यादौ। विभवतां तु तन्त्रत्वमेव सर्वत्र यथान्वाहितेषु जपति बर्हिरासन्नं प्रयाजानुसंकृतमित्यादौ ॥

यत्किंच वाचाकर्मीणमध्वर्युरेव तत्कुर्यात्। १७।

पूर्वसूत्रेण सर्वस्मिन्नाध्वर्यवे प्रतिप्रस्थातुरपि प्राप्ते नियम आरभ्यते यत्किंच वाचाकर्मीणमिति वागिति वागिन्द्रियमुच्यते तज्जन्यो व्यापारो वाचाकर्म। तत्साध्यं कर्म वाचाकर्मीणम्। तदध्वर्युरेव तत् कुर्यात्। मन्त्रोच्चारणं सर्वमध्वर्युरेव कुर्यात् प्रतिप्रस्थाता तु केवलं कर्माण्यनुतिष्ठेत्। तदुच्चरितैरेव मन्त्रैरुभयोरनुष्ठेयार्थसिद्धेरिति भावः।

युगपत्कालान्वा निगदान्। १८।

यद्वा युगपत्कालनिगदमन्त्रविषयो ऽयं नियमो भवेत्। तत्रोच्चैः प्रयोगमन्त्रास्तावन्निगदाः संप्रैषादयः। तेषु च द्वयोर्युगपत्प्रयोक्तव्यतयोपस्थिता युगपत्कालाः। यौगपद्यं च नात्यन्तिकं किं तु पू... त्रानुरोधेनानन्तरभावित्वमेव। तेन प्रकारेण ये युगपत्का... निगदा उच्चैः संनाह्यन्तां अविदद्भ्यः अपयत प्रोक्षणीरासादय...

आवय अगतामग्नीत् अग्नाग्नीदग्निं विहर इत्यादयः॥ तानध्वर्युरेव प्रयुञ्जीत निगदचोदितानामाग्नीध्रादीनामेवं संस्कारानध्वर्युरेव कुर्यात्। ये त्वयुगपन्निगदा उपसृष्टां मे प्रब्रूतात् गां चोपसृष्टां सम्यञ्चो ऽनुब्रूहीत्येवमादयः ये चान्ये निगदव्यतिरिक्ता मन्त्रास्तान्सर्वान्प्रतिप्रस्थातापि पक्षे प्रयुञ्जीतेति॥ तत्रान्यमतम्। वाशब्दो ऽवधारणार्थः पक्षं व्यावर्तयति पूर्वपक्षमात्रेणोक्तः पूर्वः कल्प इति। कस्मात्। परकर्तृके निर्वापादौ परकर्तृके च मन्त्रे निर्वपामीत्यादिमन्त्रवर्णवैयर्थ्यात् यथोक्तं न्यायविद्भिः मन्त्राश्च संनिपातित्वादिति॥

साधारणद्रव्यांश्च संस्कारान्। १९।

पूर्वसूत्राभ्यां मन्त्रेषु प्रयोक्तृनियम उक्तः। अनेन कर्मस्वपि नियम उच्यते। साधारणद्रव्यविषयानपि संस्कारानध्वर्युरेव गार्हपत्यादीनामन्वाधानपरिस्तरणब्रह्मयजमानासनप्रकल्पनपत्नीसंनहनहोतृवरणपत्नीनादिरूपान्कुर्यात्। संस्कार्याणामेकत्वादिति भावः॥

प्रागुत्तरात्परिग्राहात्कृत्वैकस्फ्यया वेदी अनुसंभिनत्ति। दक्षिणस्या उत्तरायै श्रोणेः प्रक्रम्या दक्षिणादंसादुत्तरस्याः। २०।

एवं यत्नेन स्फ्यकृता रेखैकस्फ्या। तया वेदी अनुसंभिनत्ति संबन्धयतीत्यर्थः॥

उत्तरस्यां वेद्यां पशुबन्धवदुत्तरवेदिमुपवपति। २१।

अन्तरेव वेदेरुत्तरवेदिमुपवपति न त्वाहवनीयायतनसंवत्पुरतो वेदेः।

तत्र वेद्यन्ते पशुबन्धवत् वित्तायनी मे ऽसीत्यादिविधिना शम्यामात्रीमुत्तरवेदिं कुर्यादित्यर्थः ॥

काले पशुबन्धवद्गार्हपत्यादग्नी प्रणयतः । २२ ।

संभारनिर्वपनान्ते दक्षिणतो निःसारणान्ते वा। तत्र संभारः पूर्ववदूर्णास्तुकैव सा च दक्षिणविहारे ऽपि स्यात् । पशुबन्धवदिति पुनर्वचनमनुत्तरवेदिके ऽपि दक्षिणविहारे नित्यत्वार्थम्। पुनर्गार्हपत्यग्रहणं कल्पान्तरोक्तस्यार्धेणाहवनीयं वेदिं कृत्वाहवनीयात्प्रणयनस्य निवृत्त्यर्थम्। द्वाभ्यामुभयस्य सर्वं वा विभज्य प्राकृतत्वात्प्रणयनमिति कात्यायनेन विभागस्य दर्शितत्वात् विभक्तस्यैवोद्धरणमिति। उद्धृतस्य वा विभज्य प्रणयनमित्यर्थः। गतश्रियो विभज्य प्रणयनं भवति ॥

नोद्यतहोमौ जुहुतः । २३ ।

विस्पष्टार्थं पुनर्वचनम् ॥

अन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यते। उत्तरेणोत्तरां वेदिमध्वर्युः । २४ ।

प्रतिप्रस्थातुरत्र पूर्वत्वार्थं वचनम्। सर्वेति भारद्वाजः ॥

पूर्वो ऽध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति। जघनेन प्रतिप्रस्थाता दक्षिणस्याम् । २५ ।

प्रतिष्ठापने पश्चिम एवेति वेद्यामेवाग्निप्रतिष्ठापनं तुल्यमुत्तरेण ॥

**अग्नीनन्वाधाय पृथक् शाखे आहरतः । २६ ।**

अतिमुक्तान्ते ऽन्वाधत्तः क्रमेण । गार्हपत्यदक्षिणाग्नी अध्वर्युरेव । अन्वाधीयमानयाजमानानामावृत्तिः ॥ शाखाहरणे प्रतिप्रस्थाता प्रथमः हविःप्राथम्यात् । तच्चानन्तरमेव वक्ष्यति ॥

**तथेध्माबर्हिषी । २७ ।**

प्रस्तरमयत्वादिरपि विशेषो ऽत्रानुसंधेयः । ते अपि पृथगाहरतः स्वे स्वे काले तेषां च वैश्वदेवप्रकृतित्वात् ॥

**मारुत्याः प्रतिप्रस्थाता वत्सानपाकरोति । वारुण्या अध्वर्युः । २८ ।**

मरुद्भ्यो देवभागं मरुद्भ्यः शरदो दुहाना इत्यादि दक्षिणस्याग्नेर्दक्षि- ...तो व्रतोपायनम् ॥

**शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति । २९ ।**

...क्षिणस्यैव उत्तरस्य संपन्नस्रुक्कादिविहारस्य । पात्रान्तराणां प्राकृत ...व वृक्षनियमः । सर्वाण्यपि शमीमयानि प्राकृतानि वेति बौधा- ...नः । शमीमयानि दक्षिणविहारस्यैव भारद्वाजः ॥

**यथादेवतं सायंदोहौ दोहयतः । ३० ।**

इतो रमयन्तु वरुणो रमयत्वित्यादि ॥ यवागूर्क्षेपणस्य द्विभागः ॥

**सद्यस्काला वा वरुणप्रघासाः । ३१ ।**

...यं तदा सायंदोहः सेत्स्यति । तत्राह

अ॰

त्यष्टासु मेषमित्यादि। तदयमत्र क्रमो ऽवतिष्ठते अनन्तरमैन्द्राग्ना-त्करम्भपात्राणां निर्वापस्ततो मेष्यास्ततो मेषस्य ततः कायस्येति। पठित एवायं क्रमो भारद्वाजीये द्रष्टव्यः॥

तयोरामिक्षावद्दैवतम्। ३९।

मरुतो मेष्या वरुणो मेषस्येत्यर्थः प्रदाने तथादर्शनात्॥

आमपेषाणां पत्नी करम्भपात्राणि करोति। ४०।

समानमवहननादि वैश्वदेवेन। सर्वांस्तुषानवभृथाय निदधाति। पिष्टेषु हविःषु करम्भपात्राणि तदर्थैः पिष्टैः पत्नी करोति। तत्रातप्तानां यवानां दुष्पेषणत्वात्सौकर्याय तापयित्वा पिंष्येरन्निति तत्परिहारार्थमामवचनम्॥

यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि। ४१।

अमात्याः सहवासिनो ज्ञातयः पुत्रपौत्राद्याः जाता एव प्रजा जनिष्यमाणा एव प्रजा इति श्रुतेः यावन्तो गृह्याः स्युः स एकातिरिक्ताः। यावन्तो यजमानस्य पुत्रपौत्रा भवन्तीत्येव भारद्वाजः। सस्त्रीकाः सभार्याः॥

आमपेषाणां मेषप्रतिकृती भवतः। ४२।

आमपेषाणामिति पूर्ववत्॥

मेषमध्वर्युः करोति मेषीं प्रतिप्रस्थाता। ४३।

अत्रापि क्रमः पूर्ववत्। पिण्डकरणाख्ये कर्मणि कृते मेष्यर्थेन पिण्डेन मेषीं करोति प्रतिप्रस्थाता। ततो मेषार्थं विभज्य तेन मेषमध्वर्युः करोति॥

इति पञ्चमी कण्डिका।

स्त्रियाः स्त्रिव्यञ्जनानि।१।

स्त्रीत्वद्योतकानि स्तनादीनि चिह्नानि करोति। स्त्रीति ह्रस्वपाठश्छान्दसः प्रामादिको वा*॥

पुंसः पुंव्यञ्जनानि।२।

वृषणादीनि॥

अपि वा पूर्वेद्युरन्वाहार्यपचने वितुषानिव यवान्कृत्वा तेषामीषदुपतप्तानां पत्नी करम्भपात्राणि करोति।३।

पूर्वं दृष्करैर्यामपिष्टैः करम्भपात्राणां मेषयोश्च करणमुक्तम्। इदानीं तदुपेषत्वाय पक्वपिष्टैः करणं विशेषान्तरमध्रौचीनं विकल्प्यते। पूर्वेद्युरन्यमध्ये ऽहनि यवान्वितुषानिव कृत्वा फलीकरणवर्जं तुषमात्रविमुक्तान् कृत्वा तैरन्वाहार्यपचने किंचिद्भर्जयित्वा पिष्टैः पत्नी पात्राणि करोति॥

अत्रापि मेषं मेषीं च करोतीति वाजसनेयकम्।४।

* The MSS. of the text, however, read स्त्रीव्यञ्जनानि, against the statement of the commentator.

अपिशब्दो भिन्नक्रमः। अत्रावसरे पूर्वेद्युः पात्रकरणानन्तरं तद्दे पिष्टैस्तूष्णीं मेषावपि पत्नी करोतीत्यर्थः। तथा तेषामेव मेषं मेषीं चेति बौधायनः ॥

ऐन्द्राग्नपर्यन्तान्यधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति। अष्टासु मेषम्। ५।

ऐन्द्राग्नमधिश्रित्य पयसोर्दधनी चानीय ततः प्रतिप्रस्थाता मेषीमधिश्रयति ततो ऽध्वर्युर्मेषम्। न त्वतौ प्रथयतः आकृतिनाशप्रसङ्गात् ॥

कुम्भीपाक्यौ वा भवतः। ६।

कुम्भी स्थाली। कपालधर्मयोः स्थाल्योरधिश्रयत इत्यर्थः। केचित्तु स्थालीपाकधर्मं कुम्भीपाकमिच्छन्ति ॥

कायमेककपालमधिश्रित्याप्येभ्यो निनीयाग्नी प्रणयत इति वाजसनेयकम्। ७।

ततः कायाधिश्रयणादि प्रतिपद्याप्येभ्य एकतादिभ्यो देवताभ्य उदकं निनीयानन्तरं वाग्नी प्रणयत इत्यर्थः। तचान्वाधानादीनामाहवनी संयोगिनामुत्कर्षः उलपराज्यादीनां चानुत्कर्षो देशलक्षणा[illegible]ति द्रष्टव्यम् ॥

पशुवत्संप्रैषः। तथाज्यानि। ८।

व्याख्यातौ वैश्वदेवे। तत्रेध्माबर्हिषी उपसादय स्रुवौ चेत्यादिसंनामस्य केषिदिष्टत्वात् तन्निरासार्थमुत्तरविधानार्थं च पुनर्वचनम् ॥

पृषदाज्ये विकारः। महीनां पयो ऽसीति पृषदा-ज्यधान्यां सकृदाज्यं गृह्णाति। द्विर्दधि द्विराज्यम्। ९।

गतः॥

यद्यु वै श्रवणायां संसृज्य गृह्णीयात्। १०।

श्रवणायां चेद्वरुणप्रघासाः तदा पशुबन्धवद्दधन्याज्यमानीयैव गृह्णीयादित्यर्थः॥

उद्वासनकाले ऽनैडकीभिरूर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः। ११।

उद्वासनकाले आमिक्षयोरुद्वासितयोः आर्द्रा भुवनस्य गोपा इत्येतां गृह्णाति जनित्री मतीनामिति मेषीं आर्द्रा भुवनस्येति मेषं चोद्वास्य अनैडकीभिः अमेषजाभिरूर्णाभिर्मेषयोर्लोमानि संपादयतः॥

तदभावे कुशोर्णां निश्लेष्य मारुत्यां मेषमवदधाति। वारुण्यां मेषीम्। १२।

तदभावे कुशान्मर्दयित्वा तच्छिखास्तयोः संश्लेष्य स्वांस्वां प्रतिकृतिमन्योऽन्यस्यामिक्षयोरेकैकस्मिन्पात्रे ऽन्योऽन्यमवधत्त इत्यर्थः व्यतिहरत इत्युत्तरवचनात्॥

अथाभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि वा। १३।

अभ्याः पर्णानि करीरस्य फलानि च तत्तत्पात्रे क्षिपति।

द्वयोरप्यध्वर्युरित्येके। आभ्यामित्युभयोर्भक्षणार्थः घासमेवाभ्यामपि यच्छतीति श्रुतेः ॥

करम्भपात्रेषु चान्वोप्याष्टावुत्तरस्यां वेद्यां हवींष्यासादयति। १४।

ततोऽध्वर्युः करम्भपात्रेषु च तानि चिप्त्वा ततः कायोद्वासनाद्यासादनान्तं कृत्वा मारुतीवर्जमष्टौ हवींषि प्रियेण नाम्नेत्युत्तरस्यां वेद्यामासादयति। व्याहृतीभिरित्यन्ये। तदयुक्तं चातुर्मास्यान्यालभमान इति श्रुतेः। स चायं कर्मक्रमः कल्पान्तरेषु क्रमोक्तौ वेदितव्यः ॥

एकां मारुतीं प्रतिप्रस्थाता दक्षिणस्यां करम्भपात्राणि च। १५।

करम्भपात्राणि च तूष्णीमासादयति ॥

अथ मेषप्रतिकृती व्यतिहरतः। १६।

विनिमयेन हरतः ॥

मारुत्यां मेषीमवदधाति। वारुण्यां मेषम्। १७।

स्वां स्वां प्रतिकृतिं स्वस्यां स्वस्यामामिक्षायां मम चिपतीत्यर्थः ॥

पशुवदग्निर्मन्थ्यौ सामिधेन्यश्च नव प्रयाजानूयाजाः। १८।

विस्पष्टार्थमेषां पुनर्वचनं निर्मन्थ्यस्य तु केषांचिद्द्वितीयस्याग्निष्टत्वात्तद्विधानार्थं च। यथाह भारद्वाजः उभौ निर्मन्थ्याभ्यां चरत इत्येकमध्वर्युरित्यपरमिति। तत्राग्नये मथ्यमानायेत्यादावेकवत्संप्रैषोऽनुसंधातव्यः ॥

प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीमुदानयत्येतच्च वाचयति। १९।

अथ परिधिसंमार्गान्ते कर्मण्युभयत्र कृते स्वायतनात्पत्नीं वेदिसमीपं नयति प्रघास्यानिति यजुषा तामेतच्च वाचयति॥

तां पृच्छति पत्नि कति ते जारा इति। २०।

संख्याप्रश्नादेव स्वरूपप्रश्नो ऽर्थसिद्धः॥

यानाचष्टे तान्वरुणो गृह्णात्विति निर्दिशति। २१।

सा चेत्कांश्चिदाचष्टे तान्निर्दिशति देवदत्तादीन्वरुणो गृह्णात्विति। एवं च तद्दोषात्कर्मणो वैगुण्यं न भवतीति भावः। स्वयमपि कृतप्रायश्चित्ता भवतीत्यन्ये॥

यज्जारं सन्तं न प्रब्रूयात्प्रियं ज्ञातिं रुन्ध्यात्। असौ मे जार इति निर्दिशेत्। निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति विज्ञायते। २२।

यदि सत्येव जारे तमनुक्त्वापह्नुवीत आत्मनः प्रियं बन्धुं रुन्ध्यात् बाधेत। ततो ऽवश्यं जारमुक्त्वा वरुणेन ग्राहयेत्। तेन कर्मणो वैगुण्यं परिहृतं भवतीति भावः॥

संमृष्ट उत्तरो ऽग्निर्भवत्यसंमृष्टो दक्षिणः। अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण वोत्तरां वे दसमीपे शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणे ऽग्नौ शूर्पेण जुहुतः। २३।

अथोत्तरो ऽग्निः संसृष्टो भवति न लितरः । अत्रान्तरे यजमानः पत्नी च करम्भपात्राणि सह जुहुतः ॥

मो षू ण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह । यद्ग्राम इत्युभौ याज्याम् । २४ ।

मो षू ण इति यजमानेनानूक्ते यद्ग्राम इत्युभावुक्त्वा जुहुत इत्यर्थः । अत्राह बौधायनः किंदेवत्यानि खलु करम्भपात्राणीति वारुणानि भवन्तीत्येव ब्रूयादिति ॥

अक्रन्कर्म कर्मकृत इति विपरायन्तौ जपतः । २५ ।

विपरावर्तमानौ ॥

अपि वाध्वर्युः प्रतिप्रस्थाता वा जुहुयात् । अन्वारभेयातामितरौ । २६ ।

तावेव तस्यापि होममन्त्रौ ॥

अथ दक्षिणमग्निं संमार्ष्टि । २७ ।

आग्नीध्र इति शेषः ॥

ऐन्द्राग्नपर्यन्तैः प्रचर्यारमत्यध्वर्युः । २८ ।

अथ स्रुच्याघारादि समानमा प्रवरात् । तत्राध्वर्योरेव प्रवरनिगदः स्यात् होतृवरणार्थत्वात् युगपत्कालनिगदत्वाच्च । तथाध्वर्युरेव प्रवरं प्रवृणीतेति भारद्वाजबौधायनौ । द्वावपि च स्फ्यौ संमार्गांश्चाग्नीध्रो धारयति । प्रत्याश्राविते वषट्कारेणाध्वर्युर्जुहोति वषट्कृते प्रति-

प्रस्थाता। तन्त्रं कृतानुमन्त्रणम्। ऐन्द्राग्नान्तैर्हविर्भिः प्रचर्य स्वयं विरमति तूष्णीमास्तेऽध्वर्युः॥

**अथ प्रतिप्रस्थाता पूर्वेण सहावदानेन मारुत्याः सर्वां मेषीमवद्यति। उत्तरेण शमीपर्णकरीराणि। २९।**

मारुत्या आमिक्षायाः प्रथमावदानेन सह तस्यां मेषीं सर्वामादत्ते। न चावदानमन्त्रस्योहः मेष्याः कृत्स्नावदानेऽमन्त्रत्वात्। उत्तरेण सह शमीपर्णकरीराणि॥

**अथ प्रचर्यारमति। ३०।**

ततः प्रचर्याग्नौ विरमति। तत्र सांनाय्यवदनुमन्त्रणमामिक्षायाः मेष्यास्त्वैन्द्राग्नवत् भारद्वाजमतात् यथाग्निषां समुच्चयं प्रकृत्याह संसृष्टे च नानाद्रव्यत्वाद्वरुणप्रघासेषु मेषयोश्चेति॥

**अथाध्वर्युः पूर्वेण सहावदानेन वारुण्याः सर्वं मेषमवद्यति। उत्तरेण शमीपर्णकरीराणि। अथ प्रचरति। ३१।**

व्याख्यातः पूर्वेण। मेषस्य त्वाग्नेयवदनुमन्त्रणम्॥

इति षष्ठी कण्डिका।

**कायानुब्रूहि कं यजेत्येककपाले संप्रैषौ। १।**

तत एककपालधर्मेण कायप्रचारः। आग्नेयवत्त्वानुमन्त्रणम्॥

नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेककपालम-भिजुहोति। २।

गतः ॥

तद् हैके पृथगीडे निरवद्यन्ति। तद् तथा न कुर्यात्। समानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति। तस्मिन्प्रतिप्रस्थाता मारुत्या अन्ववद्धाति। ३।

पृथक् मौविष्टकृतेन प्रचर्य मद्देडामवद्यत। तत्र खलु केचिदिडामपि पृथगवद्यन्ति। तत्तथा न कुर्यात्। एकस्मिन्नेव तु पात्रे उपस्तीर्याध्वर्युः स्वीयेभ्यो हविर्भ्यः ममवदाय प्रतिप्रस्थात्रे प्रयच्छति। तस्मिन्नेव पात्रे मारुत्या अवदाय प्रतिप्रयच्छति॥ तत्र समानां हविषां समवदायेति यत्नात् पश्चाद्भाविन्या अपि वारुण्याः पूर्वमवदानं स्यात् पश्चान्मारुत्याः। ततोऽन्वारम्भ उभयोः॥

उपहूतां प्राश्नन्ति। ४।

प्रतिप्रस्थातुरपूर्वत्वात् तत्प्रापणार्थं वचनम्॥

यः प्रवया ऋषभः स दक्षिणा। ५।

प्रवयाः प्रकृष्टवयाः सेचनसमर्थ इति यावत्॥

कामं तु ततो भूयो दद्यात्। ६।

शक्तिश्रद्धाभ्यां ततो भूयिष्ठं दातुमिच्छन्कामं दद्यात्। तदपि नानुशास्त इत्यर्थः॥

धेनुर्दक्षिणेत्येके। ७।

गतः॥

परिवत्सरीणां स्वस्तिमाशास्त। दिव्यं धामाशास्त इति हृक्तवाकस्याशिःषु होतानुवर्तयते। एवं यजमानो जपति। आशास इति मन्त्रं संनमति। ८।

अथ हविःशेषोद्वासनादि समानमा शंयुवाकात्। तत्र वारुण्याः शेषं प्रज्ञातं निदधात्यवभृथार्थम्। समिदाधानाद्याग्नीध्रः पर्यायेण करोति। याजमानानां चावृत्तिः संभवताम्। संवादे च ये विशेषास्तेऽपि प्रागेव दर्शिताः। परिवत्सरीणामित्यादिग्रन्थश्च संवत्सरीणामित्यादिना व्याख्यातः॥

उभौ वाजिनाभ्यां प्रचरतः। ९।

गतः॥

शेषौ समवनीयोत्तरे विहारे पूर्ववद्भक्षयन्त्या मा विशन्त्विन्दव आ गल्गा धवनीनां रसेन मे रसं पृण। तस्य ते वाजिभिर्भक्षंकृतस्येति समानम्। १०।

अध्वर्योः पात्रेऽन्यः शेषमवनीयोत्तरस्यां वेद्यां सादयित्वा वैश्वदेवव-द्भक्षयन्ति॥ भक्षणमन्त्रयोस्तु वाजिनां भक्ष इत्यस्या ऋचः स्थाने आ मा विशन्त्वित्येषा भवति। तस्य ते वाजिभिरित्यादि तु यजुः समानमेव॥

पूर्णपात्रवर्जं पूर्ववदिष्टं संस्थापयति। ११।

अथ पत्नीसंयाजप्रभृत्या संस्थायास्तन्त्रदिहारसंयुक्तं कर्म समानमुभयो-र्वैश्वदेवेन। पूर्णपात्रे त्वस्ति विशेषः स वक्ष्यत इत्यर्थः। संस्थापयतीष्टि-

कवचनमविवक्षितं इतरथोभयत्र कृत्स्नं तन्त्रमित्यनेन विरोधात् ॥ तत्र तस्यांतस्यां वेद्यां तंतं वेदं निधायाभिमृशति यजमानः । तथैव च मृणाति होता । न योक्त्रविमोकादि पत्न्याः तस्योत्तरत्रवचनात् । केवलं तु पुरुषिमतीत्युच्चिखति । होतृषदनैर्विभक्तैरभिस्तृणीतो वेदौ । मैत्रेरेवोत्तरामध्वर्युरित्यपरम् । तन्त्रेण प्राशनमामिक्षायजमानभागयोः ॥

पूर्णपात्रस्य स्थाने सौमिको ऽवभृथः । १२ ।

यत्प्रणीतामार्जनपर्यायं यजमानस्य पूर्णपात्रं यत्पूर्णपात्रमन्तर्वेदि निनयतीति यच्च पत्न्याः पूर्णपात्रमञ्जलौ पूर्णपात्रमानयतीति तदुभयमपि ग्राह्यं अविशेषात् अवभृथमंत्राविशेषाच्च । यथा एष वै दर्शपूर्णमासयोरवभृथ इति तथा अवभृथस्यैव रूपं कृत्वोच्छिष्टतीति च तेनोभयप्रत्याम्नायो ऽवभृथः ॥ स च पूर्णपात्रस्थान इति वचनात् प्रणीतासु विमुक्तासु अनन्तरमेवेष्यते । पूर्ववदिष्टिं संस्थापयतीति वचनात् संस्थापिरिष्टमवभृथ इत्यन्ये । तदयुक्तं तत्र पूर्ववदिष्टिं संस्थापणातः परमन्यो विशेष इत्येतावन्मात्रस्य विवक्षितत्वात् । तत्र च लिङ्गं महाहविष्यवभृथस्थाने तुषाणामप्सु प्रतिपादनमुक्त्वा ततः सिद्धमिष्टिः संतिष्ठत इति संस्थावचनम् । बौधायनश्च पूर्णपात्रविषयकर्मैश्रुरित्वा न विद्यत इतंमिति प्रकृत्याह प्रसिद्धो ऽवभृथ इति । तस्माद्यथोक्त एव काले युक्तो ऽवभृथः । अपरे पुनराध्वर्यवं संस्थाप्यावभृथं कुर्वन्त्यविरोधाय । अथापेक्षितविधित्वादत्रैवावभृथप्रयोगमाह ॥

चतुर्गृहीतान्याज्यानि । १३ ।

प्रसक्तत्वादवभृथो वरुणप्रघासेष्वविमुक्तत्वाद्यज्ञस्य । तत्र सौमिकवत्प-

रित्सरणपाणिप्रक्षालनपात्रप्रयोगादेरवचनात् सर्वोपरतिरेव ॥ प्रयोगस्तावत्। वेदस्तु क्रियते यदि स्तीर्णः। वेदिपक्षे बर्हिश्च। ततो वेदं प्रयुज्य पवित्रं कृत्वोहेन संमृज्य प्रोक्ष्य च संप्रेष्यत्याज्येनोदेहीति वेदिपक्षे प्रोक्षणीरासादय बर्हिरुपसादयेति च ॥ उपभृत्यपि वचनाच्चतुर्गृहीतमेव भवत्यनूयाजपक्षे ऽपि। तत्र तु प्रयाजानूयाजार्थयोर्मन्त्रपक्षकयोगादितो द्वाभ्यां द्वाभ्यां ग्रहणं भवेत्। यदा तु नानूयाजास्तदादित एव चतुर्भिः ॥

**वारुण्यै निष्कासेन तुषैश्चावभृथमवयन्ति। १४।**

आज्यानि गृहीत्वा वारुण्याः शेषेण तुषैश्च महावभृथं गच्छन्ति ॥ अवभृथं कर्म। तत्संयोगात्तदर्थमुदकमत्रावभृथ इत्युच्यते ॥

**तुषा ऋजीषधर्मं लभन्ते। १५।**

सोमर्जीषधर्मं दर्भप्रोक्षणादिकं तुषा लभन्ते॥ निष्कासस्तु हविर्भविष्यति॥

**वारुणमेककपालमेके समामनन्ति। १६।**

अस्मिंस्तु पक्षे सर्वमपि पुरोडाशसंयुक्तं कर्मालंकरणान्तं क्रियते ॥

**नायुर्दां नाभिप्रव्रजनमन्त्रं न साम गायति। १७।**

आयुर्दाग्रहणेनावभृथमेष्यतो होमो लक्ष्यते। तं न जुहोति। न घोरं हि राजेति प्रयान्तो वदन्ति। न च साम गातव्यमित्यर्थः ॥

**सर्वा दिशो ऽवभृथगमनमाम्नातम्। १८।**

सर्वा दिशः प्रति ॥

नोदीचीरभ्यवेत्या इत्येके । १९ ।

उदीच्यांभवा आपो न गन्तव्या इत्येके शाखिनः ॥

यां दिशं गच्छेयुस्तथामुखाः प्रचरेयुरित्येके । २० ।

यां दिशं प्रवृत्विजो गच्छन्ति तां दिशमभिमुखाः प्रचरेयुः न तु यथाप्रकृति प्रागादिमुखा इत्यर्थः । तथा च भारद्वाजः यां दिशं गच्छन्ति सा प्राची दिगिति ॥

वहन्तीनां स्थावरा अभ्यवेत्याः । २१ ।

या वहन्तीनां प्रदेशेषु स्थावरा ह्रदादिस्था आपस्ता अभिगन्तव्याः ॥

तदभावे याथाकामी । २२ ।

तदभावे याथाकाम्यं याः काश्चिदेवाभ्यवेत्याः ॥

उदकान्ते स्तरणान्तां वेदिं कृत्वा तस्यां हवींषि सादयति । २३ ।

उदकसमीपे स्फादानादिविधिना वेदिं कृत्वा स्तीर्त्वा च बर्हिषा तस्यामाज्यानि निष्कासं च सादयति । तत्र परिध्यादयो ऽग्निसंस्कारा अर्थलुप्ता निवर्तन्ते । परिध्यभावादेव परिध्यङ्गयोः सूर्यस्त्वा पुरस्तात्पुनर्जिस्म त्वेत्यभिमन्त्रणयोरपि निवृत्तिः । परिध्यङ्गत्वं च तयोः प्रकृतावेव दर्शितम् ॥

अपि वा न वेदिः । २४ ।

गतः ॥

शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा जपति। २५।

दृष्ट्वास्वप्सु जपत्यध्वर्युः। अतो वेदिपक्षे ऽपि प्राग्वेदिकरणाज्जपति॥

अभिष्ठितो वरुणस्य पाश इत्युदकान्तमभितिष्ठन्ते। २६।

तीरमुदकसीमामभिक्रामन्ति। बहुवचनात्सर्वेषां मन्त्रः॥

अपः प्रगाह्य तिष्ठन्तो ऽवभृथेन चरन्ति। २७।

प्रगाह्यान्तःप्रविश्य तिष्ठन्तो ऽवभृथेन कर्मणा चरन्ति। तेनाक्रमण-प्रत्याक्रमणयोर्निवृत्तिराघारादौ॥

तृणं प्रहृत्य स्रौवमाघारयति। २८।

वेदेनापः प्रथममुपवाज्य तत आघारयति। यथा चैवं कार्यं तथा दर्शितमेव प्रकृतौ। तथोदकमुपवाज्येत्येव सत्याषाढः। तृणप्रहारः सर्वाहुत्यर्थः आहुतीनां प्रतिष्ठित्या इति श्रुतेः॥

यदि वा पुरा तृणं स्यात्तस्मिञ्जुहुयात्। २९।

गतः॥

इति सप्तमी कण्डिका।

अग्नीदपस्त्विः संमृड्ढीति संप्रेष्यति। १।

अपामाहवनीयविकारत्वादिति भावः॥

आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यापो अन्नादा अन्नाद्यायेति मन्त्रं संनमति। २।

आग्नीध्र इति शेषः। तत्रैध्मसंनहनाभावात् सहस्फ्यैर्लौकिकैर्दर्भैः केवलेन वा स्फ्येन संमार्गः॥

अग्नेरनीकमप आविवेशेति स्रुच्यमाघारयति। ३।

उत्तरत्रोत्स्नाहेति मन्त्रान्तः। तत्र भुवनमसि विप्रथस्वेत्यविकारेण यज्ञाभिधानात्। आपो यष्ट इति संनामः आहवनीयाभिधानात्॥

वागस्याग्नेयीत्यनुमन्त्रयते यजमानः। ४।

गतः॥

लुप्यते प्रवरः। ५।

स्रुचौ सादयित्वा पुनर्घृतवति शब्दे ऽस्यादत्ते। सर्वमन्यल्लुप्यते॥

अपबर्हिषः प्रयाजानिष्ट्वाप्सुमन्तावाज्यभागौ यजति। ६।

चौनिष्टार्धमौपभृतस्यानयत्यनूयाजपक्षे। अन्यथा सर्वमौपभृतम्। अप्सुमन्तौ अनुवाक्याभ्यामप्सुशब्दवन्तौ। याज्ये तु प्रकृतिवत्॥

अप्स्वग्न इत्येषा। अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवमापश्च विश्वभेषजीरित्यप्सुमन्तौ। ७।

गतः॥

निष्कासस्यावदाय वरुणमिष्ट्वा कृत्स्नं निष्कासमवदायाग्नीवरुणौ स्विष्टकृदर्थे यजति । ८ ।

निष्कासाद्वरुणमिष्ट्वा नारिष्ठाः । सांनाय्यवद्रुतानुमन्त्रणम् । आग्नेयवच्चैककपालपक्षे । न चास्यैककपालधर्माः । तच्च सौमिके दर्शयिष्यते ॥ स्विष्टकृतस्त्वग्नीवरुणाभ्यामनुब्रूहीति संनामः । आयुष्मानित्यनुमन्त्रणम् ॥

नोत्तरं क्रियते । ९ ।

गतः ॥

अपि वोपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति । १० ।

अस्मिंस्तु कल्पे ऽनन्तरं स्विष्टकृतो ऽग्नीदपः सकृत्संमृड्ढीति संप्रैषः । आपो वाजजितो वाजं वः सस्तृवांसो वाजं जिग्यिवांसमित्यूहेन संमार्गश्च द्रष्टव्यः पूर्वसंमार्गे प्रदर्शितत्वात् व्यक्तीकृतत्वाच्च सत्याषाढभारद्वाजाभ्याम् ॥

देवौ यजेति प्रथमं संप्रेष्यति । यजेत्युत्तरम् । ११ ।

प्रकृतौ हि देवान्यजेति सर्वार्थेन प्रथमेन यजेति प्रातिस्विकेन च द्वितीयेन द्वियजावुत्तरावनूयाजौ । तदिह प्रथमाभावात्तयोर्द्वियजत्वासिद्धौ द्वितीयस्य तावद्यज यजेत्यावृत्तित एव तत्सिद्धिः । तृतीयस्य तु देवौ यज यजेति द्व्यर्थत्वादेकेनापि तत्सिद्ध्यतीति भावः ॥

तुषाणां स्थालीं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति। १२।

तुषाणां तुषैः पूरणगुणेत्यादिना षष्ठी। उपमारयति निमज्जयति। तुषा ऋजीषधर्मं लभन्त इत्यनेनैव सिद्धे स्थालीविधानार्थं वचनम्। इध्माबोधरणमुत्स्नातभचणं च तूष्णीं भवतः सोमलिङ्गत्वान्मन्त्राणाम्॥

अपि वा न सौमिको ऽवभृथः। तूष्णीं तुषनिष्कासमप्सूपवपेत्। १३।

तुषैश्च निष्कासेन चावभृथमवैतीति श्रुत्यर्थस्य विशयित्वादिति भावः। न सौमिको ऽवभृथ इत्यनेन चावभृथेष्टेरेव प्रतिषेधो न तु स्नानादेरपि वक्ष्यमाणस्य तदनन्तरमेव वचनात् अपो ऽवभृथमवैतीति पुनःश्रुतेश्च॥

इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते। १४।

गतः॥

देवीराप इत्यवभृथं यजमानो ऽभिमन्त्र्य सुमित्रा न आप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमज्जन्तौ स्नातः पत्नी यजमानश्च। १५।

अवभृथं उदकम्। तस्मिन्यजमानेनाभिमन्त्रिते सुमित्रा न इत्युभावपः प्रविश्य तूष्णीं स्नातः। अनुपमज्जन्तौ अनुपमज्जन्तौ। सलिलोत्क्षेपणेन सशिरस्कौ स्नात इत्यर्थः। तथा च वक्ष्यति सशिरावमज्ज-

गमनं वर्जयेदिति । अनुपमज्जन्ताविव्येव बौधायनः ॥ केचित्त्वनुपमज्जन्ताविति व्याचक्षते । युक्तायुक्तत्वं तु तस्य सौमिके दर्शयिष्यामः ॥

अन्योऽन्यस्य पृष्ठे प्रधावतः । १६ ।

शोधयतः ॥

काममेते वाससी यस्मै कामयेयातां तस्मै दद्याताम् । नहि दीक्षितवसने भवत इति वाजसनेयकम् । १७ ।

ये वसानावेतत्कर्माकुरुषातां ते वाससी यस्मै कामयेयातामृत्विजे ऽन्यस्मै वा दद्यातां कामम् । न तु सौमिकावभृथवदुदके क्षिपेताम् ॥ को विशेष इति चेत् नहीमे दीक्षितवसने भवतः । ते एव हि न दीक्षितवसनं परिदधीतेति निषेधान्निषिध्येते । इमे तु परिधयत्वाद्दानार्हे एवेति । तत्र त्वाह कात्यायनः पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेदिति ॥

उदयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यसित्वा समिधः कृत्वाप्रतीक्षास्तूष्णीमेत्यैधो ऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते । १८ ।

उदकान्तं तीरसीमाम्यमुदकं प्रत्यसित्वान्तःप्रवेश्य । तत्र त्वाह बौधायनः पराङावृत्तः प्रपदनोदकान्तं प्रत्यस्येदिति । समिधः कृत्वा हस्ते गृहीत्वा अप्रतीक्षाः प्रतिनिवृत्ताः पृष्ठतोऽवभृथमनीक्षमाणाः । तूष्णीं वाग्यताः न सौमिकावभृथवत्सहीयां वदन्त इति ॥ व्याख्यातः

शेषः पत्नी। सर्वमेतत्समानं पत्न्याः। ततः कृतान्तादारभ्येष्टिः संस्थाप्या। तत्रोत्तरे विहारे विष्णुक्रमादि अवेदिसंस्कारत्वात्। समिन्धनं तूभयोराहवनीययोः। तन्त्रेणोपस्थानम्। समानमन्यत्॥

अथ पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम्।१९।

अत्र वरुणप्रघासदेश एव। श्वोभूते पूर्णमास्येष्ट्वा पूर्ववत् प्रस्तुतो दैवेनेत्यादिविधिना केशानां निवर्तनं भवति॥

सर्वं वा वापयेत्।२०।

वरुणप्रघासेषु सर्वं वा केशजातं वापयेत् न तु निवर्तयेदित्यर्थः। अथवा सर्वमिति न केवलं श्मश्र्वादिकेशानपीत्यर्थः॥

मन्त्रादिर्विक्रियते। यद्दर्भः पर्यवर्तयदन्तान्पृथिव्या दिवः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेनेति समानम्।२१।

ऊनमित्यादेः अभिवर्तय इत्यन्तस्य मन्त्रस्य आदिः इयं श्रुतेत्यर्थः। तत्स्थाने यद्दर्भ इत्ययं मन्त्रो निविशते। समानः शेष इत्यर्थः॥

अपि वा स्नात्वोप्ता केशश्मश्रूण्यरण्योरग्नीन्समारोप्योदवसाय निर्मथ्य पौर्णमासेन यजते।२२।

अपि वावभृथे स्नात्वागत्य इष्टिं समाप्य तदानीमेव सर्वं वपनं कृत्वा द्वयोर्द्वयोररण्योर्धार्यानग्नीन्समारोप्य गृहान्गत्वा निर्मथ्य निधाय

तत्र पौर्णमासेन यजेत। नित्यस्वेदाहवनीयो दक्षिणमुत्तरे चिप्रा च समारोपयेत् अपवृत्ते कर्मण्यविभागापत्तेः। अरणिवचनात्समारोपणं निवर्तते ॥

यज्ञो ह वा एष यद्वरुणप्रघासा नह्यवकल्पते यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति वाजसनेयकम्। २३।

सौमिकयज्ञ इव ह्येष यज्ञो यद्वरुणप्रघासाः अवभृथोत्तरवेदिसंयोगात्। अतस्तेषूत्तरवेद्यामग्निहोत्रं नावकल्पते यथा सोमे। तस्मात्तथा नाम वरुणप्रघासाः कार्याः यथोत्तरवेद्यामग्निहोत्रं मध्ये नापतति। कथं नाम कार्या इति चेत् तदपि दर्शितमेव प्राक् यथाग्निभ्यो निनीयाग्नी प्रणयत इति वाजसनेयकमिति सद्यस्काला वा वरुणप्रघासा इति च। नहि तयोः कल्पयोरुत्तरवेद्यामग्निहोत्रमापतति यदहरेवाग्निः प्रणीतस्तदहरेव कर्मापवर्गात्। सद्योऽग्निप्रणयनप्रशंसार्थं चेदमुक्तं न त्वितरकल्पनिन्दार्थं स्वमतेन तस्याकल्पात् तत्रापि वाजसनेयग्रहणाच्च। तेन पूर्वेद्युःप्रणयने जुहुयादेवोत्तरवेद्यामग्निहोत्रम्। उक्तं च पशावेवमन्यत्र विप्रक्रान्ते तन्त्र इति ॥

इत्यष्टमी कण्डिका ।

इति द्वितीयः पटलः ॥

ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य ह्यहं साकमेधैर्यजते। १।

ततश्चतुर्षु मासेष्विति वरुणप्रघासेषु व्याख्यातम्। पूर्वस्मिन्पर्वणीति

वैश्वदेवे। इष्टमिति अहःप्रतिषेधार्थम्। असति हि तस्मिन्महाहविषो वरुणप्रघासकल्पातिदेशेन पक्षे इष्टकालतायां अहःकालतामीर्षा स्यात्। अतो ऽस्य मध्यकालता नियम्यते। साकमेध इति पर्वसमाख्या यत्सोमस्य राजेत्यादिब्राह्मण एव द्रष्टव्या ॥

अग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता । २ ।

कार्त्तिक्यां मार्गशीर्ष्यां वा चतुर्दश्यां प्रागुदयादवसायारम्भः महाहविःषूदवसाननियमात् तदङ्गत्वाचान्यासामिष्टीनां अङ्गाङ्गिनोरेकदेशित्वाच। पृथगग्नयस्तु भवन्ति कालभेदात् बहिस्तन्त्रवर्तित्वाच। साकं सूर्येणोद्यता निरुप्योपसादनान्ते कृते तेष्वेवाग्निष्वग्निहोत्रं हुत्वा ततः प्रोक्षणादि प्रतिपद्यते ॥

साकं वा रश्मिभिः प्रचरन्ति । ३ ।

इज्या वा सहोद्यतो रश्मिभिर्भवति। साकं सूर्येणोद्यता निर्वपतीति श्रुत्यर्थस्य विशयित्वादिति भावः। शाखान्तरीयो वायं विधिः ॥

सिद्धमिष्टिः संतिष्ठते । ४ ।

गतः ॥

मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुम् । ५ ।

बहुदेवतत्वाद्बहुचरुत्वाचाग्नीषोमीयविकारश्चरुः यथाह भारद्वाजः इष्टचरुश्चरुः ऐन्द्राग्नविकारास्तुरुचरुप्रभृतयो ऽग्नीषोमीयविकारा इति। न च मारुतत्वात्कथञ्चन इति शङ्कनीयं सगुणस्य बहुचरुत्वात्।

तथा च भारद्वाजः अक्षरसंख्यायां सगुणो देवताशब्दः संख्यायेतेति॥ लिङ्गं चात्र भविष्यति गृहमेधीयेन॥

न बर्हिरनुप्रहरति। ६।

अनुप्रहरत्येव तु गृहमेधीयस्याबर्हिष्ट्वे। मित्यस्तु प्रस्तरप्रहारः॥

सिद्धमिष्टिः संतिष्ठते। ७।

गतः॥

मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्। ८।

सर्वासां यजमानगवीनामिति शेषः॥

यत्सांतपनस्य बर्हिस्तद्गृहमेधीयस्य। ९।

प्रस्तरस्त्वाहर्तव्यः प्रकृतत्वात्तच॥

अपि वा नेध्माबर्हिर्भवति। न सामिधेनीरन्वाह। न प्रयाजा इज्यन्ते नानूयाजाः। १०।

अपि वेति शब्दात्पचान्तरे सर्वमिध्माबर्हिराद्यविकृतमिति सिद्धं भवति। तत्रेध्माभावादेव सिद्धे न सामिधेनीरन्वाहेति अनुवादो ब्राह्मणानुसारादिति द्रष्टव्यम्॥

अयजुष्केण वत्सानपाकृत्यापर्विचेण गा दोहयति। ११।

अयजुष्कमित्यनेन लौकिकं लक्ष्यते। शाखादिरहितेन लौकिकप्रकारेण वत्सानपाकृत्य शाखापवित्रे कपालधर्मणोपहिते चरावधर्मकं गा दोहयति। चरुश्रपणार्थमित्यर्थः। तथाश्वरकल्पे वक्ष्यति॥

स वै खलु पर्णशाखया वत्सानपाकृत्य पवित्रवति संदोह्य यथैतदमावास्यायां क्रियते तं चरुं श्रपयतीत्येके । १२ ।

स वै खल्विति पक्षान्तरं ब्राह्मणानुसारेण । प्रकृतिवदेव वा पर्णशाखादिधर्मेण वत्सानपाकृत्य शाखापवित्रवत्येव चरौ यथैतत्पयो ऽमावास्यायां क्रियते तथा सधर्मकं संदोह्य तस्मिन्दुग्धे चरुं श्रपयेदित्यर्थः ॥

अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्राणि प्रयुनक्ति । १३ ।

अनिध्माबर्हिःपक्षं सधर्मकदोहपक्षं चाश्रित्य प्रयोग उच्यते सूत्रकृता । अग्नीनन्वाधाय शाखाहरणादिविधिना वत्सानपाकरोति प्रातर्दोहवद्दोहयित्वेति वक्ष्यमाणत्वात् । वेदानन्तरं परिस्तरणनियमेन पौर्णमासतन्त्रतामस्य दर्शयति मा भूत्प्रातर्दोहसंयोगादामावास्यत्वभ्रम इति । ततश्चावगच्छामो ऽग्नीषोमीयविकारः सगुणो मारुत इति ॥ पात्रप्रयोगे चरुदोहयोर्यथार्थ्येनयेनार्थः तानि प्रयुनक्ति ॥

स्थालीं कपालानां स्थाने । १४ ।

परिभाषासिद्धाया अपि स्थाल्याः पुनर्वचनं दोहचर्वाधारत्वेनोभयधर्मत्वोपप्लवे कपालस्थान एव यथा स्यात्मा भूत्कुम्भीस्थान इति ॥

निर्वपणकाले । १५ ।

इति नवमी कण्डिका ।

चतुरो मुष्टीन्निरुप्य बह्वन्वावपति। १।

ऋत्विगमात्यप्राशनपर्याप्तं यथा स्यात्तथा बह्वन्वावपति॥

कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति। ध्रुवो ऽसीति मन्त्रं संनमति। पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति। २।

विस्पष्टार्थं पुनर्वचनम्॥

अधिश्रयणकाले प्रातर्दोहवत्सर्वा यजमानस्य गा दोहयित्वा तस्मिञ्छ्रपयति। ३।

अधिश्रयणकाले प्राप्ते प्रातर्दोहधर्मेण कपालधर्मिकायां स्थाल्यामेव सर्वा गा दोहयित्वा तस्मिन्नधिश्रयणमन्त्रेण तण्डुलानोप्य चरुधर्मेण श्रपयतीत्यर्थः। अधर्मकदोहपक्षे तु यजुरुत्पूते पयसि चरुधर्मेणैव श्रपणम्॥

संप्रैषकाले यदन्यद्धिधार्वर्हिषस्तत्संप्रैष्यति। आज्यग्रहणकाले ध्रुवायामेव गृह्णाति। ४।

गतं॥

प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यान्तर्वेदि विधृती निधाय ध्रुवां स्रुवं* च सादयति। ५।

उत्तरपरिसंख्यार्थमनुक्रमणम्। तेन यावदुक्तमेव कर्म क्रियते॥

* Corrected, the MSS read स्रुचः.

तच वेद्यां पवित्रापिसर्गो मन्त्रेण। आज्यस्थाल्यपि साद्या कार्यवत्त्वात्। सूर्यस्त्वा युनक्त्वित्याध्वर्यवयाजमानयोरपि निवृत्तिः अननुक्रमणात् परिध्यङ्गत्वाच्च। परिधिशेषत्वं च तयोः प्रकृतावेव दर्शितम्॥

एतावसदतामिति मन्त्रं संनमति। ६।

एतावसदतां तौ विष्णो पाहीति स्रुवध्रुवयोर्मन्त्रसंनामः। तथा विष्णवसि वैष्णवं धामासि प्राजापत्यमित्याज्याभिमन्त्रणे जुह्वप्भृतो-राज्याभावात्। तथैव पेठतुः सत्याषाढभारद्वाजौ। केचित्तु प्रकृता-वाज्यस्थाल्याज्यस्याप्यनेनाभिमन्त्रणमिच्छन्तो ऽत्रापि विष्णू स्थो वैष्णवे धामनी स्थः प्राजापत्ये इत्यूहन्ते॥

उद्वासनकाले शरं निधाय यावन्तो यजमानस्यामात्यास्तावत ओदनानुद्धरति। ७।

फेनमिश्रः चरोरग्रिमो ऽंशः शरः। तमुद्वासिताच्चरोरादाय प्रभातं निदधाति। यावन्तो यजमानस्यामात्या इत्यविशेषनिर्देशे ऽपि प्राशनविधौ ये यजमानस्यामात्या ऋत्विक्छिष्टाशा इति संकोचनात् तावन्त एवेहापि ग्राह्याः। अस्तौकाश्च सस्तौका इत्यवचनात्। तावत ओदनान्पृथक्पात्रेषु दर्व्योद्धरति स्थाल्यां चावशिनष्टि। तथा चोत्तरच व्यक्तं भविष्यति॥

अतो भूयसो यदि बहुरोदनो भवति। ८।

यदि प्रभूत ओदनः स्यात्तदातो भूयसो ऽप्युद्धरति। उत्तरच विनियोगः॥

उद्धृतानुत्पूतानलंकृतानभिघारितानासादयति। ९।

दर्भाभ्यां तूष्णीमुत्पूय प्रकृतिवदलंकृत्य पुनस्तूष्णीमभिघार्य प्रियेणे-त्यासादयति॥

दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति। १०।

गृहस्य यदग्रतो गृहान्तरं स प्रतिवेशः। तस्मादृश्याद्गार्हपत्यस्याह-वनीयस्य च दक्षिणाग्निप्रदेशः प्रतिवेशः। तात्स्थ्याच्च तत्र पच्यमान ओदनो गृहमेधीयस्य प्रतिवेश इत्युपचर्यते॥

तं नाभिघारयति। ११।

गतः॥

द्वयोरुद्धरणं वाजसनेयिनः समामनन्ति। दक्षिणा-देव मरुतो गृहमेधिनो यजति। १२।

इति दशमी कण्डिका।

उत्तरस्मात्स्विष्टकृतम्। १।

सर्वार्थं द्वयोरेवौदनयोः पात्रद्वये गृहमेधीयादुद्धरणमित्यर्थः। तदां तु दक्षिणात् दक्षिणत आसादितान्॥

ओदनयोर्निम्ने कृत्वा तत्राज्यमानीय तत आज्यार्था-न्कुरुत आज्यस्थाल्या वेति वाजसनेयकम्। २।

निम्ने अवटौ॥

**एवं कुर्वन्न ध्रुवायां गृह्णीयात् । ३ ।**

ध्रुवायां गृहीतस्य निर्ऋतेरानयननिरासार्थं वचनम् ॥

**आज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य सर्वतः समवदाय मरुतो गृहमेधिनो यजति । ४ ।**

अथ वेदनिधानादि होतृषदनान्तं कृत्वा वेदेनोपवाज्याग्नीदग्निं त्रिः संमृड्ढीति संप्रैषः । संमार्जनं च स्फ्येन केवलेन सस्फ्यैर्वा लौकिकैर्दर्भैः यथोक्तं भारद्वाजेन चोद्यमाने कर्मणि द्रव्यमुत्पादयेत् यथा गृहमेधीये ऽग्निसंमार्जनानीति । प्रवरस्तु विनेध्मसंनहनवेदिस्तरणाभ्यां स्यात् अनत्साध्यत्वात् । ततस्त्वाज्यभागाभ्यां स्विष्टकृतश्चान्याः प्रागूर्ध्वं च प्रधानादङ्गाकृतया निवर्तन्ते। कस्मात् । आज्यभागौ यजति अग्निं स्विष्टकृतं यजतीत्युभयविधानेनेतरासामपि परिसंख्यानात् ॥ सर्वतः सर्वेभ्य ओदनेभ्यः । सर्वेषु चावदानधर्माः प्रकृतिवत् ॥ स चायं प्रयोगक्रमः स्वयमेव व्यक्तमनुक्रान्तो भारद्वाजेनेति द्रष्टव्यम् ॥

**सर्वेषामुत्तरार्धात्सकृत्सकृदवदायाग्निं स्विष्टकृतम् । ५ ।**

यजतीत्यन्वयः । नाग्निष्ठनिवृत्तिर्व्याख्याता ॥

**न प्राशित्रं न यजमानभागम् । ६ ।**

अवद्यतीत्यध्याहारः सामर्थ्यादिडान्तत्वात्तन्त्रस्य । तयोः प्राशनस्याभावादिति भावः । प्राशित्रपूर्वत्वे त्ववदानद्वारा तत्प्राशनस्यैव वाचनिको निषेधः ॥

**इडान्तः संतिष्ठते । ७ ।**

गतः ॥

ये यजमानस्यामात्या हविरुच्छिष्टाशास्त ओदनशेषान्प्राश्नन्ति। ऋत्विजो ऽन्ये वा ब्राह्मणाः। ८।

हविरुच्छिष्टाशाः वैश्वदेवशिष्टाशिनः यजमानभाण्डोपजीविनः पुत्रपौत्रादय इति यावत्। तथा यजमानस्य गृह्या हविरुच्छिष्टाशा इत्येव कात्यायनः। ते सयजमानाः प्राश्नन्ति। यदि प्रभूत ओदनः स्यादृत्विजो ऽन्ये वा ब्राह्मणाः प्राश्नीयुरित्यर्थः। स्पष्टं चैतद्भारद्वाजीये यथामात्येभ्य ओदनानुद्धरन्ति यावन्तो हविरुच्छिष्टाशा भवन्ति ततो ऽन्ये ऽपि प्राश्नीयुर्यदि प्रभूत ओदनः स्यादिति। पत्न्यप्यत्र प्रतिवेशात्प्राश्नीयात्॥

प्राश्नन्ति ब्राह्मणा ओदनं यः स्थाल्याम्। ९।

प्राश्नन्ति ब्राह्मणा ओदनमित्यस्य ब्रह्मौदनवद्व्याख्या। स्थालीस्थं हविःशेषमृत्विज एव प्राश्नन्तीत्यर्थः॥

सुहिता एतां रात्रिं वसन्ति प्रतीता अनवर्तिमुखिनः। १०।

सुहिताः सृष्टाशनेन तृप्ताः। प्रतीताः मिथः संगताः। अनवर्तिमुखिनः अवर्तिर्दारिद्र्यं क्षुद्वा यथा अवर्त्या शुन आन्त्राणि पेच इत्यादौ। मुखशब्देन तु तत्कार्यं लक्ष्यते। अवर्तिवचनरहिताः कर्मण्ववादानकुर्वन्त इत्यर्थः॥

प्रतिवेशा अपि पचन्ते। ११।

महानसपाचकास्त्विह प्रतिवेशा विवक्षिताः विहारप्रतिवेशभूतमहानसवर्तित्वात्। ते ऽप्योदनान्पचन्ते सर्वेषां सृष्टाशनार्थम्॥

गा अभिघ्नते। १२।

गाश्च ते ऽभिघ्नन्ति व्यञ्जनार्थम्॥

आञ्जते ऽभ्यञ्जते। १३।

अमात्या इति शेषः॥

अनु वत्सान्वासयन्ति। १४।

सर्वामेतां रात्रिं यजमानस्य वत्सान्मातृभिरनुवासयन्ति। ते पयः पायंपायं मातृभिः सह वत्सा वसन्तीत्यर्थः॥

अनिष्कासितां स्थालीं निदधाति। १५।

निष्कासनं निष्कषणम्। बिलजठरलग्नमोदनशेषमनिष्कृष्टं भवतीत्यर्थः॥

अप्रमृष्टं दर्व्युदायुवनमन्ववदधाति। १६।

दर्व्या उदायुवनं दर्व्युदायुवनं येन प्रदेशेन तण्डुलाः पक्तिसाम्यार्थं विक्रियमाणा उदायूयन्ते। सर्वं दर्व्यन्तमित्यर्थः। तदप्यमृष्टलेपमेव स्थाल्यामवदधाति॥

पराचीनरात्रे ऽभिवान्याया अग्निहोत्र्यै च वत्सौ बध्नाति। १७।

पराचीनरात्रे अपररात्रे। अभिवान्यमभिवननीयं वत्साकरं यस्याः साभिवान्यवत्सा या मृतवत्सा वत्सान्तरेण दुह्यत इति यावत्। तस्या वत्सं मातृसमीपादपाकृत्य बध्नाति पितृयज्ञहविरर्थम्॥ तथाग्निहोत्र्या वत्सं यदि पयसाग्निहोत्रं भवति॥

व्युष्टायां पुराग्निहोत्रात्पूर्णदर्व्येण चरन्ति। हुते वा। १८।

पूर्णदर्विसंबन्धात् पौर्णदर्वमिति कर्मनाम। पुराग्निहोत्राद्धुते वेत्यनुदितहोमविषयं व्युष्टायां चरन्तीति वचनात् साकं सूर्येणोद्यतेत्युत्तरस्य कर्मणः कालवचनात्॥

शरनिष्कासस्य दर्वीं पूरयित्वर्षभमाहूय तस्य रवते* पूर्णा दर्वि परापतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात्। १९।

स्थाल्या दर्व्युदायुवनस्य च लेपो निष्कासः। तेन शरेण च दर्वीं पूरयित्वा यजमानस्य ऋषभं स्वनाम्नाहूय तस्य रवते* रवे सति गार्हपत्ये जुहुयात्। नाहवनीयप्रणयनं अर्थाभावात्। ऐन्द्री त्वाहुतिः इन्द्रस्य निष्कासं निदध्यादिति श्रुतेः॥

यद्यृषभो न रूयाद्ब्रह्मा ब्रूयाज्जुहुधीति। २०।

गतः॥

यस्य रवते* जुहोति तां दक्षिणां ददाति। २१।

यस्य रवते* जुहोतीति वचनात् यदा न रूयात्तदा न ददाति॥

मरुद्भ्यः क्रीडिभ्यः स्वतवद्भ्यो वा पुरोडाशं सप्तकपालं निर्वपति। साकं सूर्येणोद्यता साकं वा रश्मिभिः प्रचरन्ति। सिद्धमिष्टिः संतिष्ठते। २२।

पन्थो ऽयमानीनत्वतेन व्याख्यातः॥

इत्येकादशी कण्डिका।

**ततो महाहविषस्तन्त्रं प्रक्रमयति । १ ।**

महाहविर्नाम साकमेधानां प्रधानेष्टिः तत्रैव पञ्चसंचराणामुपदेशात् सामनामादिधर्माणामुपदेशाच्च । तत्र महाहविरिति पुनःसमाख्यानात् साकमेधीयं हविरिदमेषाम् । महाहविषं हविरिदमिति विकल्पते ॥

**तस्य वारुणप्रघासिकेनोत्तरेण विहारेण कल्पो व्याख्यातः । २ ।**

एतद्ब्राह्मण ऐन्द्राग्न इति श्रुतेरिति भावः । वक्ष्यति च ऐन्द्राग्नतुषानपसु प्रतिपादयतीति । तत्र वरुणप्रघासकल्पातिदेशान्नित्यमुदवसानम् । तच्च दर्शितमेवानीकवते । तथोत्तरविहारग्रहणान्नित्योत्तरवेदिः । नित्यं च पाशुकं प्रणयनम् ॥

**निर्वपणकाल आग्नेयमष्टाकपालमित्यष्टावुत्तराणि हवींषि निर्वपति । ३ ।**

पञ्चसंचरेभ्य ऊर्ध्वमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालं निर्वपति । तत्र नानाबीजधर्मैणैन्द्राग्नं पृथङ्निरुप्यावहत्य तुषानप्रज्ञातान्निदधाति । तेषां पृथक्प्रतिपाद्यत्वात्प्रेषणादयस्तु संसृज्यैव क्रियन्ते ॥

**ऐन्द्रस्य चरोः स्थान इन्द्राय वृत्रघ्ने चरुमेके समामनन्ति ॥ अग्ने वेर्होत्रं वेर्दूत्यमवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी । स्विष्ट-**

ऋदिन्द्राय देवेभ्यो भव जुषाणो अस्य हविषो घृतस्य वीहि स्वाहेति स्रुच्यमाघारयति॥ वागस्याग्नेयीत्यनुमन्त्रयते यजमानः। ४।

गताः॥

सहश्च सहस्यश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति। धेनुर्दक्षिणर्षभो वा प्रवयाः। इदावत्सरीणां स्वस्तिमाशास्त इति। दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते। एवं यजमानो जपति। आशास इति मन्त्रं संनमति। ५।

व्याख्यातं प्राक्॥

ऐन्द्राग्नतुषानप्सु प्रतिपादयति। ६।

अवभृथस्य तु काले तूष्णीमैन्द्राग्नतुषानप्सु क्षिपति॥

सिद्धमिष्टिः संतिष्ठते। ७।

ततः कृतान्तादारभ्येष्टिं समापयेत्॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

तदानीमेव पितृयज्ञस्य तन्त्रं प्रक्रमयति । १ ।

यदैव महाहविः संतिष्ठते तदानीमेव प्रक्रमयति ॥

वेदं कृत्वाग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुः-स्रक्तिं वेदिं करोति । २ ।

अग्नीन्विहृत्य वेदं कृत्वा शौल्बेन विधिना विस्तारत आयामतश्च यजमानमात्रीं चतुरश्रां वेदिं करोति ॥

प्रतिदिशं स्रक्तयोऽवान्तरदेशान्प्रति मध्यानि । ३ ।

स्रक्तयः कोणाः । ते महादिक्षु भवन्ति । कोणदिक्षु मध्यानि ॥

उद्धता खाता भवति । ४ ।

अपारररुमित्युद्धन्ति । न देवस्य सवितुः सव इति खनति ॥

न प्राची वेदिरुद्धत्या । पितृयज्ञो हि । न दक्षिणा । यज्ञो हि । उभे दिशावन्तरोद्धत्या । उभये हि देवाश्च पितरश्चेज्यन्त इति विज्ञायते । ५ ।

वेदिः प्रागपवर्गा नोद्धननीया । कुतः । पितॄणां यज्ञो ह्ययम् । न च दक्षिणोद्धत्या । कुतः । यज्ञो ह्ययं न केवलं पित्र्यः ॥ कथं तर्ह्युद्धननीया । प्राचीं च दक्षिणां चान्तरा कोणदिशं प्रत्युद्धत्या उभयात्मकत्वात् । कथमस्योभयात्मकत्वमिति चेत् तच्छ्रुतिरेव ब्रूते उभये हि देवाश्च पितरश्चेज्यन्त इति । के देवा इज्याः के च पितर

इति चेत् प्रयाजादिभिरिज्या देवाः प्रधानहविर्भिः पितर इति केचित् । तदसन्दं प्रधानविषयतयैवोभयत्वश्रुतेः यथा उत्तरत एवोपवीय निर्वपेदुभये हि देवाश्च पितरश्चेज्यन्त इति । अतो य एव प्रधाना इज्यास्त एव पितृरूपा देवरूपाश्चेति मंगिरामहे ॥ तत्रोद्धननेनैव वेदिसंमार्गादयो ऽपि व्याख्याता भवन्ति ॥

**ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान्संनमति । यथा भवति पृथिवि देवपितृयजनीति । ६ ।**

यतश्चैवमुभयविधा इज्यास्ततस्तु मन्त्रेषु ये देवशब्दा देवतापराः ते देवपितृशब्दविकारयुक्ताः प्रयोक्तव्याः । यथा पृथिवि देवपितृयजनि देवानां पितॄणां परिषूतमसि कर्मणे वां देवेभ्यः पितृभ्यः शकेयमित्यादि ॥ तत्रैतल्लिङ्गतयैवोदाहृतं देवेभ्यः पितृभ्य इतीति । यथा अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति श्रुत्या प्रदर्शितं तथा संनमतीत्यर्थः ॥ ये त्वदेवतापरा देवशब्दास्तान्न संनमति यथा बधान देव सवितरित्यादि । ये चाङ्गदेवतापरास्तानपि न संनमति देवानामेव तत्रेज्यत्वात् देवो यजेति लिङ्गाच्च ॥

**अविकारो वा परवाक्यश्रवणात् । ७ ।**

अविकारो वा सर्वमन्त्रेषु । कुतः । परार्थे ऽत्र हि परे वाक्ये तदुभये हि देवाश्चेत्यादिवाक्यस्य श्रवणात् । इमां दिशं वेदिमुद्धन्ति उत्तरत एवोपवीय निर्वपेदित्यादेर्वेद्युद्धननादिविधिपरवाक्यस्य हि शेषतया श्रुतमेव तद्वाक्यम् । अतस्तत्स्तुतिपरत्वान्नार्थे प्रमाणम् । न

चानूहे मन्त्रवर्णविरोधः पितॄणामपि दैवतत्वादिति ॥ अथापरा व्याख्या। परार्थे अपूर्वप्रैषविधिपरे ऽग्नये देवेभ्य इत्यादिवाक्ये पितृशब्दश्रवणान्नह्येतद्देवशब्दसंयुक्तमन्त्रविकारे प्रमाणमवकल्पते प्राकृते ऽस्मिन्मन्त्रे देवशब्दस्याभावात्। तस्मादविकार इति ॥ यस्तु ब्रूयात् पृथिवि देवयजनीत्यादौ परार्थे वेदिस्तुतिपरे वाक्ये श्रवणात् असमवेताभिधायिनो देवशब्दस्याविकार इति कस्मान्न व्याख्यातमिति। प्रतिब्रूयादेनं देवानां परिषूतमसीत्यादिषु समवेताभिधायिषु विकारप्रसङ्गात् सर्वमन्त्राविकारप्रतिज्ञावचनाच्चेति ॥ न च द्रव्यदेवतासंबन्धप्रतिपादनादन्यार्थत्वं परवाक्यत्वमिति वाच्यं तथापीदं देवानामिदमु नः सहामुष्याहं देवयज्ययेत्यादौ प्रसङ्गात्। तस्मादुक्त एवार्थः साधीयान् ॥

**प्रागुत्तरात्परिग्राहात्कृत्वा दक्षिणाग्नेरग्निमाहृत्य मध्ये वेद्या उपसमादधाति। ८।**

गतः ॥

**एतस्मिन्पितृयज्ञ आहवनीयकर्माणि क्रियन्ते। ९।**

पितृयज्ञे यान्याहवनीयकर्माणि तान्येतस्मिन्नग्नौ क्रियन्ते। यत्त्वन्यदग्निहोत्राद्यन्तरापतितं तदाहवनीय एव क्रियते ॥

**अग्नीनन्वाधायेध्माबर्हिराहरति। १०।**

गतः ॥

**समूलं बर्हिर्दाति। ११।**

खात्वापि ध्रुवं मूल एव लुनाति न चोत्पाटयति दातीति वचनात्। तत्र मूलं ते गाध्यासमिति मन्त्रं विकुर्वन्ति। नात्र प्रस्तरो ग्राह्यः तस्योत्तरत्रवचनात् ॥

उपमूललूनं वा । १२ ।

बर्हिर्भवतीति शेषः ॥

वर्षीयानर्थादिध्मो द्राघीयांश्च । १३ ।

अर्थ इत्यर्थलक्षणपरिमाणः प्राकृत इध्मो लक्ष्यते तद्व्याख्या च तत्रैव दर्शिता। तदयमर्थः। प्राकृतादिध्मादयं प्रकृष्टः स्थौल्यायामाभ्यां भवतीति। तथा च द्राघीयः प्राकृतादिति भत्याख्याः। श्रुतिश्च भवति वर्षीयानिध्म इध्माद्भवति व्यावृत्त्या इति॥ तत्र परिधिद्विलकल्प विंशनिधा द्वौ परिधी इति मन्त्रसंनामः ॥

अग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्रप्रयोगः । १४ ।

तत्राग्निहोत्रहवण्या सह कुम्भः प्रयोज्यः षड्भिः कपालैः सह भर्जनार्थं कपालं पात्रीस्थाने द्वे पात्र्यौ शरावश्चेति विशेषः। यावदुक्तमेव परस्मिन्कर्मणि पित्र्यधर्मकमिष्टं ततोऽन्यत्सर्वं प्रकृतिवद्भवतीति द्रष्टव्यम् ॥

निर्वपणकाले सर्वतो वेदिं परिश्रित्योत्तरेण द्वारं कृत्वा दक्षिणतः प्राचीनावीती हवींषि निर्वपति। उत्तरतो वा। यज्ञोपवीती सोमाय पितृमत इति यथासमाम्नातम् १५ ।

उत्तरस्यां स्रक्त्यां द्वारं कृत्वा परितो वेदिं कटादिभिर्वेष्टयित्वा ततो ऽपरेण गार्हपत्यमवस्थिताच्छकटात्पात्र्या वा तयोरेव दक्षिणतो निर्वपति। दक्षिणार्धाच्छकटस्येत्यपरम्। तथोत्तरत इति॥ यथासमाम्नातं सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्यो ऽग्निष्वात्तेभ्यो मन्थं चेति त्रीणि। यवमयाः सर्वे यवान्संयुत्येत्युत्तरत्रानुवादात अग्नीषोमीयविकाराश्च। तेन पौर्णमासतन्त्रं भवति॥

अथैकेषाम्। सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालं* पितृभ्यो ऽग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते। १६।

आज्यमुपांशुयाजधर्मकम्। मन्थस्त्वाग्नेयविकारः। समानमन्यत्। मन्थदेवतास्मिन्पक्षे विकल्पन्ते अग्निः कव्यवाहनः यमः केवलः सगुणश्चेति॥

उदकुम्भः प्रोक्षणीभाजनं भवति। १७।

कुम्भ एव प्रोक्षण्यः संस्क्रियन्ते स्थाप्यन्ते च॥

प्रोक्षण्युदकेन यवान्संयुत्य त्रिष्फलीकृतांस्तण्डुलान्विभागमन्त्रेण विभज्य धानार्थान्निधायेतरान्पिष्टानि कृत्वा दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपधाय दक्षिणाग्नौ प्रथमेन कपालमन्त्रेण धानार्थं कपालमधिश्रयति। १८।

* The MSS read षट्कपालः, but the following accusative मन्थं requires षट्कपालं

उद्रेकः शेषजलम् । तेन यवान्मिश्रयित्वावहन्ति । ततः प्राक्कृष्णाजिनादामाल्हत्वा त्रिभागस्यावृता पुरोडाशार्थान्विभज्य पिनष्टि । कपालमधिश्रयति उपदधातीत्यर्थः ॥

अधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानोप्य बहुरूपा धानाः करोति । १९ ।

बहुवदूहोऽधिश्रयणमन्त्रस्य बहुवदुत्पत्तेर्धानानां मन्त्रसमवाये ऽपि बहुत्वाविशेषाच्च किं च तण्डुलानोप्येति वचनात् तेषां बहुत्वाच्च । बहुवदेवोहस्तु धानाम् न्याय्यः । अन्ये तु हविर्द्वित्वादि्द्वित्वादूहन्ति ॥ तत्र प्रथनादीन्यर्थलुप्तानि निवर्तन्ते । पर्यग्निकरणं तु स्वेनाग्निना क्रियते ॥ पाकविशेषेण शुक्लकृष्णादिभावात् बहुरूपा भवन्तीत्यर्थः अहोरात्राणामभिजित्या इति लिङ्गात् ॥

विदह्यमानाः परिशेरत इति विज्ञायते । २० ।

ताः प्रथमभीषत्पक्काः सन्त्यो ऽत्रैवोद्वासनाद्दह्यमानाः परिशेरते न तु विदाहभयात्तदानीमेवोद्वासयेदित्यर्थः । तथा च भारद्वाजः ता अत्रैव विदह्यमानाः परिशेरत आ हविषामुद्वासनादिति ॥

इति त्रयोदशी कण्डिका ।

संप्रैषकाले पत्नीवर्जं संप्रेष्यति । १ ।

पत्नीकार्यं सर्वमपि निवर्तते न पत्न्यन्वास्त इति श्रुतेः । गार्हपत्यमौनाज्यमवेक्षत इति सत्याषाढः ॥

आज्यग्रहणकाल उत्तरेण गार्हपत्यं चतुर्गृहीतान्याज्यानि गृह्णाति ।२।

चतुर्गृहीतान्याज्यानीत्ययमवभृथे व्याख्यातः। उत्तरेण गार्हपत्यमाज्यं प्रत्याहृत्य गृह्णाति ॥

प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते ।३।

गतः ॥

स्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन्पर्येति ।४।

प्रस्तरकर्मवर्जमा स्तरणात्कृत्वा सर्वं बर्हिरादाय सर्वां वेदिं त्रिर्मन्त्रेण संस्तृणन्प्रसव्यं पर्येति। अवशिनष्टि च मुष्टिम् ॥

औडवान्धारयमाणस्त्रिरस्तृणन्प्रतिपर्येति ।५।

स्तरणार्थमुद्धूयमाने बर्हिषि येऽवशिष्टास्त औडवाः ॥

औडवः प्रस्तरः ।६।

औडवमय एव प्रस्तरो भवेत् ॥

प्रस्तरस्य ग्रहणसादने तूष्णीम् ।७।

तमेव प्रस्तरमस्मिन्काले तूष्णीं गृहीत्वा तस्मिन्पवित्रे अपिसृज्य सादनकाले तूष्णीमेवासादयति ॥

न विधृती ।८।

गतः ॥

**द्वौ परिधी परिदधाति । ६ ।**

कौ द्वौ ॥

**मध्यमोत्तरौ । १० ।**

तेन द्वौ परिधी परिदधातीति ब्राह्मणव्याख्येयमिति द्रष्टव्यम् । याजमाने तु परिधी दधामीत्यूहः । तथाग्नेत्परिधी यज्ञस्य पाथ उपसमिद्धि यजमानं प्रयतमित्यूह्यानि ॥

**सर्वान्वा । ११ ।**

गतः ॥

**यदि सर्वानावाहनकाले परिधींरपोर्णुवति वाभिज्ञाय दक्षिणं मध्यमे परिधावुपसमस्येत् । १२ ।**

सर्वपक्षे त्वावाहनकाले वा सोमस्य पितृमतः पुरोऽनुवाक्यायां परिधींरपोर्णुवति शब्दं श्रुत्वा वा दक्षिणमपि मध्यमेन सह निदध्यात् ॥

**उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति । १३ ।**

धानास्वभिमन्त्रणादिमन्त्राणां बहुवदूहः पूर्ववत् तथा धाना उद्वास्येति वचनाच्च । तत्रोद्वासनमन्त्रस्याद्ययोः पदयोर्लिङ्गविरोधाल्लोपः न वा प्रथमपदस्य चोदितप्रयत्नाभावेऽपि पच्यमानानां प्रयत्नसंभवात् । तथा चरुपरिवापयोरपि द्रष्टव्यम् । धानामुद्वास्य विभज्य

याः पितॄणां बर्हिषदां ता द्वितीयस्यां पात्र्यां तूष्णीं प्रतिष्ठाप्याज्येन मिश्रयति ॥

अर्धाः पिष्टानामाहृता सक्तून्कृत्वाभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेषुशलाकयेषुकाण्डेन वा दक्षिणामुखस्त्रिः प्रसव्यमनारभ्योपमन्थति। १४।

अभिवान्या व्याख्याता काण्डशलाके च। तस्या दुग्धस्यार्धशरावे शरावार्धपरिमिते दुग्धे सक्तूनोप्य तस्मिन्निषुकाण्डं शलाकां वा रज्ज्वा बद्धावधाय मावादनन्वारभमाणो रज्ज्वा मन्थति ॥

शलाकास्थं मन्थं कृत्वैकैकशो हवींष्यासादयति ।१५।

अथ धानालंकरणे देवो वः सविता हृस्वयः स्येत्यूहः। शलाकास्थं मन्थं कृत्वा यथा शलाकायां मन्थस्तिष्ठति तथा शलाकां शरावे क्षिपेदित्यर्थः। हविषामासादने प्रियेणेत्यावृत्तिः ॥

दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते। १६।

कशिप्वादि व्याख्यातं पिण्डपितृयज्ञे ॥

अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यति। १७।

प्राकृतस्यायं संप्रैषस्य प्रत्याम्नायः न तूहः ॥

एकां सामिधेनीं त्रिरन्वाह। उशन्तस्त्वा हवामह इत्येताम्। १८।

होतेति शेषः॥

एकामनूयाजसमिधमवशिष्य समश इध्मं त्रैधं विभज्य त्रिरादधाति। १९।

त्रैधमिति विस्पष्टार्थम्॥

समानमा प्रवरात्। २०।

गतः॥

नार्षेयं वृणीते न होतारम्। २१।

अग्निर्देवो होतेत्यादि मानुषान्तं निवर्तते॥

आश्राव्याह सीद होतरिति। एतावान्प्रवरः। २२।

इत्यध्वर्युराश्रावयाश्राव्यार्षेयस्थाने सीद होतरित्येतावदाह। तत्रार्षेयाभावात् देवाः पितर इत्यस्य निवृत्तिर्यजमान एव दर्शिता॥

अपबर्हिषः प्रयाजानिष्ट्वा जीववन्तावाज्यभागौ यजति। २३।

तौनिष्ट्वा पञ्चमार्थमर्धमौपभृतस्य समानयते॥

आ नो अग्ने सुकेतुना रयिं विश्वायुपोषसम्। मार्डीकं धेहि जीवसे॥ त्वं सोम महे भगं त्वं यून ऋतायते। दक्षं दधासि जीवस इति जीववन्तौ। २४।

गतः॥

अत्र वेद्याः परिश्रयणमेके समामनन्ति । २५ ।

निर्वपणकाले ऽत्र वा परिश्रयति ॥

इति चतुर्दशी कण्डिका ।

विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्यृत्विजः । विपरिहरन्ति स्रुचो हवींषि परिश्रयणानीति । १ ।

अथ सर्वे यज्ञोपवीतकृतानां वाससां सूत्राणां वा ग्रन्थीन्विस्रस्य प्राचीनावीतानि कृत्वा ग्रथ्नीयुः । व्यत्ययेन परिक्रामन्ति च । ये दक्षिणतस्त उत्तरतो गच्छन्ति ये तूत्तरतस्ते दक्षिणत इत्यर्थः । तत्राग्रेणाहवनीयं पितृयज्ञस्य संचरो भवतीति भारद्वाजः ॥ ऋत्विग्ग्रहणं यजमानस्याप्युपलक्षणं ब्रह्मयजमानावित्येक इति लिङ्गात् ॥ तथा स्रुगादीन्यपि व्यत्ययेन हरन्ति । तत्र स्रुग्घविषोर्विपरिहरणमेव दर्शयति ॥

दक्षिणेन जुहूमुपभृतं सादयति । दक्षिणेनोपभृतं ध्रुवां दक्षिणेन पुरोडाशं धानास्ता दक्षिणेन मन्थम् । २ ।

एवं कृत्वा परिश्रयणेषु पौरस्त्यं पश्चाद्धरति पाश्चात्त्यं च पुरस्तात् । एवं दाक्षिणात्योदीच्ययोर्मिथः ॥

समानत्र जुहूपट्कपालौ । ३ ।

जुहूः पुरोडाशश्च सर्वकालमेकत्रैव स्थाने भवतः ॥

ब्रह्मयजमानावित्येके। ४।

ब्रह्मयजमानौ वा समानत्र भवतः जुह्वुपभृत्पालौ तु विपरिहरन्त्ये-वेत्यर्थः॥

षडवत्तः पञ्चावत्तिनां पञ्चावत्तश्चतुरवत्तिनाम्। ५।

याग इति शेषः॥

संभिन्दन्पुरोडाशस्यावद्यति। ६।

संभेदः संकरः। प्रकृतिवदवदानदेशानां नासंकरो भवतीत्यर्थः॥

द्विः प्रथमस्यावद्येत्पञ्चावत्तिनः। ७।

त्रिष्वपि वक्ष्यमाणेषु यागेषु प्रथमाद्धविषो द्विरवद्येत्पञ्चावत्तिनः षडवत्तत्वाय॥

जुह्वामुपस्तीर्य सोमाय पितृमते ऽनु स्वधेति संप्रे-ष्यति। ८।

अनु स्वधेत्यनुवाक्यां संप्रेष्यति॥

सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य। ९।

त्रिभिरेतैरवदानैरुपस्तरणाभिघारणाभ्यां च चतुरवत्तिनः पञ्चावत्तं संपद्यते। पञ्चावत्तिनः षडवत्तत्वं प्रथमस्य द्विरवदानादिति द्रष्टव्यम्। तच्च मध्यादेव सकृत्सकृदवदानं यागत्रये ऽपि। प्रत्यभिघारणं तत्त-याग एव भवति॥ धानामु तु मा भेः संविक्थाः मा ते हिंसिषुरिति पदानां सङ्कद्दृहः यथा मा भेष्ट संविशिध्वं मा वो हिंसिष्टेति। केचित्तु भरतमुद्धरतेमनुषिञ्चतेति च कुर्वन्ति॥

दक्षिणतो ऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुख-स्तिष्ठन्नो स्वधेत्याश्रावयति । १० ।

दक्षिणतो ऽवदाय दक्षिणतः स्थित इत्यर्थः । तत्राश्रावयेत्यस्य स्थाने स्वधाकारः । तेनो श्रावयेति पक्षे ओ स्वधेति भवति ॥

अस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तं स्व-धेति संप्रेष्यति । ये स्वधामह इति यजति । स्वधा नम इति वषट्करोति । ११ ।

गताः ॥

स्वधाकारं तु प्रतिषिध्य बह्वृचवाजसनेयिनामाश्रुत-प्रत्याश्रुतान्येव विदधाति । १२ ।

श्रुतिरिति शेषः ॥

द्वे पुरोऽनुवाक्ये अन्वाह । १३ ।

सर्वेषु यागेषु द्वे द्वे अन्वाह ॥

ऋचमुक्त्वा प्रणौति । अपरामुक्त्वा प्रणौति । १४ ।

द्वयोरप्यनुवाक्ययोः प्रणवः कार्य इत्यर्थः ॥

त्वं सोम प्रचिकित इत्येता आम्नाता भवन्ति । १५ ।

याज्यानुवाक्या इति शेषः ॥

एका याज्या । १६ ।

याज्यास्त्वेकैका भवन्ति ॥

अग्निष्वात्ताः पितर इत्येषा ॥ ये अग्निष्वात्ता ये ऽनग्निष्वात्ता अंहोमुचः पितरः सोम्यासः । परे ऽवरे ऽमृतासो भवन्तो ऽधिब्रुवन्तु ते अवन्त्वस्मान् ॥ वान्यायै दुग्धे जुषमाणाः करम्भमुदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदाना इन्द्रवन्तो हविरिदं जुषन्तामिति पितृभ्यो ऽग्निष्वात्तेभ्यः । १७ ।

गतः ॥

उपांशु परिश्रिते पितृयज्ञेन चरन्ति । १८ ।

पुनःपरिश्रितवचनमादरार्थम् ॥

एतेनैव कल्पेन पितॄन्बर्हिषदो यजत्यग्निष्वात्तान । १९ ।

यो ऽयं सोमस्य पितृमतो याग उक्तः स्वधाकारोदगतिक्रमणादि-रेतेनैव पितॄन्बर्हिषदो यजति पितॄनग्निष्वात्तांश्चेत्यर्थः ॥

अग्निं कव्यवाहनं स्विष्टकृदर्थे यजति । २० ।

एतेनैव कल्पेनेत्येव तस्यापि पितृत्वाविशेषात् । तत्राग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति तु कल्पान्तरकाराः । यदा त्वग्नये कव्यवाहनाय मन्त्रः तदापि स्विष्टकृदर्थे द्वितीयो ऽग्निः कव्यवाहनो भवत्येव ॥

यां देवतां यजेत्तद्धविषः प्रथममवदानमवद्यति । २१ ।

इज्यमानायै देवताया हविषः प्रथममवदाय तत इतराभ्यामुत्पत्तिक्रमेणावद्यति ॥

**स चावदानकल्पः। २२।**

पुरोडाशेज्यायामुक्तस्त्रिभ्यो ऽवदानकल्पः स एवोत्तरयोरपि हविषो-रित्यर्थः। यदा तु सोमाय पितृमत आज्यं तदा पञ्चगृहीतेन चतुर्गृहीतेन वा ध्रौवेण सोमं पितृमन्तमिष्ट्वा ततो ऽनयैवावृता हविर्भिर्यजति ॥

**मन्थ इडामवद्यति मन्थं वैव। २३।**

इडावदानकाले मन्थे किंचिदिडामवद्यति सर्वमेव वा मन्थमित्यर्थः। यथा षडाद्यानीडामवद्यति षड्भ्यो वेत्यादि तथा मन्थादिडाम-वद्यति॥ मन्थं वेत्येव कल्पान्तरकाराः। तत्रैव मन्थे इतराभ्यां हविर्भ्यामिडामवद्यति। मन्थमेव वा केवलं नेतरे हविषी इत्यपरे। तच्च नितरयोर्हविषोरिडाभ्रंशनेन दोषः॥

**मन्थं होत्र आदधाति। २४।**

अवघ्रेण सर्वभक्षा इति वक्ष्यति। तेनोपहूतामिडां मन्थवर्जं भक्षण-मन्त्रेणावधाय ततो मन्थांशं होतृहस्त आदधाति॥

**तं होतावजिघ्रति। २५।**

इति पञ्चदशी कण्डिका।

**ब्रह्माध्वर्युरग्नीद्यजमानश्च। १।**

तं होतृहस्तस्थमेव यथोक्तेन क्रमेणावजिघ्रन्ति। तेनैव मन्त्रेण ततः प्रस्तरे मार्जयन्ते॥ अथवा प्रतिपन्यन्तरमेतदवशेषिकं मन्थस्य। स

लिङ्गाद्येव:। तथोत्कर्षमप्यस्य पचे वृश्यति। अत्रैके भक्षणेत्यादिना। सत्याषाढस्त्वाह मन्थमवघ्राणार्थं परिश्रिष्येडामिति। तेन मार्जनान्ते तूष्णीमवजिघ्रन्ति प्राशित्रावघ्राणे लब्धवनयनमन्त्रो ऽर्थलोपनिवृत्त:। प्राशननाभ्यभिमर्शनमन्त्रावपि लिङ्गविरोधादित्येके॥

अपि वा न यजमानः।२।

गत:॥

समशो वा प्रतिविभज्यावघ्रेण भक्षयित्वा बर्हिषि लेपान्निमृजन्ते।३।

विभज्य वा मन्थं स्वंस्वमंशमादायावजिघ्रन्ति॥

उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन्पर्येति।४।

वेद्यां सादितमुदकुम्भमादाय परिषिञ्चति। मन्त्रस्त्वन्त:॥

निधाय कुम्भमया विष्ठा जनयन्कर्वराणीति त्रिरपरिषिञ्चन्प्रतिपर्येति।५।

निधायैव कुम्भमपरिषिञ्चन्प्रतिपर्येति न तु हस्तस्थकुम्भमित्यर्थ:। नन्वेवं-मसंभवादेवापरिषेकसिद्धेरनर्थक: प्रतिषेध:। सत्यमनर्थक:। तथापि लौकिक एवायमुक्तिप्रकारो वैचित्र्याय कृत इत्यलमतिनिर्बन्धेन॥

हविःशेषान्संश्लोम्नाय* पिण्डान्कृत्वा तिसृषु स्रक्तिषु

* Thus all MSS., instead of संप्रोम्नाय (if Rudradatta's explanation should be correct).

निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामिति। एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम्। ६।

हविःशेषान् सर्वमल्पेडापक्षे द्वौ इतरथा त्रीन्॥ संस्राव्याय संप्रोत्पूर्वो मन्तिर्मर्दने द्रष्टव्यः। रलयोरविशेषः। नलोपश्छान्दसः। संस्रावयेति यावत्॥

त्रीन्परान्पितॄनन्वाचष्टे। षष्ठं प्रथमे पिण्डे। पञ्चमं द्वितीये। चतुर्थं तृतीये। ७।

प्रपितामहात्परानपि त्रीन्पितॄन्प्रातिलोम्येन त्रिषु पिण्डेष्वन्वाचष्टे पित्रादिकीर्तनानन्तरं कीर्तयति नामभिरेव तेषामपि नानामगृहीतं गच्छतीति वचनात्। तद्यथा एतत्ते तत रुद्र विष्णो ये च त्वाम-न्वित्यादि। केचित्तु परान्पितॄन् प्रपितामहस्य प्रपितामह प्रपितामहस्य पितामह प्रपितामहस्य ततेत्यन्वाचक्षते॥

उत्तरस्यां स्रक्त्यां रिप्तलेपं निमृज्याच्च पितरो यथा-भागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसंदृशं त्वा वय-मित्यैन्द्रर्चाहवनीयमुपतिष्ठन्त ऐन्द्रीभ्यां वा। ८।

रिप्तलेपं हस्ते लिप्तं पिण्डलेपं निमृज्यात् पितर इत्याह यजमानः। तत उदङ्निष्क्रमणादि सर्वेषाम्॥

आ तमितोरुपस्थायाक्षन्नमीमदन्त हीति पङ्क्त्या गार्हपत्यमुपतिष्ठन्ते। ६।

यावदनुष्टुभमन्तस्ताम्यन्ति तावदैन्द्र्या ऐन्द्रीभ्यां वाभ्यासेनाहवनीय-मुपस्थाय ततो गार्हपत्यमुपतिष्ठन्ते॥

एतयैव परिश्रितं प्रविशन्ति। १०।

एतयैव पङ्क्त्या परिश्रितं वेदिदेशं प्रविशन्ति॥

अत्रैके भक्षणपरिषेचने समामनन्ति। ११।

मन्थावघ्राणवेदिपरिषेचने अत्र वा क्रियेते॥

अवघ्रेण सर्वभक्षाः। १२।

प्राशित्रेडायजमानभागा अपत्रवघ्रेणैव भक्ष्याः न केवलं मन्थ इति॥

आञ्जनादि पिण्डपितृयज्ञवदा पङ्क्त्याः। १३।

यदन्तरिक्षमिति पङ्क्त्या गार्हपत्योपस्थानान्तमित्यर्थः॥

यदन्तरिक्षमिति पङ्क्त्या पुनरेति। १४।

पुनः परिश्रितमेति॥

विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते। विपरिक्रामन्त्यृत्विजः। विपरिहरन्ति स्रुचः। १५।

येषां पूर्वं विपर्यासः तानि सर्वाणि यथापूर्वमेव कुर्वन्ति॥

अपकर्षन्ति परिश्रयणानि। १६।

परिश्रयणानि त्वपनयन्त्येव। ततो ऽन्वाहार्यं दत्त्वा प्रघासप्रस्थास्याम इति प्रतिपद्यन्ते॥

श्रौपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति। देवौ यजेति प्रथमं संप्रेष्यति। यजेत्युत्तरम्। १७।

व्याख्यातो ऽयमवभृथे॥

सूक्तवाकं प्रति निवीतानि कुर्वते। १८।

सूक्तवाकप्रैषप्रभृत्या तत्समाप्तेर्निवीतानि कण्ठावलम्बितानि कुर्वन्ति। ततः परं तु यज्ञोपवीतान्येव सूक्तवाकं प्रतीति वचनात्॥

न पत्नीः संयाजयन्ति। १९।

पत्नीसंयाजाभावे ऽपि गच्छत्येवाध्वर्युः पश्चात्। स्रुचौ च स्फ्ये सादयित्वा संपत्नीयं पत्न्या विना जुहोति उपरिष्टात्पिष्टलेपफलीकरणहोमाभ्यां पत्नीसंयाजानङ्गत्वात्तेषाम्॥

न समिष्टयजुर्जुहोति। २०।

समिष्टयजुरभावे ऽपि बर्हिः प्रह्रियते कालोपलक्षणत्वात्तस्य॥

सर्वमन्यत्क्रियते। २१।

अतो ऽन्यत्सर्वं ब्राह्मणतर्पणान्तं क्रियते। तत्र भर्जनकपालविमोके यद्धर्मे कपालं तदपि व्रते इत्यूहः॥

संतिष्ठते पितृयज्ञः। २२।

गतः॥

इति षोडशी कण्डिका।

इति चतुर्थः पटलः॥

प्रतिपुरुषमेककपालान्निर्वपति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावत एकातिरिक्तान्। १।

व्याख्यातोऽयं करम्भपात्रविधौ ॥

यावन्तो गृह्याः स्मस्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति। २।

गतः ॥

तूष्णीमुपचरिता भवन्ति। ३।

सर्वमेवैषां तन्त्रं तूष्णीकं भवति। तत्र यावन्तः पुरोडाशसंयोगिनः पदार्था होमाश्च तावन्त एव क्रियन्ते। यथा विहृत्याग्नीन्परिस्तरणानाहृत्य वेदं कृत्वाग्नीन्परिस्तीर्य पाणी प्रक्षाल्य पुरोडाशार्थानि पात्राणि स्रुवाज्यस्थाल्यौ च प्रयुज्य पवित्रे कृत्वा पात्राणि संमृश्य प्रोक्षणनिर्वापादीनि ॥

उत्तरार्धे गार्हपत्यस्याधिश्रयति। ४।

गतः ॥

तानभिघार्यानभिघार्य वेदाद्वास्यान्तर्वेद्यासाद्य पशूनां शर्मासीति मूते समावपति। ५।

आप्यलेपं निनीयाज्यं निरुप्य पुरोडाशानुद्वास्यासंक्तायां वेद्यामासादयति। ततो मूते क्षिपति। धान्याद्यावपनार्थस्तरणपुञ्जो मूतम् ॥

मूतयोर्मूतेषु वा। ६।

गतः ॥

कोशापिधानेन हरन्तीत्येकेषाम्। ७।

वस्त्रादिनिधानार्थो वेत्रादिमयः पेटकादिः कोशः। तस्यापिधाने वासमोप्य हरन्ति ॥

एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरे-कोल्मुकं धूपायद्धरति। ८।

एकं अद्वितीयमुल्मुकमेकोल्मुकं मन्त्रवर्णात्। धूपायत् धूमायमानम् ॥

उत्तरपूर्वमवान्तरदेशं गत्वाखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपति। ९।

सर्वे गच्छन्त्यृत्विजोऽमात्याश्च। आखुभिरवटादुत्कीर्णाः पांसवः आखूत्करः ॥

असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन्। १०।

यदि शत्रुमान्यजमानः स्याद्द्वेष्टि च तं तदा मनसा ध्यायन्नाम निर्दिशति देवरत्तस्ते पशुस्तं जुषस्वेति ॥

यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात्। ११।

यदि दयालुः सन्तमपि शत्रुं न द्विष्यात्तदापि पूर्वतर एव विधिराखुस्ते रुद्र पशुरिति ॥

चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात्सकृत्सकृदवदाय मध्यमेनान्त-मेना वा पलाशपर्णेन जुहोति। १२।

इति सप्तदशी कण्डिका।

एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेति भेषजं गव इत्येताभ्यां चातुष्पथमग्निं परिषिञ्चति। अवाम्ब रुद्रमदिमहीति यजमानो जपति। १।

गताः ॥

त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं परियन्ति। २।

परियन्त्यमात्याः सयजमानपत्नीकाः स्त्रियश्च ॥

त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति यजमानस्य पतिकामा परीयात्। ३।

यदि स्याद्यजमानस्य कन्या पतिकामा साप्यनेन मन्त्रेण परीयात्। यस्य कस्य च पतिकामा स्यादित्येकं यजमानस्येत्यपरमिति तु भारद्वाजः ॥

ऊर्ध्वान्पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इतिं यजमानस्याञ्जलौ समोप्य भग स्थ भगस्य वो लप्सीयेत्यपादायैतेनैव कल्पेन त्रिः समावपेयुः। ४।

सर्वे ते पर्येतारः प्रत्येकमेकैकं पुरोडाशमादाय तानूर्ध्वमाकाशे उत्क्षिप्य पुनर्गृहीत्वा परिगमनमन्त्रेण यजमानस्याञ्जलौ समोप्य भग स्थेति पुनः स्वंस्वमपादत्ते। एवं त्रिः कुर्वन्ति ॥

*पतिकामा यास्त्वैवं समावपेयुस्तथैव मन्त्रं संनमयत्यः। ५।

या या यजमानस्य कन्या पतिकामा तस्यास्त्वाञ्जलावेवमेव त्रिः समावपेयुः। समावपनमन्त्रं तु सापि पूर्ववत्संनमय्य वदन्तीत्यर्थः। संनमयत्यः संनमय्येत्यर्थः॥ भारद्वाजस्त्वाह पतिकामाया अपि समावपेयुरिति॥

परीत्यपरीत्य समावपन्तीत्येके। ६।

प्रथमपर्यायवदुत्तरयोरपि पर्याययोः परिगमनस्यायमुभयत्र विकल्पः॥

तान्मूते समावपति मूतयोर्मूतेषु वा। ७।

यदापि कोशापिधानेनावृतास्तदापि मूत एव समावपत्यध्वर्युः॥

एष ते रुद्र भाग इति वृक्ष आसजति वृक्षयोर्वृक्षेषु वा। ८।

आसजति मूते स्थापयति। यदा द्वे बहूनि वा मूतानि तदापि बहुष्वासजति। अतीवीति मन्त्रान्तः॥

अपि वा मूतयोः समोप्य विवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वावधायावततधन्वा पिनाकहस्तः कृत्तिवासोमिति चिरवताम्यन्ति। ९।

* The interpretation of the commentator would require पतिकामायास्त्वैवं written as one word, but his interpretation is ungrammatical. The passage is to be translated: 'The girls who long for a husband put down (their cakes) in the same way, modifying the mantra in the manner aforesaid,' but not: 'In behalf of such a girl, they put down (the cakes) modifying etc.'

द्वयोरेव मूलयोः छिन्ना ते च विवधवत्स्थिते कृत्वा विवधेनैव स्थाणौ वल्मीकवपायां वा मन्त्रेणावदधाति। विवधो नाम स्कन्धवाह्यः साधनविशेषः येन गोपालाः क्षीरभाण्डानि वहन्ति। ततः सर्वे ऽवततधन्वेत्यावर्तयन्तस्तावन्निरुच्छ्वासास्तिष्ठन्ति यावत्ताम्यन्ति। एवं त्रिः कुर्वन्ति॥

अपः परिषिच्याप्रतीक्षास्तूष्णीमेत्यैधो ऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते। १०।

अपः परिषिच्य परितो मूलमवस्रावयित्वा। व्याख्यातः शेषः॥

इत्यष्टादशी कण्डिका।

आदित्यं घृते चरुं पूर्ववन्निर्वपति। १।

तेष्वेवाग्निष्वादित्यं निर्वपति। पूर्ववदित्यग्न्याधेयादित्यवत् सप्तदश सामिधेन्यश्चतुर्धाकरणकाल इत्यादिविधिनेत्यर्थः। वरस्तु नेष्यते दक्षिणान्तरवचनात्। तथान्यत्र वरदानादित्येव भारद्वाजः॥

अश्वः श्वेतो दक्षिणा। २।

गतः॥

गौर्वा श्वेतः श्वेतन्यङ्गो वा। ३।

सर्वश्वेतः श्वेतचिह्नमात्रो वा पुंगवः॥

सिद्धमिष्टिः संतिष्ठते। ४।

गतः॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्यक्ष्ष्काम बार्हस्पत्यं चरुं ब्रह्मवर्चसकाम ऐन्द्रं पशुकामः सारस्वतं प्रजाकामः पौष्णं प्रतिष्ठाकामः । ५ ।

एतान्यादित्यस्य काम्यान्यनुनिर्वाप्याणि कामानुसारेण कर्तव्यानि। किमेतानि कामवत्त्वे समुच्चीयन्ते। नेत्याह ॥

एतेषां यत्कामयेत्तदनुनिर्वपेत्। ६ ।

एतेषां हविषां यमिच्छेत्तमेवानुनिर्वपेत्। न ततो ऽधिकमित्यर्थः ॥

सिद्धमिष्टिः संतिष्ठते। ७।

गतः ॥

संतिष्ठन्ते साकमेधाः । ८ ।

आदित्यान्ते संतिष्ठन्ते काम्यत्वादनुनिर्वाप्याणाम् ॥

अथ पौर्णमास्येष्ट्योन्दनादि पूर्ववन्निवर्तनम्। सर्वं वा वापयेत् ॥ मन्त्रादिर्विक्रियते। यो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेनेति समानम्। ९।

व्याख्यातो ऽयं वरुणप्रघासेषु ॥

इत्यैकोनविंशी कण्डिका ।

इति पञ्चमः पटलः ॥

ततो द्वाहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयेण यजते। १।

ततः साकमेधकालात्। पर्वण आरभ्य द्व्यहादिष्वतीतेषु पूर्ववच्चतुर्ष्व वा मासेषु शुनासीरीयेण यजते। शुनासीरदेवतासंबन्धाच्छुनासीरीयं पर्व॥

तस्य वैश्वदेववत्कल्पः। २।

परिभाषया वैश्वदेवप्रकृतिकत्वे सिद्धे ऽपि कैश्चित्कल्पकारैर्महाहविःकल्पातिदेशात्तन्निरासार्थं वचनम्। सायंदोहाभावात्तु मध्यमकालतामप्यस्येच्छन्ति॥

निर्वपणकाल आग्नेयमष्टाकपालमिति दशोत्तराणि हवींपि निर्वपति। ३।

पञ्च संचराणि निरुप्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति पञ्च निर्वपति॥

वायव्यस्य पयसः प्रातर्दोहवत्कल्पः। ४।

तत्र शाखामाहृत्य निधाय रात्रावेव वत्सापाकरणं प्रातर्दोहार्थत्वात्॥

अथैकेषाम्। पञ्च संचराणि निरुप्य वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः॥ इन्द्राय शुनासीराय स्रुचा जुहुत नो हविः। जुपतां प्रति मेधिरः॥ प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता

सजोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरी हविरिदं जुषस्वेति शुनासीरीयस्य याज्यानुवाक्ये ॥ सौर्य एककपाल इति । ५ ।

अथवा पञ्च संवत्सराणि निरूप्य वायव्या यवागूः । तस्याश्चरुवत्कल्पः । वायव्या प्रतिधुग्वा । प्रतिधुगिति सद्यो दुग्धं पयः समाख्यायते । तथा च भारद्वाजः प्रतिधुगिति दुग्धमात्रस्य वाद इति । तदशृतं च भवति । प्रतिधुषा प्रातःसवने शृतेन माध्यंदिन इति लिङ्गात् एतदस्मै शृतं कुरुतेति लिङ्गाच्च ॥ तत्र पञ्चसंवत्सरानन्तरं दुग्धमात्रं लौकिकं पयो गृहीत्वा निधेयम् । आसादनप्रभृति तु सांनाय्यधर्मांल्लभते । तथा च कात्यायनः वायव्यं पयो लौकिकं प्रतिधुक्श्रुतेरिति । अपाण-वर्जं सर्वे ऽपि संस्काराः सांनाय्यवदित्यन्ये ॥ तत इन्द्राय शुना द्वादशकपालः । ततः सौर्य एककपाल इत्यष्टौ हवींषि ॥

नव प्रयाजानूयाजाः । ६ ।

उत्तरविकल्पार्थो ऽनुवादः ॥

पञ्चप्रयाजं त्र्यनूयाजमित्येके । ७ ।

प्रकृतिवदेवोभयमित्यर्थः ॥

संसर्पो ऽस्यंहस्पत्याय त्वेति मासनाम्नैकैकं जुहोति । ८ ।

मासनाम्नेत्येकवचनात् एकैवाहुतिः । भारद्वाजस्त्वाह मासनाम्नाभि-जुहोति संसर्पाय स्वाहांहस्पत्याय त्वा स्वाहेति ॥

द्वादशगवं सीरं दक्षिणा । ९ ।

यद्द्वादशभिर्बलीवर्दैर्युक्तं कृषति तद्द्वादशगवं सीरम् ॥

षड्योगं वा । १० ।

षड्भिर्योगो यस्य सीरस्य तत्षड्योगम् । तस्य चोभयतोऽन्यत्सर्वेति प्रतिग्रहः ॥

उष्टाराविन्त्येकेषाम् । ११ ।

उष्टारः सामङ्गवाहीवाहः ॥

उष्टारं वा । १२ ।

ददातीत्यध्याहारः सामर्थ्यात् ॥

अश्वं श्वेतमेककपालस्य गां वा श्वेतम् । १३ ।

ददातीत्येव शेषः ॥

इति विंशी कण्डिका ।

अनुवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति ॥ सिद्धमिष्टिः संतिष्ठते । संतिष्ठन्ते चातुर्मास्यानि ॥ अथ पौर्णमास्ये-ष्ट्यान्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् ॥ मन्त्रादिर्विक्रियते । एतं मासमुदसृजत्परमेष्ठी प्रजाभ्यः ।

तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः॥ प्रजामनु प्रजायसे तद् ते मर्त्यामृतम्। येन मासा अर्धमासा ऋतवः परिवत्सराः॥ येन ते ते प्रजापत ईजानस्य न्यवर्तयन्। तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे॥ अग्निस्तिग्मेनेति समानम्। १।

पौर्णमास्येष्ट्वेति तु ह्रासादानसंभवान्निवर्तते॥

चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते। २।

सोमो ऽग्निष्टोमसंस्थः पशुश्च निरूढपशुः विकारे प्रमाणासंभवात्। तौ च नित्ययोरर्थं साधयतः चातुर्मास्याङ्गत्वात्। कात्यायनबौधायनाभ्यामन्येष्टिरप्युक्ता। कात्यायनस्तावत् सोमेन पशुनेष्ट्या वा यजेतेति। बौधायनश्च पशुसोमावुक्त्वाह सवनेष्ट्या यजेतेत्यौपमन्यव इति। केयं सवनेष्टिर्नाम। सवनदेवतानामिष्टिः सवनेष्टिः सवनस्थानापन्नेति वा। यथोक्तं सूत्रकृता तुरायणे संवत्सरं सवनविधा इष्टीर्निर्वपन्ति आग्नेयो ऽष्टाकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालश्चरुरित्येक इति। तास्त्वत्र समानतन्त्रा इष्यन्ते सवनेष्ट्येत्येकवचनात्। तत्रापि त्वाहाश्वलायनः तुरायणमग्निरिन्द्रो विश्वे देवा इति पृथगिष्ट्यो ऽनुसवनमहरहरेका वा त्रिहविरिति॥ तथानुग्रहान्तरमप्यत्र भारद्वाजेनोक्तं आ वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयाद्वा साकमेधानां कालाद्वरुणप्रघासानां कालो नातीयाद्वा शुनासीरीयस्य कालात्साकमेधानां कालो नातीयादिति। कालातिक्रमेष्वापदि यजेतेति॥

फाल्गुन्या उद्दृष्टे सोमाय दीक्षते । ३ ।

यदि सोमेन यक्ष्यते तदा य आगामिन्याः फाल्गुन्याः परस्ताद्व्युद्दृष्टपर्यायः शुक्लपक्षस्तत्र दीक्षित्वानन्तरे पर्वणि यजेत यदि फाल्गुन्यामुपक्रमापवर्गौ। प्रदर्शनार्थं चैतत्। यदा चैत्र्यामुपक्रम्य पुनश्चैत्र्यामपवर्गः । तथा चैत्र्या उद्दृष्टे सोमः ॥ यदा शुक्लादौ शुनासीरीयं तदापि फाल्गुन्या उद्दृष्ट एव सोमः मुख्यस्यैव सोमकालस्यानतिक्रमणीयत्वात्। पशुना यक्ष्यमाणस्य शुनासीरीयादनन्तरे पर्वणि यागः ॥

तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् । ४ ।

तत उद्दृष्टादुत्तरा या फाल्गुनी सा तं सोमेनानिष्टवन्तं नातिगच्छेत् । ततः पूर्वस्मिन्नेव वसन्ते यजेतेत्यर्थः ॥

इति वै खलूत्सृजमानस्य । ५ ।

इत्ययं पशुसोमान्तः प्रयोगश्चातुर्मास्यानि सकृत्कृत्वोत्सृजतः। यस्तु पञ्चसांवत्सरिकादिकल्पेन तान्येव पुनरारभते तस्य विधिर्वक्ष्यत इत्यर्थः ॥

अथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा । ६ ।

इत्येकविंशी कण्डिका ।

पञ्चदश्यां वैश्वदेवेन यजते ।१।

साकमेधेभ्यः परं चतुर्षु मासेषु फाल्गुन्यां चैत्र्यां वा यच्छुनासीरीयस्य प्रायणं तेन तस्याः पूर्वेद्युश्चतुर्दश्यामिष्ट्वा पञ्चदश्यां पुनर्वैश्वदेवमारभते। ततः पञ्चसांवत्सरिकाद्यन्ते सोमः पशुर्वा । यदा तु द्वादशादौ शुना-सीरीयं तदासामर्थ्याच्चतुर्दश्यां शुनासीरीयेणेत्यंतन्न भवति ॥

एतेनैव पशुकामो यजेत यस्मिन्नस्यर्तौ भूयिष्ठं गोषु पयः स्यात् ।२।

पशुकाम एतेन वैश्वदेवेन यस्मिन्नेव प्रावृडादौ प्रभूतक्षीरा यजमानस्य गावः संपद्यन्ते तस्मिन्नेव काले यजेत । न वसन्तनियम इत्यर्थः ॥ वरुणप्रघासादयस्तु न भवन्ति एवकारात्। न चादौ पञ्चहोत्वैश्वान-रपार्जन्ये भवतः। न च सोमः पशुर्वान्ते समुदायप्रयुक्तत्वात्तेषाम्॥

एतेनैव प्रजाकामः पशुकामो वा यजेत ।३।

अस्य तु वसन्त एव कालः ॥

अथैकेषाम्। वैश्वदेवेनेतरेषां पर्वणां स्थाने पशुकामो यजेत यावत्सहस्रं पशून्प्राप्नुयात्। अथेतरैः स्वकालैर्य-जेत ।४।

स्वकाले वैश्वदेवेनेष्ट्वा वरुणप्रघासादीनामपि स्थाने वैश्वदेवमेवाभ्यस्येत् आ गोसहस्रप्राप्तेः। पूर्णे तु सहस्रे वरुणप्रघासादिभिः स्वेस्वे काले यजेत न पुनर्वैश्वदेवमभ्यस्येत्। तत्र यद्यपि साकमेधानां शुनासी-रीयस्य वा काले सहस्रप्राप्तिस्तदाप्यावरुणप्रघासकालं तूष्णीमासित्वा

ततः क्रमशः सर्वैरपि पर्वभिः स्वकालैरिष्ट्वापवर्जयेत् अकृते पूर्वस्मिन्नेवमुत्तरपर्वारम्भासिद्धेः स्वकालापेक्षत्वाच्च पूर्वस्य। पञ्चहोत्रादयश्चास्मिन्कल्पे भवन्ति सर्वापवर्गित्वात्॥

शुनासीरीयेण ग्रामकामो वर्ष्य उदके यजेत। ५।

वर्षभवं वर्ष्यम्। वर्ष्ये यजेतेति को ऽर्थस्तमाह॥

वर्ष्यमुदकमन्ववसाय तत उदकार्थान्कुरुते। ६।

यत्र वर्षसंपन्नसलिलस्तोयाधारस्तत्र गत्वा यजेत यजंश्च यावानुदकार्थस्तत्सर्वं तत एवोदकान्कुर्यादित्यर्थः॥

एतेनैव प्रजाकामः पशुकामः पुष्टिकामो ब्रह्मवर्चसकामो ऽन्नाद्यकामो वा यजेत। ७।

एतेनैव शुनासीरीयेण॥

पर्वभिश्चातुर्मास्येषु मासान्संचरे। ८।

ततश्चतुर्षु मासेष्वित्यादौ या माससंख्या सा पर्वभिरेव भवति। चान्द्रमसा एव मासाः संख्यया न सौराः सावना वेत्युक्तं भवति। ततश्चतुर्षु मासेष्विति को ऽर्थः। अष्टसु पर्वस्वतीतेषु नवमे पर्वणि यजेतेति। तथा चाश्वलायनः पञ्चम्यां पौर्णमास्यामिति॥

पञ्चसांवत्सरिकाणि व्याख्यास्यामः। ९।

अथैतेषामेव चातुर्मास्यानामावृत्त्या पञ्चसंवत्सरकालता विकल्प्यते। तत्र च क्रियाभूयस्त्वात्फलभूयस्त्वं मन्तव्यम्॥

त्रीनृतून्संवत्सरानिष्ट्वा मासं न यजते । द्वौ परा-विष्ट्वा विरमति । १० ।

पुनरालभमानस्यारम्भप्रकारः प्रागेवोक्तः । तथा ह्यारभ्याविच्छिन्नांस्त्रीन्संवत्सरानिष्ट्वा चतुर्थमालभमानो न पूर्ववत्फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां वैश्वदेवेन यजते किं तु फाल्गुन्यां शुनासीरीयेणेष्ट्वा ततः परस्यां पौर्णमास्यां वैश्वदेवेन यजते । ततः पूर्ववत्परावपि संवत्सराविष्ट्वान्ते सोमेन पशुना वेष्ट्वा विरमति । मासं न यजत इति मासं जह्यात् नायं मासगणनायामन्तर्भाव्य इत्यर्थः । तस्मिन्नन्तराले व्रतान्यपि न भवन्तीत्यन्ये ॥

चैत्र्यां तूपक्रम्य द्वाविष्ट्वा मासमनिष्ट्वा त्रीन्परानिष्ट्वा विरमति । ११ ।

यदा चैत्र्यामुपक्रमस्तदा द्वौ संवत्सराविष्ट्वा मासत्याग इति विशेषः

अथ पञ्चदशवार्षिकाणि । १२ ।

व्याख्यास्याम इति शेषः ॥

एतान्येव द्विः । १३ ।

अभ्यस्येदिति वक्ष्यमाणेन संबन्धः । प्रयुक्तस्य पुनःप्रयोगो ऽभ्यासः । तस्यैव द्विःपुनःप्रयोगो द्विरभ्यासः । यथा वक्ष्यति ताभिस्त्रिरभ्यस्ताभिरंसौ चतुरभ्यस्ताभिः श्रोणी इति । तदयमर्थः । एतान्येव प्रयुक्तानि पञ्चसांवत्सरिकाणि पुनर्द्विरभ्यस्येत् एवं पञ्चदशवार्षिकाणि संपद्यन्त इति ॥

चिरपरिमितं वाभ्यस्येत् । १४ ।

विंशतिवार्षिकाण्यपि लभ्यन्त इति भावः । दशवार्षिकता तु न सिध्यति अवचनात् ॥ अथ पञ्चसांवत्सरिकाभ्यासे एव किं प्रमाणम् । तद्दर्शयति ॥

विज्ञायते च स त्रिषुत्रिषु संवत्सरेषु मासं न यजत इत्येतद्वचनो ऽभ्यासः । १५ ।

पञ्चसांवत्सरिकाणि तावत्प्रत्यक्षश्रुतानि । यत्त्वेषां प्रयोगविधौ त्रिषु संवत्सरेष्विति वक्तव्ये त्रिषुत्रिष्विति वीप्सा कृता तद्वचनको ऽभ्यासस्तत्प्रमाणक इत्यर्थः । केचित्त्वभ्यासप्रमाणभूताया वीप्साया द्वितीयादिप्रयोगसाधारण्यात् द्विरभ्यासेनात्र दशवार्षिकतां त्रिरभ्यासेन पञ्चदशवार्षिकतां चोक्तामिच्छन्ति । सर्वथापि तावत्पञ्चसांवत्सरिकेभ्यो ऽर्वाक् चातुर्मास्यानामभ्यासो न प्रमाणवानिति द्रष्टव्यम् ॥

पञ्चसांवत्सरिकेषु वैश्वानरपार्जन्या पञ्चहोता च नाभ्यावर्तेत । १६ ।

पञ्चसांवत्सरिकेषु तद्विवृद्धिषु च द्वयमेतत्प्रतिपर्यायं नावर्तेत । किमित्यारम्भार्थं सदेतद्द्वयं नावर्तेत । अत आह ॥

एकोपक्रमत्वात् । १७ ।

यावतो ऽभ्यासानिच्छन्ति तावतामेक एवारम्भः न तु प्रतिपर्यायं भिद्यते । तत्कृतो ऽनयोरावृत्तिः । तदेतद्दृष्टान्तेन दृढयति ॥

यथान्वारम्भणीया यथान्वारम्भणीया । १८ ।

अन्वारम्भणीययोर्यावज्जीवप्रयुक्तयोरप्येक एवारम्भ इत्यारम्भार्थान्वारम्भणीया सकृदेवादौ प्रयुज्यते न तु प्रतिपर्यायमावर्तते । तद्वदेवाचैतद्द्वयमिति ॥

इति द्वात्रिंशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः ।

इत्यष्टमः प्रश्नः ॥

ओम् ॥

उक्तानि सोमादर्वाञ्चि नित्यानि कर्माणि यानीह हविर्यज्ञप्रकृती-न्यचिख्युराचार्याः। तेषामिदानीं प्रायश्चित्तप्रवचनमारभ्यते ॥

## श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते । १ ।

श्रुतिर्लक्षणं यस्य तच्छ्रुतिलक्षणम्। दोषनिर्हरणार्थं कर्म प्रायश्चित्त-मित्याख्यायते। विधीयत इति विधिः कर्म। तस्य च पुरुषप्रमा-दादिप्रभवो दोषो ऽपराधः। स च कर्मणो वैगुण्यं कार्यशक्तिवैकल्य-मिति यावत् ॥ तदयमर्थः। कर्मदोषे निमित्ते श्रुतिप्रमितं प्रायश्चि-त्तमुपदिश्यत इति ॥ ननु सर्वस्याप्युक्तवक्ष्यमाणस्य श्रुतिलक्षणत्वे केन विशेषेणोक्तं श्रुतिलक्षणं प्रायश्चित्तमिति। सत्यम्। उक्तवक्ष्यमाणेभ्यो नास्ति विशेषः। तथापि पुरुषार्थेभ्यः प्रायश्चित्तेभ्यः क्रत्वर्थानां विशेषमनेन दर्शयित्वादरविशेषार्थं पुरुषापराधे महापातकादौ स्मृतिलक्षणमेव प्रायश्चित्तम्। कर्मापराधे तु साक्षाच्छ्रुतिलक्षणमिति। अथवा यत्पुरुषापराधप्रायश्चित्तं स्मृतिलक्षणं तद्धर्मेषु विधायिष्यते। कर्मापराधप्रायश्चित्तं त्विदानीं श्रुतिलक्षणत्वाद्विधीयत इत्यर्थः ॥

## एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्ची-येरन्नर्थान्तरत्वात् । २ ।

यत्रैकस्मिन्निमित्ते ऽनेकानि प्रायश्चित्तान्याम्नायन्ते यथा दर्शपूर्णमा-

मातिपत्तौ पथिकृतौ वैश्वानरौ चेत्यादि तानि तत्र समुच्चीयन्ते न तु विकल्प्यन्ते। कुतः। अर्थान्तरत्वात् प्रयोजनान्यत्वात्॥ व्रीहियववदेकार्थानि विकल्प्यन्ते न तु व्रीह्याज्यादिवद्भिन्नार्थानि। ननु दोषनिर्घातमेषामर्थं वक्ष्यति दोषनिर्घातार्थानि भवन्तीति स चैक एव सर्वेषामेकार्थ्याद्विकल्प एव शोभते। अत्र वदामः स्थितमिदं तावन्न्यायविदां यन्निमित्ते कर्माङ्गानि प्रायश्चित्तानीति॥ तत्र चैकस्मिन्निमित्ते ऽनेकेषामुपदेशात् तेषां चामीषां युगपदेकप्रयोगविधिपरिग्रहाद्दोषनिर्घातस्य चादृष्टरूपत्वेन व्रीहियवादिवदेकैकस्य तत्साधनसामर्थ्ये प्रमाणाभावाच्च पानलेपविरेकैरिव पापानसपघ्नद्भिरवान्तरकार्यभेदेन समुच्चितैरेव सर्वदोषो निर्हण्यत इति गम्यते। तस्मात्सूक्तमर्थान्तरत्वात्समुच्चीयन्त इति॥ स्यान्मतं वाक्यतस्तेषामेकैकस्य नैरपेक्ष्यावगमान्न समुच्चयसिद्धिरिति। तदपि मन्दं अश्वेन याति दीपिकया यातीत्यादिवत्समाध्यांशनैरपेक्ष्येणापि तदुपपत्तेः इतरथा अजया क्रीणाति हिरण्येन क्रीणाति धेन्वा क्रीणातीत्यत्र क्रयद्रव्याणामपि समुच्चयासिद्धेश्च। तस्मान्न काचित्समुच्चयानुपपत्तिः॥ यानि तु शाखान्तरीयत्वेनोपन्यस्तानि सूत्रकृता तत्र विकल्प एव यथा देवां जनमगन्यज्ञ इत्येकेषामित्यादौ। यत्र तु सामान्यविशेषभावेनोपदेशस्तत्र पुनर्बाध एव सामान्यस्य यथा अस्कान्द्यौरिति स्कन्नाभिमन्त्रणस्य यदद्य दुग्धमित्यभिमन्त्रणेनेत्यादि॥ समुच्चीयन्तां कामं प्रायश्चित्तानि। तान्येव तावद्व्याख्यायन्तामिमानि नामामूनीति॥ त०२।१६॥

**जपो होम इज्या च। ३।**

च: प्रकारवचन: । अन्यान्यप्यनुमन्त्रणोपस्थानोपसमिन्धनपुनराधा-
नादीनि संगृह्णाति तेषामपि प्रायश्चित्तत्वेन वक्ष्यमाणत्वात् । चित-
थोदाहरणं तु तेषां प्राधान्यख्यापनार्थं बाहुल्याभिप्रायं वेति द्रष्ट-
व्यम् ॥ यान्येतानि प्रायश्चित्तानि समुच्चीयन्ते च अर्थान्यत्वात् ।
कस्मै पुनरर्थाय तानि क्रियन्ते । अत आह

दोषनिर्घातार्थानि भवन्ति । ४ ।

दोष: कर्मणो वैगुण्यमित्युक्तम् । तन्निर्घातेन कर्मण उपकुर्वन्ति
कार्यशक्तिमविकलां कुर्वन्तीत्यर्थ: । कथं पुनरेतेषां तादर्थ्यमिति
चेत् एतस्मिन्वैगुण्ये एतत्कर्तव्यमित्युक्ते तत्समाधानस्यापेक्षितत्वाद्वै-
गुण्यपरिहारार्थमेव तदत्रमीयत इति भाव: । अस्त्वेषां दोषनिर्घात:
फलं कालो ऽप्येषां व्याकरणीय: । किं कर्मकाल एव कर्तव्यानि
उत अपवृक्ते* कर्मणि आहो स्विदिष्ट्यादे: पर्वाद्यपेक्षत्वात्तस्य काल:
प्रतीक्षणीय इति । तत्राह

अनन्तरं दोषात्कर्तव्यानि । ५ ।

क्षतादिचिकित्सावदनन्तरं दोषादेतान्यनुष्ठितान्येव दोषं निर्हृण्यु:
नान्यथेति भाव: । एतेन प्रायश्चित्ताधानस्याप्यृतुनक्षत्राद्यनपेक्षत्वं
व्याख्यातम् ॥

निर्हृते दोषे पुनः कृत्स्नं कर्म । ६ ।

एवं प्रायश्चित्तेन निर्हृते दोषे तत: कर्मशेष: कार्य इत्यर्थ: । यद-

* Corrected; the MSS read अपवृक्ते or पृक्त

पचकृतमयथाकृतं वा सकृते प्रायश्चित्ते अङ्गं प्रधानं वा तदपि यथा क्रियेतेत्युक्तं कृत्स्नमिति ॥ तत्राङ्गमपवृक्ते* कर्मणि न क्रियते प्रधानानुपकारात् । द्रव्यसंस्कारस्तु परतो द्रव्योपयोगान्न क्रियते तदर्थत्वात् । प्रधानमप्यपवृक्तकालं† न क्रियते अकाले कृतस्याकृतत्वात् । गौणकाले तु क्रियत एव मुख्याभावे गौणस्यापि ग्राह्यत्वात् । तेनार्वाक् परपर्वणः क्रियैव दर्शपूर्णमासयोः । तच्च परस्ताद्दर्शयिष्यामः । केचित्तु व्याचक्षते निर्हृते दोषे पुनः कर्म कृत्स्नं भवति सकलं भवति फलदानसमर्थं भवतीति । ननु निर्हृतदोषमपि कर्म दोषागमविकलशक्तिकं सत्कथं कार्याय कल्पयिष्यते । नहि शल्यप्रवेशात्पादेन खञ्जः सन्नुत्खातशल्यो ऽपि पन्थानं प्रतिपद्यते । तेन प्रयुक्तस्य कर्मणो ऽपार्थकत्वात्पुनःप्रयोगेण भवितव्यम् । अत आह

## तस्य नावचनात्पुनःप्रयोगः । ७ ।

तस्य सकृत्प्रयुक्तस्य कर्मणो नर्ते वचनात्पुनःप्रयोगो भवति । भवत्येव तु वचनात् यथा अन्यां दुग्ध्वा पुनर्होतव्यं अथान्यामिष्टिमनुल्बणां तन्वीतेत्यादौ । को ह्यदृष्टार्थस्य कर्मणः कार्याकार्यते शक्त्यशक्ती वा जानीयात् । नो खल्वन्धो रूपविशेषान्पश्यति । तस्माद्यस्य शास्त्रमेव पुनःप्रयोगं शास्ति कामं तत्र प्रयोक्ष्यते प्रत्येष्यते च तस्य पङ्गोरिव कार्याशक्तिः । यत्र तु न शास्त्रमस्ति कुतस्तत्र पुनःप्रयोगः । प्रत्येष्यते तु तच्च प्रयुक्तस्यैव कर्मणश्चिकित्सितपटलस्येव चक्षुषः कार्यशक्तिरित्यलं प्रसङ्गेन ॥

---

* Corrected; the MSS. read अपवृक्ते or अप्रवृत्ते. † Vide ante.

तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात्। ८।

यद्यन्वाहिताग्निर्दैवविघ्नाद्यावश्यकनिमित्तवशाद्गृहः प्रयास्यन्स्यात् तदा तुभ्यमित्यनयाऽऽहवनीये जुहुयात्। वास्तोष्पतीयप्रत्याम्नायः॥

पृथगरणीष्वग्नीन्समारोप्य प्रयाति। ९।

अरणिवचनान्नात्मनि समारोप्याः॥

यत्र वसेत्तद्देतामिष्टिं संस्थापयेत्। १०।

यत्र वत्स्यति तत्रावसितहोमान्तं कृत्वा कृतान्तात्प्रकृत्यैष्टिः संस्थाप्या॥

यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेदन्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीय भूरित्युपस्थाय यो अग्निं देववीतये हविष्माँ आविवासति। तस्मै पावक मृडय स्वाहेति पूर्णां स्रुवं सर्वप्रायश्चित्तं हुत्वेदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात्। ११।

सर्वप्रायश्चित्तमिति पूर्णस्रुवस्यैव प्रशंसार्थो वादः। वैष्णवीं तु जुह्वा जुहुयात् यद्यव्यापृता भवति॥

जपेदित्येके। १२।

वैष्णवीमिति शेषः आनन्तर्यात्॥

मनसा व्रतोपायनीयं यजुर्जपेत्। १३।

यजमान इति शेषः व्रतोपायनीयमिति वचनात् व्रतं चरिष्यामी-
च मन्त्रलिङ्गात् संततिर्वा एषा यज्ञस्येत्यादिना विच्छिन्नव्रतसंतानार्थत्वस्तवनाच । व्रतोपायनीयमिति स्वस्य यद्व्रतोपायनार्थं यजुस्तज्जपेदित्यर्थः ॥

य: कश्चनानुगच्छेदेतदेव प्रणयनवर्जमावर्तेत । १४ ।

तंतमनुगतं योनित उत्पाद्य भूरित्युपस्थानादि समानम् । होमावपि तत्रतत्रैवेत्यपरे । यथा दक्षिणाग्न्यनुगतिप्रायश्चित्तं प्रकृत्याह भारद्वाजः अन्वाहार्यपचने जुहुयादित्याश्मरथ्यः आहवनीय इत्यालेखन इति । केचित्त्वाहवनीयानुगतावप्यजस्रविषये प्रणयनवर्जमावर्तयन्ति तस्य गार्हपत्याननुप्रवेशान्मन्थनमेव सर्वत्रेति । तदयुक्तं अविशेषात् उद्धार्यस्यापि गार्हपत्यानुप्रवेशे प्रमाणाभावस्य दर्शितत्वाच । अस्तु वा तदनुप्रवेशः तदा तमजस्रो ऽप्यनुप्रविशन्न दण्डेन पराणुद्यते योनित्वादेरनुप्रवेशहेतोस्तं प्रत्यविशेषात् । वाच्यो वा विशेषः तस्मात्प्रणयनविधिस्वविशिष्टमेव प्रणयनमजस्रोद्धार्ययोः ॥

मन्थेद्गार्हपत्यम् । १५ ।

गार्हपत्यमनुगतं मन्थनेनोत्पाद्य यथोक्तमेव प्रायश्चित्तमावर्तयेत् । तथाहवनीयस्यापि गार्हपत्यतामापन्नस्य मन्थनमेव न प्रणयनं यथोर्ध्वमौत्तरवेदिकप्रणयनात्पशुसोमयोः ॥

या प्रकृतिर्दक्षिणाग्नेः । १६ ।

तत आहरेदिति शेषः । प्रदर्शनार्थं चैतत्सभ्यावसथ्ययोरपि यः कश्-

तानुगच्छेदिति सामान्योपक्रमात् अन्यथा तस्यानर्थक्यप्रसङ्गाच्च । तदभिप्रायमेव चानयोरनुक्रमणं वेदितव्यम् । अनित्यत्वाभिप्रायमित्यपरे ॥ तदेतदन्वाहितप्रायश्चित्तं स्वविषये सर्वमाग्निहोत्रिकादि प्रायश्चित्तान्तरं बाधते विशेषविषयत्वात । यस्य चोभावनुगतावित्यनेन तु सर्वो विधिर्बाध्यते विशिष्टतमविषयत्वात्तस्य । सर्वे ऽपि ह्यनुगतप्रायश्चित्तविधयो ऽन्वाहितानन्वाहितादिगोचरा एकैकानुगतावभिनिम्रोकाभ्युदयरहितोभयानुगतौ च सावकाशाः । तद्विशिष्टोभयानुगतौ युक्तं तदेकविषयेणानेन बाध्यत इति ॥

यद्याहिताग्नेरग्निरपक्षायेदा शम्यापरासात्परि वाजपतिः कविरग्निरिति त्रिः प्रदक्षिणं परिक्रम्य तं संभरेदिदं त एकं पर उत एकं तृतीयेन ज्योतिषा संविशस्व । संवेशनस्तनुवै चारुरेधि प्रिये देवानां परमे जनित्र इति । १७ ।

अन्वाहिताधिकारशङ्कानिवृत्त्यर्थमाहिताग्निग्रहणम् । यावति देशे शम्या परास्ता पतति ततो ऽर्वाग्यद्यग्निः कश्चिदपचायेत् आयतनादपगच्छेत् तदा तमेव त्रिः परीत्य संभरेत् पुनरायतने निक्षिपेत् ॥ कृत्स्नाग्न्यपचाण एव चायं विधिः यथोक्तं साङ्ख्यायनाश्वलायनयोः आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिति । अन्यं कदेशापगमे तु यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारः स्कन्ददित्यादि विध्यन्तरं द्रष्टव्यम् ॥

यदि परस्तरामपक्षायेदनुप्रयायावस्येत् । १८ ।

परःशब्दः परोगोष्ठ इत्यत्रैव व्याख्यातः। अस्यापराधात्परतरमप गच्छेद्यत्र सो ऽग्निस्तत्रेतरानपि प्रत्यवानीय तदनुगुणान्विहृत्य तदहस्तत्र वसेदित्यर्थः॥

**तदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्।१९।**

तत् तत्र॥

**पथो ऽन्तिकाद्बर्हिराहरेत्।२०।**

पथः समीपे ये दर्भास्ततो बर्हिराहरेत्॥

**अनड्वान्दक्षिणा। सिद्धमिष्टिः संतिष्ठते।२१।**

यदा त्वियमिष्टिस्तन्त्रमध्ये पतिता तस्यैव प्रसङ्गो वेदितव्यः॥

**ततः श्वोभूते गृहेषु प्रत्यवस्यति।२२।**

ततः श्वोभूते यतो देशात्पूर्वं गतस्तत्र प्रत्यवस्यति। सोमेषु त्ववसानप्रत्यवसाने न भवतो यत्राहर्वृद्धिः स्यात्॥

**यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेत्।२३।**

यदा सर्वगवीनां वत्साः सर्वमेव पयः पिबेयुः न तु हविषे पर्याप्तमवशिष्युः तदा यवागूं निर्वपेत्। यद्यपि सांनाय्यस्थानापत्तेस्तद्धर्मिका यवागूस्तथाप्योषधिगुणत्वान्निर्वापादयः अपणान्ता धर्मास्त्रवत्कार्याः ये हविर्निष्पत्त्यर्था भवन्ति। सांनाय्ये विहितास्त्वर्थलोपान्निवृत्ताः न शास्त्रात्। अतो ऽनार्थवत्त्वान्क्रियन्ते। उद्वासनादारभ्य सांना-

मोर्यतरस्थानापन्ना तत्तद्धर्मा भवति पृथक्प्रदाना च नानादेवत-त्वात्॥ यदा तूभयोरपि दोहयोः पयो धीतं* स्यात् तदा सहप्रदानं यवाग्वोरेकदेवतत्वात्। आह च भारद्वाजः समानदेवतेषु समव-दाय प्रचरति हविर्गणेषु पशुगणेषु चेति॥

अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत्। २४।

सम्याध्येष्टिं तदहरेवोपवसथं कृत्वा पोतेन हविषा पुनर्यजेतेत्यर्थः। नाग्नेयस्यावृत्तिः नाशदोषाद्यभावतः उत्तरस्मै हविषे वत्सानपाकृ-त्येति लिङ्गाच्च। एवं दोहान्तरस्याप्यनष्टस्येति द्रष्टव्यम्॥

यस्य सायं दुग्धं हविरार्तिमार्च्छेतीन्द्राय व्रीहीन्निरु-प्योपवसेत्। २५।

आर्तिः नाशदोषापहारादिः। इन्द्रग्रहणं महेन्द्रस्यापि प्रदर्शनार्थं प्रातर्दोहेनास्य समवदाय प्रचरेदित्यविशेषवचनात् अन्यथा महेन्द्र-याजिनस्तत्र याज्यानुवाक्यादिविरोधात्। तथा ऐन्द्रं वा माहेन्द्रं वा पुरोडाशं तस्य स्थान इत्येव बह्वृचाः। व्रीहिग्रहणाद्यवा निव-र्तन्ते॥ यदा रात्रावार्तिस्तदा यावदर्थं पात्राणि प्रयुज्य निरूप्य व्रीहीनुपवसेत्। यदा तु श्वस्तदा तदनन्तरमेव निरूप्य नोपवासः॥

यत्प्रातः स्यात्तच्छृतं कुर्यात्। २६।

यत्प्रातरदुष्टं स्यात्तच्छृतमेव कुर्यात्। न तु सांनाय्यप्रतिनिधित्वेन पुरोडाशः प्रवृत्त इति सो ऽपि पुरोडाशः कार्य इति भावः॥

* Corrected; the MSS. read धिनं.

अथेतर ऐन्द्रः पुरोडाशः स्यात्। २७।

इतरो दोहः पुरोडाशः स्यात् तस्य स्थाने निरुप्तैर्व्रीहिभिः पुरोडाशः कार्य इत्यर्थः। स चैकादशकपालो द्वादशकपालो वा ऐन्द्राग्नविकारत्वात्। तस्य च प्रागुद्वासनात्पुरोडाशधर्माः परतः सांनाय्यधर्माश्च पूर्ववदेव वेदितव्याः॥

तस्य प्रातर्दोहेन समवदाय प्रचरेत्। २८।

समवदाय सहावदाय॥

एतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तम्। २९

उपवासस्तत्कार्थान्निवर्तते॥

सायंदोहेनास्य समवदाय प्रचरेत्। ३०।

गतः॥ अत्र ब्राह्मणे कल्पान्तरेषु चान्यतरदोहार्तावुभयार्तौ च पुनरिज्योक्ता। सूत्रकारस्तु तामुभयार्ताविव वक्ष्यति। तेनान्यतरार्तौ नेष्यते॥ आश्वलायनस्त्वत्रानुग्रहमाह यथा अन्यतरादोषे व्यामिश्य प्रचरेयुः पुरोडाशं वा तत्स्थान इति। बाह्वृच्ये ऽपि सायंदोहार्तावाम्नातो ऽनुग्रहः यथा प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेतेति॥

यस्योभौ दोहावार्तिमार्छेयातामाग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनम्। ३१।

उभयोः क्रमेण आर्तौ क्रमेण पुरोडाशौ निरुप्य सहप्रचारः पूर्ववत्॥ यदा पुनरनिरुप्ते ऽन्यतरार्त्यर्थे पुरोडाशे ऽन्यस्याप्यार्तिर्युगपदार्तिर्वा

शाष्टाकपालपञ्चशरावौ निर्वपेत्। तदस्य परिमाणमित्यर्थे लुप्ततद्धितः पञ्चशरावशब्दः। पञ्चशरावपरिमितं द्रव्यमभिधत्ते तच्च शरावेण निर्वपति त्रियजुषा द्विस्तूष्णीं स द्वादशशरावं चरुं निर्वपति द्वादश मन्त्रेण तूष्णीमितराणीति लिङ्गात्॥ इन्द्रग्रहणमत्रापि प्रदर्शनार्थं ऐन्द्रं वा माहेन्द्रं वेति समानमिति बह्वृचश्रुतेः। सांनाय्यप्रतिनिधित्वं च हविषोरत एव लिङ्गात्सिद्धं पयो वा ओषधयः पयः पयः पयमेवास्मै पयो ऽवरुन्द्ध इति लिङ्गाच्च। तेन सांनाय्यधर्मकतापि तयोः पूर्ववदेव वेदितव्या। कात्यायनस्तु पञ्चशरावं प्रकृत्याह प्रतिनिधिः प्रायश्चित्तं वा देवताश्रुतेरिति॥ प्रायश्चित्तार्थत्वे परतो ऽप्युद्धामसा- दाग्नेयैन्द्राग्नधर्मता हविषोरिति विशेषः। यवाग्वादीनां तु प्रतिनिधित्वं प्रदर्शितमेव सूत्रे स्पष्टमिति सांनाय्यधर्मतैव यथोक्तानुसंधया॥

**अग्निं पुरोडाशेन यजेत। इन्द्रं पञ्चशरावेण। ३२।**

देवतातद्धितेनैव सिद्धे उत्तरविकल्पार्थो ऽनुवादः॥

**पञ्चशरावेण वोभे देवते यजेत। ३३।**

पञ्चशरावमेवैकमिन्द्राय निरूप्य तेनैव प्रथममग्निमिष्ट्वा तत इन्द्रं यजेत न त्वष्टाकपालं पुरोडाशं निर्वपेदित्यर्थः॥ ब्राह्मणे त्वैन्द्रं पञ्चशरावमोदनं निर्वपेदग्निं देवतानां प्रथमं यजेदिति यागविधिरेवाग्नेरष्टाकपालस्य कल्पक इति प्रथमः कल्पः। ऐन्द्रादेव पञ्चशरावाद्यवोचनिको याग इति द्वितीय इति द्रष्टव्यम्। उभयच चाग्नेययोः सह प्रदानमिष्यते विभवात्॥

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् । ३४ ।**

व्याख्यातः ॥

इति प्रथमा कण्डिका ।

**यस्य व्रत्ये ऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत ।१।**

व्रतार्हमहः व्रत्यमहः तच्चौपवसथ्यम् । तत्रैव व्रतोपदेशात्तस्मिन्नहनि यदि पत्न्यार्तवत्वादनालम्भुका स्पर्शानर्हा स्यात्तदा तामपहाय यजेतैव दर्शपूर्णमासाभ्यामित्यर्थः । अथवा व्रतशब्दः कर्मवाची यथा श्रितति व्रतेनेत्यादौ । तत्प्रतिनियतमहर्व्रत्यमहः तस्मिन्ननालम्भुकायामपि पत्न्यां तया विना कुर्यादेव तत्कर्मेत्यर्थः । तद्यथा पर्वणोर्दर्शपूर्णमासौ अमावास्यायां पिण्डपितृयज्ञः सायंप्रातरग्निहोत्रमित्यादि व्रत्ये ऽहनीति वचनाद्येन प्रतिनियतं तत्तत्रानालम्भुकायां क्रियते ॥ एतदुक्तं भवति यस्मिन्काले यस्यां क्रियायां प्रत्यवायः प्रायश्चित्तं वा भ्रंशेच मुख्यः कालस्तत्तत्रानालम्भुकायामपि क्रियते नेतरदिति । तेन काम्येष्टयः पशुसोमाश्च यस्मिन्पर्वण्यनालम्भुका न तस्मिन्क्रियन्ते । क्रियन्त एव तस्मिन्यदा प्रक्रान्ता भवन्ति प्रक्रान्तस्य कर्मणस्तत्कालं प्रतिनियमात् । एतेनाग्न्याधेयादेरपि प्रक्रान्तस्य तत्कालापवर्गो व्याख्यातः ॥ सोमे तु प्रक्रान्ते ऽनालम्भुकायां नियमविशेषानाह कात्यायनः पत्न्युदक्या दीक्षारूपाणि निधाय सिकताख्यासीतोपस्तरणात् तिष्ठेत्संधिवेलयोः वेदिसमीपे सुत्यासु त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सांनिपातिकं प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि न गर्भिणीं दीक्षयेदित्येके ऽयज्ञिया

गर्भा इति श्रुतेः नानूबन्ध्याप्रकरणादिति। प्रजातायां तु सत्यप्यशौचे जयमानस्याग्निहोत्रादावधिकार उक्तो धर्मशास्त्रकारैः। बौधायनस्तावत् नाशुचिः काम्यं तप आतिष्ठेन्न यजेत न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासेभ्य इति। मनुनाप्युक्तं न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः. न च तत्कर्म कुर्वाणः सनाभ्यो ऽप्यशुचिर्भवेदिति। याज्ञवल्क्यो ऽप्याह वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिता इति। तथा नित्यानि निवर्तन्ते वैतानवर्जमिति गौतमः। जाबालिश्चाह जन्महान्योर्वितानस्य कर्मत्यागो न विद्यत इति। एतेन जातेष्टिरपि व्याख्याता। तत्र त्वाह भारद्वाजः कथं जातेष्टिरित्यूर्ध्वं दशम्या इत्याश्मरथ्यो जात एवर्त्विजः कुर्युरित्यालेखन इति। बौधायनश्चाह सद्य स्माह बौधायन उत्थितायां निर्दशायां निर्वपेदिति जातमेव विदित्वेति शालीकिरिति॥

**जघनेन वेदिमन्तर्वेदि वोदकमुल्वं संनहनं स्तृणीयात्। २।**

योक्त्रं तु स्वकाले दक्षिणतः पाशमुदकमुल्वं पश्चाद्वेदेरन्तर्वेदि वा तूष्णीं निदध्यात्॥

**यदा चिराचीणा स्यादथैनामुपह्वयेतामूहम*स्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति। ३।**

* Thus all MSS. and Taitt. Br. 3. 7. 1. 9, instead of अमो ऽहमस्मि (Atharva Veda 14. 2. 71, Âśval. Gṛhya S. 1. 7. 6)

यद्येयमतिगतचिराचा स्याता .स्यात्तदैनामृतुगमनार्थमुपक्रमयेत तच्च कर्मण एव प्रायश्चित्तार्थं न तु पुरुषार्थम्। कस्मात्। अर्धो वा एतस्य यज्ञस्य मीयते यस्य व्रत्ये ऽहन्पत्न्यनालम्भुका भवतीति प्रकृत्य तामिष्ट्वोपक्रमयेतेत्युक्त्वाऽध एवैनामुपक्रमयते मैव ततः प्रायश्चित्तिरिति श्रुतेः॥

यस्याग्निहोत्रं सांनाय्यं वा विष्यन्देतोदङ्परेत्य वल्मीकवपामुद्धृत्य प्रजापते न त्वदेतानीति प्राजापत्यर्चा वल्मीकवपायामवनीय भूरित्युपस्थायान्यां दुग्ध्वा पुनर्जुहुयात्। यदि सांनाय्यमन्यदागमयेत्।४।

क्वथनवशादुत्क्षिप्तस्याधःपतनं विष्यन्दनम्। व्याख्याता वल्मीकवपा। तामुद्धृत्य विवृतबिलां कृत्वा तस्या बिले ऽवनीय पुनर्जुहुयादग्निहोत्रम्। अवनयनापेक्षया पुनःशब्दः आवर्तयेत्। दोहनेन विना अन्यदागमयेत् उत्पादयेत्॥

यदि कीटो ऽवपद्येत मध्यमेनान्तमेन वा पलाशपर्णेन मही द्यौः पृथिवी च न इति द्यावापृथिव्ययर्चान्तःपरिधि निनीयान्यां दुग्ध्वा पुनर्जुहुयात्। यदि सांनाय्यमन्यदागमयेत्।५।

कीटो ऽमेध्यसेवी क्रिमिः। अन्तःपरिधीति देशोपलक्षणमग्निहोत्रे॥

यस्याग्निहोत्रमववर्षेन्मित्रो जनान्कल्पयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमि-

याभिवर्षे सत्याय हव्यं घृतवज्जुहोतेति तत्कृत्वान्यां दुग्ध्वा पुनर्जुहुयात् । ६ ।

पुनरग्निहोत्रग्रहणात्सांनाय्ये नायं विधिः । अववर्षेत् उपरि वर्षेत्पर्जन्यः । तत्कृत्वा तदववृष्टं मैत्र्या हुत्वेत्यर्थः स जुहुयान्मित्रो जनानिति श्रुतेः । ततोऽन्यां दुग्ध्वा होमः ॥ केचित्तु मित्रो जनानिति पूर्वाहुतिमन्त्रेणाग्निहोत्रं हुत्वा पुनर्होममिच्छन्ति । तदाप्यन्यां दुग्ध्वा पुनर्जुहुयादिति वचनात् दोहहोमयोरेवावृत्तिः । यत्तु पुरस्ताद्धोमस्योपरिष्टाच्च हुत्वोपस्पर्शनस्य तन्त्रं स्यात् तत्तन्त्रमेव भवत्युभयोर्विभवात् ॥

यदि पूर्वस्यामाहुत्यां हुतायामुत्तराहुतिः स्कन्देद्यदि वोत्तरया पूर्वामभिजुहुयाद्यच्च वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय तत एव तूष्णीं हुत्वान्यां दुग्ध्वा पुनर्जुहुयात् । ७ ।

अभिहोम उपरिहोमः । तत एव शिष्टादेवोत्तराहुतिस्तूष्णीमुभयत्र । ततो होमावृत्तिः पूर्ववत् ॥ यदा पुनरुत्तराहुत्येकदेशः स्कन्नो न सर्वाहुतिस्तदा तन्नाद्रियेत यथा च वक्ष्यति यदनाहुतिमात्रं विप्रुडेव सेति मात्रापचारे तच्छेषेण समाप्नुयादिति च ॥ पूर्वाहुत्या सहोत्तराहुतिपतनेऽप्ययमेव विधिः तस्यापि फलतः स्कन्नत्वात् तत्तुल्यन्यायत्वाच्च ॥

यदि पूर्वस्यामाहुत्यां हुतायामाहवनीयो ऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदन्ननन्तरे शकले हिरण्ये वा जुहुयात् । ८ ।

यस्माद्दारोरुद्दायेदनन्तरः सो ऽनन्तरः शकलः । तस्मिंस्तत्स्थे हिरण्ये वा जुहुयात् उत्तराहुतिमित्यर्थः मन्त्रलिङ्गानुरोधात् । तथोत्तमे शकले हिरण्यं निधायेत्येव भारद्वाजः । वदन्निति वचनात् मन्त्रमध्ये होमः स्वाहाकारस्त्वन्तत एव भवति ॥ ततः शेषसमाप्तिः । तत्र स्रुक्प्रतितपनमुपसमिन्धनं चाहवनीयस्यासंभवान्निवर्तते । प्रतितपननिवृत्तेरेवोद्देशनमपि निवृत्तं भवति । परिसमूहनादेस्तु निवृत्तिः शकलहिरण्ययोरग्निप्रतिनिधित्वेन विधानात् । यस्याप्यजस्र आहवनीयस्तस्यापि प्रतिनिधावेवाग्निहोत्रसमाप्तिः अविशेषात् । ततो मन्थनम् ॥

यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारः स्कन्देत्तं स्रुवस्य बुध्नेनाभिनिदध्यान्मा तमो मा यज्ञस्तमन्मा यजमानस्तमन्नमस्ते अस्त्वायते नमो रुद्र परायते नमो यत्र निषीदसि । अध्वर्युं मा हिंसीर्यजमानं मा हिंसीरिति यदि पुरस्तात् । ब्रह्माणं मा हिंसीर्यजमानं मा हिंसीरिति यदि दक्षिणतः । होतारं मा हिंसीः पत्नीं मा हिंसीर्यजमानं मा हिंसीरिति यदि पश्चात् । आग्नीध्रं मा हिंसीः पशून्मा हिंसीर्यजमानं मा हिंसीरिति यद्युत्तरतः । ९ ।

बहिःपरिधीति देशोपलक्षणं यदि पुरस्तादिति लिङ्गात् ब्राह्मणे परिध्यग्रहणाच्च। तेनान्वाधानप्रभृत्या प्रयाजारम्भादयं विधिः। अन्यत्र तु तूष्णीमङ्गारं प्रहृत्य सर्वप्रायश्चित्तमेव। बुध्नो मूलम्। अभिनिदध्यात् अभिपीडयेत्। मा तम इत्येतत्सर्वास्‌ दिक्षु समुच्चीयते॥

आहं यज्ञं दधे निर्ऋतेरुपस्थात्तं देवेभ्यः परिददामीत्येनमादाय। १०।

इति द्वितीया कण्डिका।

सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्त्वा जहाम गोपोषं नो वीरपोषं च यच्छेत्येनमग्नौ प्रहरति। १।

गतः॥

प्रहृत्य वाभिजुहुयात्। २।

तूष्णीं प्रहृत्य मन्त्रेण वाभिजुहुयात्॥

यदि कालसंनिकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य जुहुयात्। ३।

प्रवासादौ क्षेमारूढोऽग्निरग्निहोत्रकालसंनिकर्षे यदि विहरणाय मथ्यमानो न जायेत तदा लौकिकाग्निमाहृत्य गार्हपत्यायतने

निधाय विहृत्य जुहुयादित्यर्थः । तथा च बौधायनः अथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयात् अपि वा लौकिकमाहृत्य विहृत्याग्नीनन्तराग्णिं निधाय जुहुयादिति । आश्वलायनेनापि अग्निहोत्राय काले ऽग्नावजायमान इति वदता समारूढविषयत्वमेवास्य विधेः ख्यापितम् । नह्यनुगतो ऽग्निरग्निहोत्राय मथ्यते. अपि तु सर्वकर्मार्थं समारूढस्तु कदाचिदग्निहोत्रायैव मथ्यते प्रवासादाविति युक्तं तद्विषयत्वम् ॥ तत्राजस्राग्निबहुषु समारूढेषु य एवाग्निर्मथ्यमानो न जायते स एवाहर्तव्यः ॥ एवं विहरणकालप्रभृत्या होमकालादयमेव विधिः । होमकालातिपत्तौ तु कालातिपत्तिविधिरेव नायं विधिः ॥ अनुगतिविषये तु केवलगार्हपत्यानुगतावुभयानुगतौ च मथ्यमानस्याजन्मनि यो विधिः स यस्य वोभावनुगतावित्यत्रैव दर्शितः ॥ अन्यत्तु मतम् । मथ्यमान इत्यविशेषवचनादनुगतिविषये ऽपि समानो ऽयं विधिः कालसंनिकर्ष इति च प्राधान्याद्धोमकालसंनिकर्षो गृह्यते । तेनानुगतिविषये ऽपि होमकालासत्तौ यस्याहवनीय इत्यादिविधिना मथ्यमानस्याजन्मनि भवत्येवायं विधिः । अनासत्तौ तु होमकालस्य यथाविहितप्रायश्चित्तान्येव भवन्तीति ॥

**अथात्वरमाणः पुनर्मन्थेत् । ४ ।**

आगामिकालविप्रकर्ष एवात्वरमाणो मन्थेत् अन्यथा पुनरनुकल्पः प्रसज्येत न च तच्छक्तिविषये युक्तमिति भावः ॥

**यद्यन्यं न विन्देदजायै दक्षिणे कर्णे होतव्यम् । ५ ।**

अजादयो ऽग्नेः प्रतिनिधीयन्ते मुख्यत्वादिसामान्यात् यथोक्तं ब्राह्मणे

तमग्निर्देवता अन्वसृज्यत गायत्रीछन्दो रथंतरसाम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तेत्यादि। तस्माद्विकारोऽग्निलिङ्गानां मन्त्राणाम्। तत्रोद्धरणअपणप्रतितपनाद्यन्ध-भावान्निवर्तते। तथा श्रपणोद्धरणाभावादजादीनां गार्हपत्ये स्थापनमपि निवृत्तम्। परोग्निहोमपक्षे तु होमार्थमवस्थापयन्ति॥

अजस्य तु ततो नाश्नीयात्। ६।

अजजातिसंबन्धि मांसं क्षीरादि वा किंचिन्नाश्नीयात्। कर्णे चेन्मांसवर्जनमित्याश्वलायनः॥

यद्यजां न विन्देद्ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्। ७।

ब्राह्मणोऽप्यजया व्याख्यातः॥

ब्राह्मणं तु वसत्यै नापरुन्धीत। ८।

अपूर्वोढार्थं वचनम्॥

यदि ब्राह्मणं न विन्देद्दर्भस्तम्बे होतव्यम्। ९।

भवत्यत्र श्रुतिः अग्निवान्वै दर्भस्तम्ब इति॥

दर्भांस्तु नाध्यासीत। १०।

अन्यत्र ब्रह्मयज्ञाद्यङ्गभूतादासनादिति द्रष्टव्या अविरोधात्॥

यदि दर्भान्न विन्देदप्सु होतव्यम्। ११।

कार्यकारणयोरभेदादिति भावः। भवति चात्र श्रुतिः अग्निं या गर्भं दधिर इत्यादि॥

आपस्तु न परिचक्षीतेमा भोजनीया इमा अभोजनीया इति। १२।

आपस्तु बीभत्सा अपि न वर्जयेदित्यर्थः। दाहदोषादपि न बीभत्सेतेत्याह॥

अप्यभोजनीयस्यैतं संवत्सरं परिगृह्णीयादेवापः।१३।

अभोजनीयः अभोज्यान्नः॥

अद्भिस्तु न पादौ प्रक्षालयीत। १४।

सुखार्थस्य प्रक्षालनस्य निषेधो न शौचार्थस्यापि, प्रयतस्यैव कर्माधिकारात्॥

सांवत्सरिकाण्येतानि व्रतानीत्याश्मरथ्यः। यावज्जीवमित्यालेखनः। १५।

सांवत्सरिकत्वविकल्पाभावः स्वमते, अप्यभोजनीयस्यैतं संवत्सरमिति लिङ्गात्। श्रुतिश्च भवति संवत्सरं हि व्रतं नातीति॥

संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्। १६।

व्रातपत्येष्ट्या व्रतनिवृत्तिः॥

अग्नये क्षामवते ऽष्टाकपालं येषां पूर्वापरा अन्वञ्चः प्रमीयेरन्। गृहदाहे वा। १७।

पूर्वे चापरे च वृद्धबाला वंश्या यद्यन्वञ्चः संतता म्रियेरन् हतोऽन्या

गृह्याः तत्रेयमिष्टिर्नैमित्तिकी सिध्यति च तत्र कामो वाक्यशेषात्. यथा नैषां पुरायुषो ऽपरः प्रमीयते नास्यापरं गृहान्दहतीति च॥

अग्नये विविचये ऽष्टाकपालं यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्मिथो वा। १८।

अन्यैर्लौकिकैर्वैदिकैर्वा संसर्गे पञ्चानां परस्परं संसर्गे च इयमेवेष्टिरुत्सर्गेण भवति. अपवादे लन्याः ताश्च समारोपणेन विविक्तेष्वग्निषु भवन्ति। समारोपणमन्त्र एव तु तंतमग्निं हंसः शीरनीरे इव विवेक्ष्यति। तथा संसर्गे प्रकृत्यारण्योरग्नान्समारोपणमेव बोधायनः॥

अग्नये विपृचे ऽष्टाकपालं यदि गार्हपत्याहवनीयौ। १९।

संसृज्येयातामिति विपरिणामेनान्वयः. गार्हपत्याहवनीयाविति वचनात्। तयोः पृथगेकदेशसंसर्गे न भवतीयमिष्टिः। एवमुत्तरत्रापि द्रष्टव्यम्॥

अग्निना विपृचा वयं गीर्भिः स्तोमं मनामहे। स नो रास्व सहस्रिणः॥ कविरग्निः समिध्यते विप्रो यज्ञस्य साधनः। विपृक्त्वं रास्व नो वस्विति याज्यानुवाक्ये। २०।

गतः॥

अग्नये वीतये ऽष्टाकपालं यदि गार्हपत्यदक्षिणाग्नी दक्षिणाग्न्याहवनीयौ वा। २१।

पूर्ववदन्वयः॥

अग्नये शुचये ऽष्टाकपालं यदि प्रदाव्येनाभ्यादाह्येन शवाग्निना वा॥ अग्नये संकुसुकायाष्टाकपालं यदि सूतकाग्निना॥ संकुसुको विकुसुको विकिरो यश्च विष्किरः। मापाज्येन नलेध्मेन क्रव्यादं शमयामसि॥ अग्निन्वयं संकुसुके ऽग्नौ रिप्राणि मृज्महे। अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषदिति याज्यानुवाक्ये॥ अग्नये ऽप्सुमते ऽष्टाकपालं यदि वैद्युतेन। २२।

संसृज्येरन्नग्नय इत्यन्वयः सर्वत्र। प्रदाव्यो दावाग्निः। अभ्यादाह्यो गृहदाही। शवाग्निश्चिताग्निः। सूतकाग्निर्जातकर्मार्थः। वैद्युतो ऽशनिप्रभवः। संकुसुकादन्यासामाम्नाय एव याज्यानुवाक्याः॥

यदि सर्वाः संनिपतेरन्विविचये निरूप्य शुचये निर्वपेद्व्रातभृतीं तृतीयामप्सुमतीं चतुर्थीं क्षामवतीमन्तं परिक्रमयेत्। २३।

यत्र तु गृहदाहादिनिमित्तसमुच्चयात् क्षामवत्यादयो ऽप्सुमत्यन्ताः सर्वा इष्टयः संनिपतेयुः तत्र निमित्तक्रमभेदे सत्यप्यनेनैव क्रमेणेष्टीर्निर्वपेत्. व्रातभृतीं चाधिकां तृतीयां। तत्राप्सुमतीं चतुर्थीं निरूप्य ततो विविगादिभ्यः संकुसुकान्तेभ्यः शुचिवर्जं निर्वपेत्। ततः क्षामवतीमाद्यां सतीमन्तं गमयेत्॥

व्रातभृतीं द्वितीयामेके समामनन्ति । व्रातपतीमुत्तमाम् । २४ ।

अथवा विविचये निरूप्य व्रतभृते निर्वपेत् ततोऽनन्तरोक्तेनैव क्रमेण शुच्यादिभ्यः क्षामवदन्तेभ्यः ततोऽन्ते व्रातपतीमित्यर्थः । कतिपयनिमित्तसंनिपाते तु क्रमोऽवेक्ष्यो भवन्ति ॥

इति तृतीया कण्डिका ।

गर्भं स्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः । पृथिव्यामवचुश्चोतैतन्नाभिप्राप्नोति निर्ऋतिं पराचैरित्यग्निहोत्रस्थालीं स्रवन्तीमभिमन्त्र्य विधुं दद्राणमिति संदध्यात् । १ ।

तत्राप्य संधानायोग्यतायां अन्या आहर्तव्या । स्कन्ने तु स्कन्नप्रायश्चित्तमपि स्यात् ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम् । २ ।

एतदुक्तं ब्राह्मणे तत्तया कुर्यादित्यर्थः । इदं च तत्रोक्तं आरब्धदर्शपूर्णमासः संस्थयोरन्यतरं स्वकालादतिपाद्यानडुद्दक्षिणां पथिकृतीं निर्वपेदिति । तां च कृत्वा वैश्वानर्यपि कार्या निमित्तैक्यात् एकस्मिन्दोषे श्रूयमाणानीति वचनाच्च । ते च कालातिपन्नैरिष्टिभिरपि कार्या कालातिपन्त्यर्थत्वात्तयोः ॥ उक्तं च बौधायनेन पथिकृतं निरूप्य

वैश्वानरं द्वादशकपालं निर्वपेदग्यतिपन्नां प्रतियजेदिति। कल्पान्तरमप्याह तत्राह स्म ह शालीकिः पाथिकृतं निरूप्य वैश्वानरं द्वादशकपालं समानतन्त्रमनुनिर्वपेन्न चातिपन्नां प्रतियजेदिति। तत्र च यावदुत्तरस्य कर्मणः कालस्तावदेवेष्ट्यातिपन्नेष्टिः। उत्तरेण लब्धे काले प्रायश्चित्तमात्रं तदधिकाराय क्रियते नातिपन्नेष्टिः. अकाले कृतस्याकृतत्वात्॥ अथापद्यकृतप्रायश्चित्तस्यैव गौणमेनं कालमाहुः कल्पान्तरकाराः। भारद्वाजस्तावत् आ दर्शात्पौर्णमासस्य कालो नातीयात्. आ पौर्णमासाद्दर्शस्येति. कालातिक्रमे ऽप्यापदि यजेतेति। निदानकारो ऽप्याह सर्वत्रापूर्यमाणपक्षो दर्शस्य स्थानं कृष्णपक्षः पौर्णमासस्येति. तथा पौर्णमासेन हविषापरपक्षमभियजेत आमावास्येन पूर्वपक्षमिति च॥ वचनान्तराणि कल्पान्तरत्वान्न लिख्यन्ते। समानमेतद्द्विबहूनामतिपत्तावपीति द्रष्टव्यम्॥

समानतन्त्रे वा मुख्यः कार्यः। ३।

यो ऽयं पाथिकृतः पुरोडाशः सो ऽतिपन्नेष्ट्या सह समानतन्त्रे प्रयोगे मुख्यः कार्य इत्यर्थः। तत्रातिपन्नेष्टिः सर्वथातीतकालत्वेन संभवतीति गौणकाल एव व्यवतिष्ठते। न चास्मिन्कल्पे वैश्वानरो शाखान्तरीयत्वात् पाथिकृतेन सहातिपन्नयागनिवृत्तेश्च। एवमुत्तरविकल्पयोर्द्रष्टव्यम्। अथ प्रवृत्तस्यातिपत्तौ शाखान्तरीयं विधिमाह॥

अथैकेषाम्। वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रतते ऽन्तरेतामिष्टिं निर्वपन्ति। य एवासावाग्नेयो ऽष्टाकपालः पौर्णमास्यां यो ऽमावास्यायां तमग्नये पथिकृते

कुर्यात्। तेनैव पुनः पन्थामवैति न यज्ञं विच्छिनत्तीति विज्ञायते। ४।

यस्य प्रारब्धेष्टिमध्ये विहृता स्यात्तस्य यदि मध्येयज्ञं पथिकृती क्रियेत तदा स यज्ञः पूर्वप्रततो विच्छिद्येत न चान्या कर्तव्येत्यतां. निर्वृत्य दोषमतिपन्नायाः कर्तव्यत्वात्। अतो य एव तत्राच्युत आग्नेयः स एव पथिकृद्गुणकः कार्यः तेनैव पुनर्यज्ञस्य विहृतस्य पन्थानं प्रतिपद्यते न च यज्ञो विच्छेदितो भवतीति॥ स चायं कल्पः प्रवृत्तस्यातिपत्तौ पूर्वाभ्यां विकल्पाभ्यां विकल्प्यते शाखान्तरीयत्वात्। अप्रवृत्तस्य तु पूर्वावेव भवतः प्रवृत्तैकविषयत्वादस्य। सत्याषाढस्तु पथिकृतीमपि प्रवृत्तविषयां वष्टि. यथा एतां प्रकृत्याह इति प्रवृत्तस्य कालापनये अप्रवृत्तस्य वैश्वानरीयमिति। नायमभिप्रायः सूत्रकृतः तस्य सामान्यतो वचनात् अत्र विशेषवचनाच्च॥

संयाज्ये एव पथिकृती स्यातामित्यपरम्। ५।

अथवा न केवलमिष्टिरेव मध्येयज्ञं कार्या गुणविकारोऽपि तस्य न कार्यः। संयाज्यामात्रं विकुर्यात् अग्ने नया देवानामिति. सर्वमन्यद्याप्रकृतीत्यर्थः॥ एवं चानन्तरस्यैवायं विधिर्विकल्पो न पूर्वयोरित्युक्तं भवति। अस्त्वेवं दर्शपूर्णमासयाजिनः सतस्तदतिपत्तौ विधिः. अनारब्धदर्शपूर्णमासस्य तु को विधिर्भवति। नन्वस्ति यज्ञविभ्रष्टस्येष्टिर्ब्राह्मणविहिता यो यज्ञविभ्रष्टः स्यादिति। तां सूत्रकारोऽप्यनुक्रमिष्यति काम्येष्टिप्रकरणे तस्मा प्रवर्तिष्यते। यतो यज्ञविभ्रष्टत्वं दर्शपूर्णमासयोरतिपत्तौ व्याख्यातमुपग्रन्थकारेण. यथा को नु खलु

विभ्रेष इति प्रकृत्याह यस्याग्निहोत्राकृती अन्योऽन्यस्थानमापद्येते यत्र वा दर्शपूर्णमासाविति । अन्योऽन्यस्य स्थानमापद्येते इति. गौण-कालस्याप्यतिपत्ताविव्यर्थः । गौणकालश्च दर्शित एव प्राक् ॥ अन्यच्च मतम् । न यज्ञातिपत्तिमात्रात्तावद्यज्ञविभ्रष्टो भवति प्रक्रान्तादुप-रतस्यैव लोकशास्त्रयोर्भ्रष्टत्वप्रसिद्धेः. यथा योगभ्रष्टः संन्यासभ्रष्ट इति । तथा यो यज्ञविभ्रष्टः स्यादिति प्रकृत्य उपक्रम्याशक्नुवन्यज्ञविभ्रष्ट इत्येव सत्याषाढः । तस्माद्यत्रेष्टिपशूनां प्रक्रान्तानां मध्ये विभ्रेष तत्रेयमिष्टिर्भवति ॥ तत्र दर्शपूर्णमासविभ्रेषे ऽनतिपन्नगौणकाले वि वा एतस्येत्येष विधिर्वैशेषिकत्वादनुसंधातव्यः । सोमविभ्रेष तु सोम एव वक्ष्यते. सप्तदर्शनाग्निष्टुताग्निष्टोमेन यज्ञविभ्रष्टो यजेतेति । दर्वि-होमविभ्रेषे च दर्विहोमः सप्तहोता. सप्तहोत्रा यज्ञविभ्रष्टं याजये-दिति ॥ किमिदानीमनारब्धदर्शपूर्णमासस्य तदतिपत्तौ नास्त्येव प्रायश्चित्तम् । ओमिति ब्रूयात् अथवा पथिकृतवैश्वानरावेव निर्व-पेत् प्राप्तकालयोरतिपादनात् । तदुक्तं बौधायनेन अनन्वारब्धदर्श-पूर्णमासस्य प्रायश्चित्तकरण इति कुर्यादिति बौधायनो न कुर्यादिति शालीकिरिति । यस्तु प्रथमपूर्णमासेनेष्ट्वा प्रथमदर्शमतिपातितवांस्तस्य च पथिकृतवैश्वानरावेव स्यातां आरब्धदर्शपूर्णमासत्वात्. आरम्भस्य चोभयोरेकत्वात्. अन्यथारम्भार्थानां सारस्वतादीनां दर्शे ऽप्यावृत्ति-प्रसङ्गाच्च । तथारब्धदर्शपूर्णमासस्य पश्वाग्रयणातिपत्तावप्येतदेव प्राय-श्चित्तं वेदितव्यम् । पशोस्त्वनुग्रह उक्तो मनुना. यथा इष्टिं वैश्वा-नरीं नित्यं निर्वपेदब्दपर्यये. क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभव इति ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीत्युक्तम्।६।

उक्तमिदं ब्राह्मणे तद्यथाब्राह्मणं कुर्यादित्यर्थः। तत्र चेदमुक्तं. यः पुरस्ताच्चन्द्रोदयवतीं तिथिं चतुर्दशीं तेन मिश्रां वा पञ्चदशीं यजनीयमहर्बुद्ध्वा तदनुगुणं प्रवृत्तदर्शतन्त्रो हविर्निर्वापोत्तरकाले तत्त्वं जानीयात् स निरुप्तस्य हविषस्तण्डुलान्स्थूलमध्यमाणुभेदेन त्रेधा विभज्य मध्यमानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। अधिश्रपणादिष्वग्निं दातारमुपलक्षयेदित्यर्थः। स्थविष्ठानिन्द्राय प्रदात्रे दोहे चरुं कुर्यात् अणिष्ठान्विष्णवे शिपिविष्टाय प्रातर्दोहे। तत्र च धर्मा यथाग्वा व्याख्याताः। चरुसांनाय्ययोः श्रपणात् स्थानाच्च तयोरेव गुणविकारौ. पुरोडाशस्त्वाग्नेयविकार एव। पुनरिज्यायास्तु विकल्पः। तदुक्तं एकामेव यजेत द्वे एव यजेतेति॥ नायं विधिरसंनयतः सांनाय्यसंयोगात्। आह चाश्वलायनः सांनाय्ये पुरस्ताच्चन्द्रमसाभ्युदित इति। भारद्वाजस्त्वाह यो ऽयं नासंनयता विद्यत न्त्येकं विद्यत इत्यपरमिति। विद्यत इति पक्षे अप्सु श्रपणं सर्वैः शाग्नवच्च धर्माः॥

अनिरुप्ते ऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः।७।

यदा पुनरर्वाङ्‌निर्वापादकालप्रवृत्तिर्ज्ञाता तदा संशयः. किं प्राकृत्या एव देवताये निर्वप्तव्यं उत वैकृतीभ्य इति। तत्र प्राकृतीभ्य इत्याश्मरथ्यो मन्यते। प्राकृतीभ्य इत्यविवक्षिता संख्या॥

तण्डुलभूतेष्वपनयेत्।८।

तां तु प्राकृतीं देवतां तण्डुलीभूतेषु व्रीह्यादिषु पूर्ववद्वैकृतदेवता-
निर्वेशनेनापगमयेत् ॥

व्यृद्धभाग्भ्य इत्यालेखनः । ९ ।

वि वा एतं प्रजया पशुभिरर्धयतीत्यर्थवादेन व्यृद्धिहेतुत्वख्यापना-
दभ्युदितं हविर्व्यृद्धमित्युच्यते । तद्भजन्ते या वैकृत्यो देवतास्ता
व्यृद्धभाजः । ताभ्यो निर्वपेदित्यर्थः ॥

विनिरुप्ते ऽभ्युदिते प्राकृतीभ्यः शेषम् । १० ।

विनिरुप्तं अर्धनिरुप्तम् । तत्राभ्युदिते प्राकृत्या एव देवतायै शेषं
निर्वपेदित्यर्थः ॥

तण्डुलभूतेष्वपनयेत् । ११ ।

व्याख्यातः ॥

यस्यागृहीतं हविरभ्युदियाद्व्रतचर्यां वा नोदाशंसीत ।
स त्रेधा तण्डुलानिति पूर्ववत् । अथोत्तरस्मै हविषे
वत्सानपाकृत्योपवसेत् । १२ ।

अथ निरुप्तानिरुप्तविशेषयोः शाखान्तरीया अपि कल्पा विकल्पार्थं
प्रदर्श्यन्ते । अगृहीतं अनिरुप्तम् । अनिरुप्तविषये पूर्ववदभ्युदितेष्टिं कृत्वा
पुनरिष्टिं कुर्यात्. निरुप्तविषये ऽपि वक्ष्यमाणव्रतचर्याकल्पाशक्तावेव
कुर्यादित्यर्थः । व्रतचर्यां वा नोदाशंसीत. व्रतचर्या उपवसथाभ्यामः
तां च नोदाशंसीत न शक्ष्यामि कर्तुमित्युदीक्ष्य नाशंसीत नेच्छे-

दित्यर्थः। तथा च व्रतान्तकावेवेति कात्यायनः। पुनरिज्यानियममा-
चमत्राधिकमिति वेदितव्यम् ॥

**अथ यस्य गृहीतं हविरभ्युदियात्सैव प्रायश्चित्तिः सा व्रतचर्या। १३।**

निरुप्तविषये सैवामावास्यैव पुनरभ्यस्ता प्रायश्चित्तिः सा वा व्रतचर्या व्रत्यमहरेव वाभ्यस्तमित्यर्थः। तदत्र निरुप्तविषये ऽनन्तरसूत्रोक्तेन कल्पेन सह त्रयो ऽमी शाखान्तरकल्पा उक्ता भवन्ति. यथा प्रकृतिमेवाविकृतां कृत्वा तयैव पुनर्यजेत. अभ्युदितेष्टिं वा कृत्वा प्रकृत्या पुनर्यजेत. उपवसथमात्रं वा वर्धयित्वा पश्चाद्यजेतेति। तदेतदुक्तं बौधायनीये स ह स्माह बौधायनः सिद्धैरेवामावास्यैर्हविर्भिरिष्ट्वा पुनरुपोष्य श्वोभूते काम्यामनभ्युदितामव्यापन्नां यजेत. [illegible] ह स्माह शालीकिः यैषा ब्राह्मणेष्टिस्तया यक्षयेष्ट्वा पुनरुपोष्य श्वोभूते काम्यामनभ्युदितामव्यापन्नां यजेतेत्यपि वोपवसथ एवातिप्रवर्धेतेति ॥ सा व्रतचर्येत्यत्र प्रयोगमाह ॥

**वत्सान्मातृभिः संसृज्य पुनरपाकृत्य पूर्वेद्युर्दुग्धं दधि हविरातञ्चनार्थं निदध्यात्। १४।**

अन्यन्वाधानादि सर्वं कर्म यथानुष्ठितमेवावतिष्ठते। प्रातर्दोहार्थं त्वपाकृतान्वत्सान्मातृभिः संसृज्य सायंदोहार्थं पुनरुपाकृत्य दध्युत्पादयेत्। यत्तु प्रागुत्पन्नं दधि हविस्तदातञ्चने निदध्यात् प्रतिपादयेत् ॥ यदि प्रातर्दोहो ऽप्युत्पन्नः स च तस्मिन्नेव दध्यभिदोहत्वेन योज्यो न त्याज्यः तत एव न्यायात्। यस्तु निरुप्त आग्नेयः स

धार्यते. अपितश्चेत् त्याज्य एव. शुष्कपर्युषितत्वादिदोषप्रसङ्गात् । ततः श्वोभूते कृतान्तात्प्रक्रम्य यजेत । यदा तु कृतायामिज्यायां चन्द्रदर्शनं तदा पुनरिज्यैव. अकाले कृतस्याकृतत्वात् ॥

अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेत्प्रवसेद्वा व्रत्ये ऽहनि मांसं वाश्नाति स्त्रियं वोपैति । १५ ।

व्रतभ्रेषो ऽव्रत्यचरणम् । व्रत्ये ऽहनीति मध्येवचनात् न पूर्वाभ्यां संबध्यते । तेन सार्वकालिकयोरेव व्रतभ्रेषप्रवासयोर्भवति व्रातपती । व्रत्ये ऽहनीति काकाक्षिवदुभयत्र संबध्यत इत्यपरम् । बौधायनस्त्वाह. य आहिताग्निः सन्नव्रत्यमिव चरेदित्याधानप्रभृत्येतद्वेदमुक्तं भवतीति बौधायनः. अन्वाहितेष्वेवोपसमाहितेषु चेति शालीकिरिति ॥

अग्नये व्रतभृते* ऽष्टाकपालं यद्यार्तिजमश्रु कुर्यात् । १६ ।

आर्तिजग्रहणं हर्षजाश्रुव्यावृत्त्यर्थम् । व्रतभृद इति दकारश्छान्दसः प्रामादिको वा । व्रत्ये ऽहनीत्यनुवर्तते । तथा च बह्वृचाः तदाहुर्य आहिताग्निरुपवसथे ऽश्रु कुर्वीतेति ॥

त्वमग्ने व्रतभृच्छुचिर्देवाँ आसादया इह । अग्ने हव्याय वोढवे ॥ व्रतानुबिभ्रद्व्रतपा अदाभ्यो यजा नो

* Thus according to the commentary; the MSS. of the text, however, read व्रतभृते.

देवाँ अजरः सुवीरः। दधद्रत्नानि सुविदानो अग्ने गोपाय नो जीवसे जातवेद इति याज्यानुवाक्ये॥ व्रातभृतीं प्रवास एके समामनन्ति व्रातपतीमश्रुकर्मणि।१७।

गतौ ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

यद्यग्निहोत्र्युपसृष्टा वाश्येत यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि। अभयं नः पशुभ्यो नमो रुद्राय मीढुष इति जुहुयादभि वा मन्त्रयेत।१।

अग्निहोत्रद्रव्यधुग्धेनुः अग्निहोत्री। सा यदि प्रस्नवणार्थमुपसृष्टा संयोजितवत्सा क्रन्देत्तदानया जुहुयात्तां वाभिमन्त्रयेत ॥

यद्यु वै निषीदेदेतयैव यस्माद्भीषा न्यषद इत्यभिमन्त्र्योदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्युपस्थाप्य तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यात्। अवर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्चतीति विज्ञायते।२।

एतयैव न्यषद इति विकृतयोत्थापयत्यध्वर्युः। तां दुग्ध्वा सह क्षीरेण तस्मै दद्याद्यजमानो यस्यान्नं न भुञ्जीत। तथा च कृते

तस्मिन्नेवावर्तिलक्षणं पाप्मानं प्रतिमुञ्चति आसजति। अवर्तिः दारिद्र्यं अशनाया वा ॥

अपि वा दण्डेन विपिष्याविपिष्य वोत्थाप्यात्मन्कुर्वीत। ३।

अपि वा पूर्ववदभिमन्त्र्य दण्डेन विपिष्य प्रणुद्य अविपिष्यैव वानेन छापयित्वोत्थाप्यात्मनि कुर्वीत. न ब्राह्मणाय दद्यादित्यर्थः ॥

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति दर्भस्तम्बमालुप्य ग्रासयेत्। ४।

तामात्मनि कृतामेवं ग्रासयित्वा ततो होमाय दुह्यादिति भावः ॥

यद्यु वै लोहितं दुहीत व्युत्क्रामतेत्युक्त्वा दक्षिणमग्निं परिश्रित्य तस्मिन्नेतच्छ्रपयित्वा तस्मिन्व्याहृतीभिस्तूष्णीं वा हुत्वा तां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्स्यात्। ५।

व्युत्क्रामत अन्यत्र गच्छतेति यजमानादीनां प्रैषः। यमनभ्यागमिष्यन् यं प्रति कस्मैचिदपि कार्याय न गमिष्यति तस्मै दद्यादित्यर्थः ॥

यदि दुह्यमानं स्कन्देद्यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः। पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयीत्येनदभिमन्त्र्य समुद्रं वः प्रहिणोमीत्यद्भिरुपसृजेत्। ६।

सामान्यतो ऽग्निहोत्रस्कन्दने प्रस्कान्द्यौस्त्वियमिमत्रिणं उदकमयेत्यद्भिः संसर्गं च वक्ष्यति। तस्यायं पुरस्तादपवादः॥

यदि दुह्यमाना स्थालीमवभिन्द्यान्निर्णिज्यान्यां दुह्यात्तां वैव। ७।

स्थालीं* चेदेकदेशतो भिन्द्यात् तदा प्रक्षाल्य तां स्थालीं तस्यामेवान्यां गां दुह्यात्. तामेव वा गां सा चेत्पुनः प्रपीना स्यात्। सर्वभेदे तु स्थाल्यन्तरमागमयेत्॥

यदि दुह्यमानं दुग्धं ह्रियमाणं हृतमधिश्रीयमाणमधिश्रितमुद्वास्यमानमुद्वासितमुन्नीयमानमुन्नीतं वा स्कन्देत्तदेव यादृक्कीदृक् च होतव्यमन्यया वाभिदोह्यम्। ८।

दुह्यमानस्कन्दने प्रायश्चित्तमुक्तं पूर्वतरसूत्रे। तथा दुग्धादीनामपि परस्ताद्वक्ष्यते। तत्रोभयेषामपि द्रव्यमनेन नियम्यते. अतो दुह्यमानस्य पुनर्ग्रहणम्। ह्रियमाणं गार्हपत्येऽधिश्रयणार्थम्। तदेव यादृगित्यादि स्कन्नशिष्टमेव यावत्तावद्दाल्पं शिष्टमपि होतव्यमित्यर्थः। अथ यद्यल्पतरमवशिष्टमनाहुतिक्षमं स्यात्तदा तस्यापर्यन्यां दोहयित्वा वर्धितेन होतव्यमित्यर्थः॥

यदि सकृदुन्नीतं स्कन्देद्द्विस्त्रिर्वा न तदाद्रियेत।

* Corrected; the MSS read स्थाली

यद्यु वै चतुर्थमुन्नीतं स्कन्देत्स्थाल्यां शेषमवनीय चतुरभ्युन्नीय होतव्यमन्यया वाभिदोह्यम्। ९।

यदि सकृद्विस्त्रिर्वोन्नीतं क्रमशो युगपद्वा स्कन्देत् न तदाद्रियेत. शिष्टेनैव जुहुयात्। आद्रियेतैव तु स्कन्नप्रायश्चित्तं. आहुतिमात्रस्कन्दने प्रायश्चित्तविधानात्। यदि पुनश्चतुर्थं स्कन्देत्तदा स्रुचि शिष्टं स्थाल्यामानीय पुनरुन्नयितव्यं अभिदोह्यं वा स्रुचि॥ तत्र चतुरित्येतदनुवादत्वात् पञ्चमस्याप्युपलक्षणं पञ्चावत्तिनः। तेन चतुर्थमित्येतदपि चतुर्थप्रभृतीत्युक्तं भवति। तथात्र प्राक् चतुर्थादनादरवचनात् पूर्वसूत्रे ऽप्युन्नीयमानमुन्नीतं वा स्कन्देदित्येतच्चतुर्थप्रभृत्येव स्कन्दने ऽवतिष्ठते। तस्य चानेन समुच्चयासंभवाद्विकल्पः। केचित्तु विनिवेशनं कुर्वन्ति. यत्र तु सकृद्विस्त्रिर्वोन्नीतस्कन्दने सति चतुर्थप्रभृत्यप्युन्नीतं स्कन्दति तत्रायं विधिः अन्यत्र पूर्व इति॥

इति पञ्चमी कण्डिका।

यद्युद्धृतस्य स्कन्देत्तन्निपद्य पुनर्गृहीत्वा तदेव यादृक्कीदृक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अथाज्येन वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात्। १।

उद्धृतस्येति आदिकर्मणि क्तः। उद्धृतं उत्थाय प्राङ्नेतुं प्रक्रान्तमित्यर्थः। प्राङ्नयनप्रभृत्युत्तरचोपादानात्। उक्तं च ब्राह्मणे छृहस्पतेरुन्नीतं सवितुः प्रक्रान्तं द्यावापृथिव्यं ह्रियमाणमिति॥ तदुद्धृतं

यत्र स्कन्देत्तन्निषद्य तत्राभिमृश्य स्कन्नस्योपरि स्थालीं निधाय तस्याः पुनः स्रुचि गृहीत्वा तदेवाभिवर्धितं होतव्यं न तु ततः पृथग्द्रव्यान्तरमुत्पादयितव्यमित्यर्थः । यथा चायमस्यार्थः तथा यद्दुह्यमानस्य स्कन्देदित्यादिश्रुतिरेव विभावितवत्या । व्याचष्टे च तां बौधायनः यथा. यद्दुह्यमानस्य स्कन्देत्तन्निषद्य पुनर्गृह्णीयादिति. स यत्रैव स्कन्दति तत्रैव स्थालीं निधायाभिनिष्टमानीय पुनरभ्युन्नीय तदेव यादृक्कीदृक्च होतव्यमिति ॥ पुनर्होमः प्रागेव व्याख्यातः । तस्मिन्हुते ऽव ते हेड इत्यनुद्रुत्योद्दुत्तममिति वारुण्यर्चा आज्याहुतिं जुहुयात् ॥

यदि प्राचीनं स्कन्देत्तदेव यादृक्कीदृक्च होतव्यमन्यया वाभिदोह्यम् । २ ।

प्राचीनं प्राक्प्रदक्षिणम. यावत्पुरतः पराहृतं स्यादित्यर्थः । अथास्मिन्नेव विषये शाखान्तरीयं विधिमाह ॥

अथैकेषाम् । यदि प्राचीनं ह्रियमाणं स्कन्देत्प्रजापतेर्विश्वभृति तन्वं हुतमसि स्वाहेत्येनदभिमन्त्र्यैतदेवाग्निहोत्रं स्यादित्याश्मरथ्यः । अन्यां दुग्ध्वा पुनर्होतव्यमित्यालेखनः । ३ ।

अत्र तु ह्रियमाणमिति विशेषणाद्यावन्नियच्छत्युद्रुत्याति वा तदा पूर्व एव विधिर्भवति. अन्यत्र पूर्वो वायं वा । तत्र प्रजापतेरित्यभिमन्त्रणमन्त्रो ऽस्कान्नित्यस्यापवादः । उपसर्गस्तु यथोक्त एव भवति । तत एतदेव स्कन्नशिष्टमग्निहोत्रद्रव्यं स्यात् न त्वन्यां दुग्ध्वा पुनर्हो-

तव्यमित्याश्मरथ्यमतम्। आलेखनमतात्तु पुनर्होमो ऽपि कार्यः। तत्राग्नेषस्कन्दने स्थाल्याः पुनरुन्नयनम्। स्थाल्यामप्यभावे आज्यं च प्रतिनिधिमाहाश्वलायनः. प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनम्. शेषेण जुहुयात्. पुनरुन्नीयाशेषे. आज्यमशेष इति॥

**यदि पुरः पराहृतं स्कन्देदनूदाहृत्य चतुरभ्युन्नीय होतव्यमन्यया वाभिदोह्यम्। ४।**

पुरः पराहृतं पुरस्तादुपसादनदेशं प्रति नीतमित्यर्थः। तत्रोपसन्नस्य पुरस्तादुपसादनादुपसाद्यमाने ऽप्ययमेव विधिः। अनूदाहृत्य स्रुचमनु स्थालीमानीय। चतुरित्युपलक्षणं पूर्ववत्॥

**यदि पुर उपसन्नं स्कन्देत्तदेव याहक्कीहक्च होतव्यमन्यया वाभिदोह्यम्। ५।**

दर्भेषूपसादनप्रभृत्या पूर्वाहुतेरयं विधिः. यदि पूर्वस्यामाहुत्यामिति पुरस्तादुपादानात् ततो ऽर्वागवध्यन्तरानुपादानाच्च। तथा च ब्राह्मणं. ऐन्द्राग्नमुपसन्नं अग्नेः पूर्वाहुतिरिति॥ अथास्मिन्नेव विषये शाखान्तरीयं विधिमाह॥

**अथैकेषाम्। यदि पुर उपसन्नमहुतं स्कन्देत्तदेव याहक्कीहक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अथाज्येन वारुणीमिति समानम्। ६।**

उपसन्नमहुतं उपसादनप्रभृति यावन्न हुतं तावदित्यर्थः। नन्वेवं

पूर्ववदनुक्तसिद्धे परावधौ अकृतमिति कस्मादुक्तम्। को दोषः। पूर्वं हि कथंचिद्गम्यमानत्वात् परावधिर्नोपात्तः. इदानीं शाखान्तरे सो ऽपि पठित इति तथैव दर्शितः। तेनाचोद्यमेतत्॥ पुनर्होमादि समानमुद्गतस्कन्दनेन। एवमग्निहोत्रस्कन्दने द्रव्योत्पत्तिरुक्ता। इदानीं प्रायश्चित्तमाह॥

अस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु॥ अस्कानजनि प्राजन्या स्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषीमहीति स्कन्नमभिमन्त्र्योन्नभय पृथिवीमित्यद्भिरुपसृजेत्। ७।

उपसृजेत् संसृजेत्॥

यद्नाहुतिमात्रं विप्रुडेव सा। ८।

यदेकस्रुवमात्रं ततो ऽपि वा न्यूनं स्कन्नं तद्विप्रुण्मात्रकल्पमित्युपेक्षणीयम्। न तत्र प्रायश्चित्तमित्यर्थः॥

यदि सायं स्कन्देदा होतोः प्रातर्नाश्नीयात्। यदि प्रातरा होतोः सायं नाश्नीयात्। ९।

सायंस्कन्दने प्रातरा होतोः आप्रातर्होमं नाश्नीयात्. एवमा सायंहोतोः प्रातः। सर्वाग्निहोत्रद्रव्याणामयमेव विधिः स्कन्दने। द्रव्योत्पत्तौ त्वभिदोहनादिस्थाने तस्मातीयस्य द्रव्यस्य पुनराहरणमिति विशेषः॥

दिव्या वा एतमशनिरभ्यवैति यस्याग्निहोत्रं शिरिशिराभवति। समोषामुमिति ब्रूयाद्यं द्विष्यात्।१०।

शिरिशिरेति शब्दानुकारः। यस्याग्निहोत्रं शिरिशिरायते तस्यायमशनिपातः दुर्निमित्तमिति यावत्। तत्र यजमानद्वेष्यस्य नाम गृहीत्वाध्वर्युर्ब्रूयात् समोष देवदत्तमिति। ओषतिर्दाहकर्मा. तस्य संपूर्वस्य रूपं समोषेति॥

यस्याग्निहोत्रे ऽधिश्रिते श्वान्तराग्नी धावेद्गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वंसयन्नुद्रुत्यैतयैव भस्मना शुनः पदमपिवपेत्।११।

ध्वंसयन् इतस्ततो भस्म विकिरन् गत्वा शुनः पदानि भस्मनाभिपूरयेत्। अधिश्रयणप्रभृति श्रोद्वासनादिदं प्रायश्चित्तम्. आप्रदानमित्यपरे। अन्यदा सर्वप्रायश्चित्तमेव॥

यस्याग्निमनाहृतं सूर्यो ऽभिनिम्रोचेद्यच दीप्यमानं परापश्येत्तत आहृत्यैनं प्रविशानीति वैष आधीयते।१२।

अहरहरेनमाहरेयुरिति दक्षिणाग्नावुक्तम्। तत्र यद्यनाहृते ऽग्नौ सूर्यो ऽस्तमियात्तदा पुष्टगृहादियोनिविशेषमनवेक्ष्य यत्र दृष्टो ऽग्निः तत आहृत्यैनं प्रविशानीत्येष निधीयते। वाकारः प्रसिद्धौ. अथवा एनं प्रविशानीति वा तूष्णीं वा निधीयत इत्यर्थः। अभिनिम्रोचेदिति वचनात् अभ्युदये तूष्णीमाधेयः॥

इति दक्षिणाग्नेरनुगतस्याधानकल्पः। १३।

सर्वथानुगतस्यापि दक्षिणाग्नेर्यथायोन्युत्पाद्यायमेवाधानप्रकार इत्यर्थः। दक्षिणाग्नेरिति वचनात् सभ्यावसथ्ययोस्तूष्णीमेवाधानम्। प्रायश्चित्तं तु सर्वेषु सर्वप्रायश्चित्तमेव विशेषस्यानुक्तत्वात्॥

यस्याग्निमनुद्धृतं सूर्यो ऽभिनिम्रोचेत्। १४।

इति षष्ठी कण्डिका।

दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत्। अन्वङ्गार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत्। अन्वङ्ग्निहोत्रेणानूद्रवेत्। आयतने हिरण्ये ऽग्निं प्रतिष्ठाप्य नित्यमग्निहोत्रमुपसाद्य तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपस्थाय वारुणं चरुं निर्वपेत्। १।

अधिवृक्षसूर्ये प्रणयनस्योक्तत्वात् तदतिक्रमे प्रायश्चित्तमिदम्। अत उद्धरणशब्देन प्रणयनं लक्ष्यते. यथा यस्याग्नावग्निमभ्युद्धरेयुरित्यादौ। तथा 'यस्याहवनीयमप्रणीतमभ्यस्तमियादित्याश्वलायनः। तेनोद्धृते ऽप्यप्रणीते भवत्येव प्रायश्चित्तम्॥ वेदार्थवित् आर्षेय इति व्याख्यातं ब्रह्मौदने. तत्रैव बहुविपर्यौ वेदनं यस्य स बहुवित्। अथवा ब्राह्मण आर्षेय उद्धरेदिति ब्राह्मणस्य व्याख्या बहुविदिति। तच्च वेदनबहुत्वस्यापेक्षितत्वात् यस्ययस्य यतोयतो वेदनप्रकर्षः तस्यतस्य परिग्रहे गुणातिशय इति द्रष्टव्यम्॥ तच्चाहरणादारभ्य

प्रागुद्द्रवणादाहवनीयकर्मवर्जमध्वर्युणा कृते यजमानस्य परिकर्मी कश्चिद्दर्भेण बद्धं हिरण्यं पुरस्ताद्धरेत्। तमन्वङ् अनुगतो बह्वविदग्निमुद्धरेत् विधिवत् प्रणयेत्। तमन्वङ्ङग्निहोत्रेणाध्वर्युरनूद्द्रवेत्। ततः परिकर्मिणा स्थापिते हिरण्ये बह्वविदग्निं प्रतिष्ठाप्य मुञ्चति ततोऽग्निहोत्रमुपसादयत्यध्वर्युः॥ नित्यमिति नित्याग्निहोत्रमेवेदं न तु वैकृतं सत्पुनर्होमापेक्षमित्यर्थः। नित्यः पयसो नियम इत्यन्ये। तत आहवनीयस्येध्माधानादि प्रतिपद्या पूर्वाहुतेः कृत्वा ततो यावच्छ्राम्यति तावदनुच्छ्वसन्नासीत। उच्छ्वस्य हुत्वाग्निहोत्रं वृष्टिरसीत्यपामुपस्पर्शनान्ते कृते भूर्भुवः सुवरित्याहवनीयमुपस्थाय तदानीमेव वारुणं चरुं निर्वपेत्। श्वोभूत इति भारद्वाजः॥

व्रातभृतीं द्वितीयामेके समामनन्ति। ऋते हिरण्यात्प्रणयनमेके। २।

गतौ॥

यदि सायमग्निहोत्रकालोऽतिपद्येत दोषा वस्तोर्नमः स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत। ३।

अग्निहोत्रे संध्यादयः सायंप्रातर्होमकाला उक्ताः तेषां सर्वेषामतिपत्तौ प्रायश्चित्तमुपदिश्यते। तथा प्रदोषान्तो होमकालः. संगवान्तः प्रातः. तमतिनीयेत्याश्वलायनः। तत्र त्वापदि काला उक्ताः सूत्रकृता. यस्मर्ध्वंदिने जुहोतीत्यादिना। तथोपग्रन्थकारेणाप्युक्तं. सर्व-

महः प्रातराहुतेः स्थानं सर्वा रात्रिः सायमाहुतेरिति। भारद्वाजो ऽप्याह. सायंहोमं चोपोदयं जुहुयात् प्रातर्होमं चोपास्तमयम्. कालेन कालमनतिक्रम्य न स्कन्दन्ति न व्यथन्त इति विज्ञायत इति। तस्मादनापद्येतत्प्रायश्चित्तम्. आपदि तु होम एव क्रियेत। यावदुत्तरस्य कालः प्राप्स्यति. प्राप्ते तूत्तरस्मिन्न पूर्वः क्रियेत भ्रष्टकालत्वात्। प्रायश्चित्तं तु तत्र परस्ताद्दर्शयिष्यते॥ कालः समापद्यते येन स कालसमापादनीयः. तं हुत्वाप्राहरणादि। स एवाग्निहोत्रार्थे कैश्चिदिष्टः तन्निरासार्थमुक्तं नित्यमग्निहोत्रमिति। व्यक्तं चैतद्भारद्वाजेन यथा. दोषा वस्तर्नमः स्वाहेति जुहुयात्. एतदेव नित्यमग्निहोत्रमित्याश्मरथ्यः. अथालेखनः कालसमापादनीयमेवानेन मन्त्रेण होमं हुत्वा नित्यमग्निहोत्रं जुहुयादिति पूर्ववत्॥

यदि प्रातः प्रातर्वस्तोर्नमः स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत। ४।

व्याख्यातः पूर्वेण॥

वरो दक्षिणा। ५।

गतः॥

हुत्वाहवनीयमुद्वाप्यान्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीयेहैव क्षेम्य एधि मा प्रहासीन्मामुमामुष्यायणमित्यादित्यमुपस्थाय मैत्रं चरुं निर्वपेत्। ६।

अमुमामुष्यायणमिति यजमानस्य नामगोत्रयोर्निर्देशः यथा देवदत्तं भार्गवमिति ॥

सौर्यमेककपालमेके समामनन्ति। ७।

सौर्यस्याग्रयणोक्ता एककपालधर्माः कार्याः। स चाग्नेयविकारः ॥

संस्थितायामिष्ट्यामाहवनीयमेवैतदहरिन्धानावनश्नन्तौ वाग्यतावासाते यजमानः पत्नी च। ८।

आहवनीयमेवेति तमेवाहवनीयं सायंहोमार्थमिन्धानावित्यर्थः। अथवा सर्वाग्नीन्धनस्याश्वलायनादिभिरिष्टत्वात् तन्निवृत्त्यर्थ एवकारः॥

द्वयोः पयसा पूर्ववत्सायमग्निहोत्रं जुहुयात्। ९।

द्वयोः गवोरिति शेषः पूर्ववत्. यथा द्वयोः पयसा पशुकामस्य जुहुयादित्यत्रोक्तरीत्येत्यर्थः ॥

यस्याग्निमनुद्धृतं सूर्यो ऽभ्युदियाच्चतुर्गृहीतमाज्यं पुरस्ताद्धरेत्। अन्वङ्ङार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत्। अन्वङ्ङग्निहोत्रेणानूद्रवेत्। आयतने ऽग्निं प्रतिष्ठाप्योषाः केतुना जुषतां यज्ञं देवेभिरन्वितम्। देवेभ्यो मधुमत्तमं स्वाहेति प्रत्यङ्ङिपद्याज्येन जुहुयात्। १०।

व्याख्यातो ऽयमग्निनिम्रोचनविधिना। द्वयोस्तु विशेषः. हिरण्यवत्ते जुह्वां चतुर्गृहीतं हरेत्। तत्र प्रतिष्ठापिते ऽग्नावध्वर्युरग्निहोत्रमुपसाद्य पुरस्तादाहवनीयस्य प्रत्यङ्मुख उपविश्य उषाः केतुनेति जुहुयादिति ॥

अग्निहोत्रस्य स एव होमकल्पः। तत्प्रायश्चित्तं यत्प्रातः कालातिपन्नस्य । ११ ।

आ तमितोरप्राणन्नित्यादिर्वरदानान्तो होमकल्पो ऽनन्तरविधिना समानः । तथादित्योपस्थानादि द्वयोः पयसा होमान्तं प्रायश्चित्तमित्यर्थः ॥

एतावन्नाना । नात्राहवनीयमनुगमयति । १२ ।

तस्मिन्नेवाग्नौ नैवह्निः सायंहोमश्चेति भावः ॥

अथैकेषाम्। यस्याग्निमनुद्धृतं सूर्यो ऽभिनिम्रोचेद-भ्युदियाद्वा । १३ ।

इति सप्तमी कण्डिका ।

मनो ज्योतिर्जुषतां त्रयस्त्रिंशत्तन्तव इति द्वे चतुर्गृहीते जुहुयात् । १ ।

तयोरप्यग्निहोत्रार्थमुद्धृत एवाग्नौ होमः तदङ्गत्वात् ॥

यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्यो ऽभ्युदियाद्यथा विजनिष्यमाणो न विजायेत तादृक्तत्। आत्मानं वा ह यजमानो रुणद्धि सर्वज्यानिं वा जीयते। नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत। एकहायनो दक्षिणा । २ ।

यस्यानुदिते होष्यामीत्यभिसंधाय प्रक्रान्तमग्निहोत्रमनुदित एवाकृतं स्यात् तद्यथा प्रक्रान्तप्रसवा स्त्री सद्यो ऽप्रसूतार्तिमियात् तादृगार्तं भवति। तेन च यजमानो ऽप्यात्मानं रुणद्धि दुःखायात्मानं नयतीत्यर्थः। वाकारः चार्थे. हेति प्रसिद्धौ। ततो दुःखाय रुद्रः सर्वज्यानिं जीयते सर्वा बाधाः प्राप्नोति। तस्मादादर्तव्यमेतत्प्रायश्चित्तमिति भावः। नित्यमग्निहोत्रमित्यादि व्याख्यातम्॥

हुत्वा तदुद्वास्य पुनराधेयं तस्य प्रायश्चित्तिरित्याश्मरथ्यः। ३।

कृत्वा तदग्निहोत्रं विधिवदुद्वास्य पुनराधेयमपास्य प्रायश्चित्तत्वेन कार्यमित्याश्मरथ्यो मन्यते। न त्वन्येषामेतन्मतमित्यर्थः॥

अथैकेषाम्। यद्यन्ते स्यादुन्नीय प्राङुदाद्रवेत्। स उपसाद्या तमितोरासीत। स यदा ताम्येदथ भूः स्वाहेति जुहुयात्। प्रजापतिर्वै भूतस्तमेवोपासरत्स एवैनं तत उन्नयति नार्तिमार्छति यजमान इति विज्ञायते। ४।

एकेषां तु शाखिनां विज्ञायते। यद्यन्ते स्यात् यद्येतन्निमित्तं होमसमीपे स्यात्। किमुक्तं भवति। यदि निष्पन्ने ऽग्निहोत्रद्रव्ये ऽर्वाग्घोमादुदयः स्यादित्यर्थः। तथा च भारद्वाजः. यद्यन्ते स्यादित्यग्निहोत्रादनन्तरवादो ऽभिप्रेत इति॥ ततोन्नयनाद्योपसादनात्कृत्वा प्राणायामेन ताम्तो भूः स्वाहेति पूर्वाहुतिं जुहुयात्। भूरिति हि

प्राजापत्यमभिधायी । यस्मादसौ नित्यं भूतो भवति तदनेन प्रजापतिमेवोपासरेत् प्रजापतिरेवोपसृतः स्यात् । ततश्च स एवैनं ततो दोषादुन्नयति उद्धरति न चार्तिं प्राप्नोतीति ॥ यस्मादेवं शाखान्तरं तस्मादीदृशे निमित्ते पूर्वेणैतद्विकल्प्यत इति भावः ॥

**यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् । ५ ।**

चतुर्षु होमेष्वतिपन्नेषु तन्तुमती कार्या. षट्सु वाष्टासु वा । प्रागेभ्योऽवधिभ्यो विच्छेदे वैशेषिकप्रायश्चित्तावचनात् सामान्योक्तः सप्तहोता भवति . सप्तहोत्रा यज्ञविभ्रष्टं याजयेदिति ॥ न चाग्निहोत्रस्यायज्ञत्वादयज्ञविभ्रेषत्वमस्य शङ्कनीयं. तस्मादग्निहोत्रस्य यज्ञक्रतोरिति तस्यापि यज्ञसंस्तवात्. बौधायनेनास्यैवाहृत्य यज्ञविभ्रेषत्ववचनाच्च यथा प्रोषितमधिकृत्योक्तं अथ यद्यस्मै यज्ञविभ्रेषमापद्यते न ते ऽहौषुरितीति । तथोपग्रन्थकारेणापि को नु खलु विभ्रेष इति प्रकृत्योक्तम्. यस्याग्निहोत्रस्याहुतौ अन्योऽन्यस्य स्थानमापद्येते इति । तस्माद्युक्तमेव सप्तहोता भवतीति ॥ यज्ञविभ्रष्टेष्टेस्तु विषयव्यवस्था प्रागेव दर्शिता । कात्यायनस्त्वाह. अग्निहोत्रातिपत्तावाहुतिं जुहुयान्मनो ज्योतिर्जुषतामिति । आश्वलायनश्च मनस्वत्या चतुर्गृहीतं प्रकृत्याह . अग्निहोत्राहोमे च प्रतिहोममेक इति । बौधायनेनासमारूढविषये प्रतिहोम एवोक्तः . यथा दीप्यमानेष्वेवाह्रियमानेषु यावन्त्यतिक्रान्तान्यग्निहोत्राणि स्युस्तानि प्रतिसंख्याय जुहुयादिति । विदुषस्तु ब्राह्मणोक्तमप्यनुसंधेयम्. तस्माद्यस्यैवंविदुषः उतैकाहमुत द्व्यहं न जुह्वति हुत-

मेवास्य भवतीति॥ अत्र चतुरहादूर्ध्वमनेकविच्छेदे ऽप्ययमेव विधिः. अतो ऽन्यस्यावचनात्. अर्वाक् चतुरहादिष्टिनिवृत्त्यर्थत्वाच्चाधिकवचनस्य। भारद्वाजस्त्वत्र समारूढाग्नेश्चिरकालं होमादिविच्छेदे विशेषमाह. होमेष्वहूयमानेषु चात्मन्यरण्योर्वा ध्रियमाणानां कथं तत्र न लुप्यते. द्वौ मासावजुहृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्नये पथिकृते ऽग्नये वैश्वानरायाग्नये व्रतपतये ऽग्नये व्रतभृत इत्येषा महापथिकृदिष्टिः. पवित्रेष्ट्या यजेताग्निहोत्रदर्शपूर्णमासाविति सर्वमाप्नोतीति। तथा षण्मासानजुहृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वा वेति प्रकृत्य पूर्ववदेव पवित्रेष्ट्यन्तमुक्त्वातिपवित्रेष्ट्या यजेतेत्युक्तवान्। अतो यदत्र केश्चिच्चतुरहादूर्ध्वं होमविच्छेदे ऽग्निर्नश्यतीत्युक्तं तदतिसाहसं पश्यामः॥

स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः। प्रत्नं सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततान॥ त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः। त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैः सधमादं मदेमेति याज्यानुवाक्ये। ६।

गतः॥

तन्तुं तन्वन्नुदुध्यस्वाग्न उद्वयमुद्वयं तमसस्पर्युदु त्यं चित्रमित्युपहोमाः। ७।

आगन्तुत्वात्ते नारिष्ठेभ्य ऊर्ध्वं भवन्ति॥

हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यतं पुरंधिमग्निं स्विष्टकृतमाहुवेम॥

स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य। उरुं नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुरिति संयाज्ये। ८।

गतः॥

इत्यष्टमी कण्डिका।

इति द्वितीयः पटलः॥

यस्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेदाहवनीयमुद्वाप्य गार्हपत्यं मन्थेदितः प्रथमं जज्ञे अग्निरित्येतया। अग्ने सम्राडिषे रय्यै रमस्व महसे द्युम्नायोर्जपत्यायेत्यभिमन्त्र्य सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्यायेत्युपसमिध्यान्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीयाग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं निर्वपेत्। १।

यत्राऽन्ये कर्मार्थं प्रणीते वाऽग्नौ ध्रियमाणे गार्हपत्य उद्वायेत्तत्राहवनीयं दक्षिणाग्निं च गार्हपत्ययोनिमुद्वाप्य यथोक्तेन प्रकारेणाग्नीनुत्पाद्य तपस्वतीष्टिर्वक्ष्यमाणा आकृतयो वा। ततः कर्मसमाप्तिः॥ सावित्रसारस्वतचतुर्होत्रादयो दर्विहोमा उदाहरणम्। अग्निहोत्रं च प्राग्घोमकालात्. इष्टिः पशवो ऽपि प्रागन्वाधानात्। परतस्त्वन्वाधानाद्धोमकाले च तत्तत्प्रायश्चित्ताभ्यां वैशेषिकाभ्यामपोद्यत एवार्थं

विधिः। अपवदति च स्वविषये यदि गार्हपत्य इत्यादिविधिम्. तं प्रति विशेषविषयत्वात्॥ तेनाकर्मकाले ऽप्ययमेव विधिरजस्राग्नेः। अथवा विकल्प एव तयोर्विध्योः न सामान्यविशेषभावः शाखाभेदात्. यथोक्तं सत्याषाढेन यस्याग्निरनुगच्छेदित्येकेषां न कालमवधारयेदिति. तेभ्य एवावक्षाणेभ्यो ऽधि मन्थितव्य इति। भारद्वाजश्चाह अथैकेषां यतरो ऽग्निरनुगच्छेत्तेभ्य एव दारुभ्यो ऽधि मन्थितव्य इत्यादि॥ अत्र बह्वृचवाजसनेयकयोराश्वलायनकात्यायनबौधायनैश्चाहवनीयं भ्रियमाणमाहृत्य गार्हपत्यायतने निधाय ततः पुनःप्रणयनमुक्तम्। तत्र बह्वृचे तावदाहवनीयमधिकृत्याम्नायते सर्वमेवैनं सहभस्मानं समोप्य गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेदिति। वाजसनेयके ऽप्ययमेवाल्पान्तरः पाठः। तथाश्वलायनकादावपि। बौधायनीये तु सर्वमाहवनीयं भाण्डे समोप्य दक्षिणेन विहारं ह्रुलायतनद्वयादपि भस्मोद्वास्य शकृत्पिण्डेनोपलिप्य न्युप्योपसमाधाय प्रणयनमिति विशेषः। तथा प्रायश्चित्ते ऽपि विशेष उक्तः. षट् स्रुवाहुतीर्जुहुयाद्बुध्यस्वाग्ने त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुद् त्यं चित्रमिति॥

## सर्वत्रानुगतेष्टिमेतामेके समामनन्ति। २।

सर्वत्र सर्वानुगतिनिमित्तां तपस्वतीमेके समामनन्ति। तदयं सर्वत्र तेनतेनानुगतिप्रायश्चित्तेन विकल्प्यत इत्यर्थः। अथवा यत्रयत्रास्माभिरनुगते निमित्ते इष्टिरन्याभिहिता तत्रतत्र सर्वत्रैतामेके समामनन्ति। अतस्तया विकल्प्यत इत्यर्थः॥

आयाहि तपसा जनेष्वग्ने पावको अर्चिषा। उपेमां सुष्टुतिं मम॥ आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत्। हव्या देवेषु नो दधदिति याज्यानुवाक्ये। ३।

गतः॥

आहवनीये ऽनुगते ऽग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपति। ४।

तत्रतत्राहवनीयानुगतौ यथाविहितमग्निमुत्पाद्य ज्योतिष्मतीं निर्वपति. यथा यदि सायमहुते ऽग्निहोत्रे यदि प्राग्घोमकालादित्यादौ। यत्र तु प्रायश्चित्तविशेषश्चोदितः तत्र स एवेष्यते. यथान्वाहितादौ। तेनाप्येषा विकल्प्यत इत्यन्ये। ननु पूर्वसूत्रेण तपस्वत्यपि तत्रतत्र प्राप्ता। तत्किमनयोरेकस्मिन्दोषे श्रूयमाणत्वात्समुच्चयः। नेत्याह॥

न तपस्वते। ५।

यदा ज्योतिष्मते निर्वपति तदा न तपस्वते। विकल्प एव त्वनयोः शाखाभेदादिति भावः। अथवा सर्वत्रानुगतेऽग्निमित्यनेन सहैतत्सामान्यविशेषभावेन योजनीयम्। सर्वाग्निषु तपस्वती. ज्योतिष्मती त्वाहवनीये, न तपस्वत इति बाध एव तत्र तपस्वत्या इत्यर्थः। मन्थनविषये तु यदि गार्हपत्य आहवनीयो वेति विधिना तपस्वत्येव सर्वत्र; न ज्योतिष्मती. विशेषविहितत्वात्. अन्यथाहवनीये तस्यामवकाशत्वप्रसङ्गाच्च। तत्रापि तु द्वयोर्विकल्प इत्यपरम्॥

यदि सायमहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छेदधिश्रि-

त्याग्निहोत्रमुन्नीय वाग्निना च सहाग्निहोत्रेण चानूद्र-वेत्। यो ब्राह्मणो बहुवित्स उद्धरेत्। यत्पुरा धनम-दायी स्यात्तद्दद्यात्। अच्युतेनैनं च्यावयतीति विज्ञा-यते। ६।

यद्यप्यत्राहुते ऽग्निहोत्र इति वचनात् आ पूर्वाहुतेरयं विधिगम्यते:। तथाप्यधिश्रित्याग्निहोत्रमुन्नीय वेत्युद्धरणकालनियमात् सहाग्निहोत्रेणोद्रवणवचनाच्च ततः पूर्वकाल एवास्य संकोचः सामर्थ्यात्। बहुवि-द्वाख्यातः॥ तदयमर्थः। विहरणकालप्रभृत्याधिश्रयणादोन्नयनाद्वा-हवनीयानुगतो पूर्ववदाहवनीयकर्मवर्जमधिश्रयणान्त उन्नयनान्ते वा कर्मणि कृते बहुविद्ब्राह्मणस्तूष्णीमग्निमुद्धरेत्। ततो ऽध्वर्युः कृतान्तादारभ्योद्रवणात्कृत्वा सहाग्निहोत्रेण बहुविदमग्निं नयन्तमनू-द्रवेत्। ततो बहुविदा प्रतिष्ठापिते ऽग्नौ तस्मै यजमानस्तद्धनं दद्यात् यस्मै स्पृहयालुगात्मार्थं निहितवान् नेदमन्यस्मै दास्यामीति। तेनैवाच्युतेन धनेनैनमाहवनीयं गार्हपत्याच्च्यावितवान्भवति. एनं बहुविदं वा॥ ततो ऽग्निहोत्रमन्यस्मै दत्त्वा अन्यत्र वा निधायानुगते-ष्टिर्मित्राद्याहुतयो वा। तत आहवनीयकर्माण्यकृतानि कृत्वा कृता-न्तादारभ्याग्निहोत्रसमाप्तिः॥ समानो ऽयं विधिरजस्रे विशेषावचनात्। न च अहुते ऽग्निहोत्र इति वचनात् अग्निहोत्रमात्रार्थाग्निविषयो युक्त इति वाच्यम्. यदि प्रातरहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेदि-त्यत्र व्यभिचारात्. यस्याग्निरुद्धृतो ऽहुते ऽग्निहोत्र उद्वायेदित्यन्यत्र विशेषवचनाच्च॥

यदि प्रातरहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेदनुगमयित्वा पूर्वं पूर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात्। ७।

...प्रातःकालप्रभृत्या पूर्वाह्णतेर्गार्हपत्यानुगतावाहवनीयोद्वापनादि तत्रत्यमन्तं कर्म यस्याहवनीये ऽनुद्धात इत्यादिविधिना समानम्। तत्कृत्वा ततो ऽग्निहोत्रं जुहुयादित्यर्थः। पुनरुपन्यासस्त्वनगविधिविकल्पार्थः॥

यदि त्वरेत पूर्वमन्ववसाय ततः प्राङुद्धृत्य जुहुयात्। ८।

यदि त्वरेत कालातिपत्तिभयादिना तदाहवनीयमेव गार्हपत्यं परिकल्प्य तत्रैव दक्षिणाग्न्यादीनपि नीत्वा ततः प्राञ्चमाहवनीयमुद्धृत्याग्निहोत्रं जुहुयात्। ततो यदि गार्हपत्य इत्यादिविधिना गार्हपत्यस्योत्पत्तिः॥

जामि तु तद्यो ऽस्य पूर्वस्तमपरं करोति। अन्यत्रैवावसाय पूर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात्। ततः श्वोभूते ऽग्नये तपस्वते जनद्वत इति समानम्। ९।

जामीति पूर्वनिन्दा उत्तरविधिप्रशंसार्था। पौनःपुन्यनिमित्तमश्रद्धेयत्वं जामित्वम्। तत्तु जामि यत्पूर्वमेवाग्निमपरमपि करोतीति। तस्मादन्यत्रैव देशे सर्वाग्निभिर्भिन्नमार्गैर्गत्वा तत्रानुगमयित्वा पूर्वमित्यादिविधिनापरं मथित्वा पूर्ववदेवोद्धृत्याग्निहोत्रं जुहुयात्। ततः श्वोभूते तपस्वतीं निर्वपेत्॥

अथैकेषाम्। यस्याग्निरनुगच्छेन्न कालमवधारयेत्। अनुगमयित्वा पूर्वं पूर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात्। वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं यवमयं चरुम्। १०।

अथवा प्रातरिति न कालविशेषमवधारयेत्। सायं प्रातर्वा श्रुते ऽग्निहोत्रे ऽपराग्न्यनुगतावनुगमयित्वा पूर्वमित्यादिविधिरेव स्यात्। तपस्वत्यास्तु स्थाने वारुणवैश्वानरौ समानबर्हिषौ निर्वपेदित्यर्थः। तदेवमेते त्रयः कल्पाः प्रातःकाले यस्याहवनीये ऽनुद्वात इत्यादिविधिना सह विकल्प्यन्ते। अन्यस्त्वेकः सायंकाले ऽपि॥

यदि गार्हपत्य आहवनीयो वानुगच्छेत्तेभ्य एवावक्षाणेभ्यो ऽधि मन्थितव्यः। यदि न तादृशानीवावक्षाणानि स्युर्भस्मनारणी संस्पर्श्य मन्थितव्यः। स्वादेवैनं योनेर्जनयतीति विज्ञायते। ११।

चामावशिष्टानि काष्ठान्यवक्षाणानीत्युच्यन्ते। तेषु मन्थनसमर्थेषु सत्सु तेभ्य एव द्वे गृहीत्वा मन्थेत्। यदि पुनर्न तादृशानि स्युः तदा तत्तद्भस्मसंस्पर्शं कृत्वा तयोररण्योर्मन्थेत्। एवमरणी संक्रान्त्य मन्थनस्वादेव योनेर्जनयत्यग्निम्. अवक्षाणाभावे भस्मस्थत्वादग्नेस्तस्यस्य. इदानीमरण्योः संक्रमितत्वाच। तात्स्थ्ये च लिङ्गम्. अथ वाव स_ विज्ञायत इति। अत एव वचनादवक्षाणाभावे भस्मसंस्कारमन्तरेण मथितो ऽप्यग्निः स्वयोन्यनुत्पन्नत्वादसत्सम इत्युक्तं भवतीति। न च गार्हपत्यारण्योराहवनीयमन्थनम्. पृथगरणीष्वग्नीनिति लिङ्गात्। गार्हपत्यस्य

तावदियमेवोत्पत्तिः सर्वत्र ॥ प्रायश्चित्तं च तपस्वत्येवासत्यपवादे यथान्वाहिताग्नौ। यथाहवनीयस्यापि प्रणयनानुपदेशः तथापीयमेवोत्पत्तिः ॥ यथा सवित्रादिषु दर्विहोमेष्वग्निहोत्रे च होमकाले तथेष्टिपशुष्वपि प्रागन्वाधानादित्यादि। प्रायश्चित्तं च तत्रेदमेवासत्यपवादे. यथा यदि होमकाले प्राण उदानमित्यादिना। सत्याषाढस्त्वाह यस्य पूर्वो ऽग्निरनुगच्छेदित्येकेषां न कालमवधारयति तेभ्य एवावक्षाणेभ्यो ऽधि मन्थितव्य इत्यादि। भारद्वाजस्य अथैकेषां यतरो ऽग्निरनुगच्छेत्तेभ्य एव दारुभ्यो ऽधि मन्थितव्य इत्यादि ॥

एवं शकधे तृणधे च। १२।

शकानि करीषाण्येधा यस्य स शकधः। तथा तृणध इति। शकादीध्मने चाग्नावनुगते भस्मनारणी संस्पर्श्य मन्थितव्यः। तेषामपि मन्थनासामर्थ्यादिति भावः ॥

अग्नये तपस्वते जनद्वत इति समानम्। १३।

दर्शितो ऽस्यापि विषयविभागः प्रागेव। तथा दर्शितावनया बाधविकल्पौ ज्योतिष्मत्याः ॥

अनुगतेष्टेर्वा स्थान एता आहुतीर्जुहुयान्मित्राय स्वाहा वरुणाय स्वाहाग्नये स्वाहाग्नये व्रतपतये स्वाहाग्नये तपस्वते जनद्वते पावकवते स्वाहाग्नये शुचये स्वाहाग्नये ज्योतिष्मते स्वाहा सूर्याय स्वाहेति व्याहृतीभिर्विहृताभिः समस्ताभिश्च ज्

सर्वस्या एवानुगतेष्टेरयं विकल्पः पुनरनुगतेष्टिग्रहणात्। अन्यथा हि अपि वैता आहुतीरित्येवावक्ष्यत्। तथा सर्वासामेव प्रायश्चित्तेष्टीना-मनुग्रहमाहाश्वलायनः. अपि वा प्रायश्चित्तेष्टीनां स्थाने तत्तद्दै-वताय पूर्णाहुतिं जुहुयादिति विज्ञायत इति। बह्वृचाश्च ता एवेष्टीः प्रकृत्याधीयते ॥

इति नवमी कण्डिका।

यदि प्राग्घोमकालादाहवनीयो ऽनुगच्छेद्गार्हपत्या-दन्यं प्रणयेत्। १।

केचिदहुत इत्यनेन सकलस्य बाधं मन्यन्ते। तदयुक्तं शाखाभेदात्. एकोदाहरणाभिप्रायेण सामान्यायोगाच्च। यदि हि तथाभिप्रेष्यत प्रातर्ग्रहणमेवाकरिष्यत्। नहि माणवकार्थेकस्मै दधनि दित्सिते तक्रं च कौण्डिन्याय भवति वचनं ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति. भवति च तत्र वचनं माठराय दधि दीयतां तक्रं कौण्डिन्यायेति। तथा च महाभाष्यकारः. नह्येकमुदाहरणं सामा-न्यवचनं प्रयोजयतीति। तस्मादुभयकालार्थमित्येव युक्तम्॥ अथ को होमकालः। ननूक्ता आनक्षत्रदर्शनादयः कालाः सायंप्रातर्होमयोः सूचकता। तेषु यतमस्मिञ्जुहूषति ततमो भविष्यति॥ प्राग्घोमका-लादिति को ऽर्थः। यदेध्माहरणादि तन्त्रं प्रक्रंस्यते ततः प्रागित्यर्थः। तथा च होमकालमनुवदता कात्यायनेनोक्तम्. आसन्नेषु चेत्पात्रेष्वा-हवनीयो ऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति॥ कथ

पात्रसादनकालः। तन्त्वारम्भ इति ब्रूयात्। यथा प्रणयनविध्यनन्तर-माह बौधायनः. अथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्ह-पत्यमुपसादयतीति। सत्याषाढभारद्वाजौ तु परिस्तरणानन्तरमाहतुः. अग्निहोत्रपात्राणि प्रयुनक्तीति॥ तस्मात्प्रणयनकालप्रभृत्या तन्त्वार-म्भात् आ वा परिस्तरणात् आहवनीयस्यानुगतावन्यं प्रणीयानुगते-ष्टिर्मिन्दाहुती वा। समानो ऽयं विधिरजस्रे अविशेषात्॥

यदि होमकाले प्राण उदानमप्यगादिति गार्हपत्ये जुहुयात्। २।

व्याख्यातो होमकालः पूर्वसूत्रे। तत्र यद्याहवनीयो ऽनुगच्छेत्प्राण इत्यादिना गार्हपत्ये प्रायश्चित्तार्थमाज्याहुतिं जुहुयात्। ततो यदि गार्हपत्य आहवनीयो वेत्यादिविधिनाग्निमुत्पाद्य प्रकृतिवदग्निहोत्र-समाप्तिः। तथा चैतामाहुतिमुक्त्वा यथानुपूर्व्यकरणमिति कात्या-यनः॥ नात्रानुगतेष्टिः प्रायश्चित्तविशेषवचनात्. नापि विकल्प्यते शाखाभेदात्। यस्याग्निरुद्धृत इति विधिनोद्धरणमप्यस्याहवनीयस्यो-द्धार्यस्य लभ्यत इति द्रष्टव्यम्॥

यदि गार्हपत्य उदानः प्राणमप्यगादित्याहवनीये।३।

व्याख्यातः पूर्वे। नात्र यस्याहवनीये ऽनुद्धात इत्येष विधिरिष्यते. जीवन्तमाहवनीयं कृत्वा तत्र होमवचनात्। यस्तु अथैकेषां यस्या-ग्निरनुगच्छेन्न कालमवधारयेदिति विधिः स त्वत्रापि भवत्येव सार्वकालिकत्वात्॥

यदि दक्षिणाग्निर्व्यान उदानमप्यगादिति गार्हपत्ये।४।

एवं कुर्वतं प्रविशानीति यथायोन्युत्पाद्याधेयः ॥

यदि सर्वे ऽनुगच्छेयुरग्निं मथित्वा यां दिशं वातो वायात्तां दिशमुद्धृत्य वायवे स्वाहेति जुहुयात् । ५ ।

होमकाले ऽनुगतौ सर्वेषां गार्हपत्यं मथित्वा निधायानुवातमाहवनीयमुद्धृत्य वायवे स्वाहेत्याहुतिं जुहुयात् । ततो यथास्थानं विहृत्याग्नीन्हुतान्तादारभ्य कर्मसमाप्तिः ॥ कात्यायनस्तु वायव्यामाहुतिमपि यथास्थानमुद्धृत्य तस्मिन्नग्नावेवाह यथा . सर्वे चेत् तूष्णीं मथित्वा प्रतिवातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यकरणमिति ॥

यद्यु वै निवाते मथित्वा विहारं साधयित्वापरेणाहवनीयं यजमान उपविश्य स्वयमग्निहोत्रं पिबेत् । अग्निहोत्रप्रत्याम्नायो भवतीति विज्ञायते । ६ ।

यदि निवाते सति सर्वे ऽनुगच्छेयुः तदा गार्हपत्यं मथित्वा यथास्थानमेव विहारं साधयित्वा यथाविधि संस्कृतमग्निहोत्रमपरेणाहवनीयमुपविश्य यजमानः स्वयं पिबेत् । पानस्य च होमप्रत्याम्नायत्वात् न पुनर्होमः ॥ होमकालादन्यत्र सर्वानुगतावनुगतिक्रमेण तस्यतस्याग्नेर्यथाविहितमुत्पत्तिः प्रायश्चित्तं च । क्रमानवगमे त्वाधानक्रमेणेति द्रष्टव्यम् ॥

यदि प्रागस्तमयाज्जुहुयात्पुनरेवास्तमिते हुत्वा भवतं नः समनसावित्युपतिष्ठेत । ७ ।

प्रागस्तमयाद्धोमे साङ्गस्य होमस्यावृत्तिः . अकाले कृतस्याकृतत्वात् . प्रधानकालत्वाच्चाङ्गानाम् । न तु प्रणयनस्यावृत्तिः . काल एव तस्य

हुतत्वात्। तत्र तु कृत्वाप उपस्पृश्येत्येतावति कृते भवतं नः समन-
साविल्युपतिष्ठेत। गार्हपत्याहवनीयाविति शेषः मन्त्रलिङ्गात् ॥

यदि महारात्रे पुनरेवौपसं हुत्वैतयैवोपतिष्ठेत ।८।

उषसि जुहूषतः प्रागुषसो होमे ऽप्येतमौषसः पुनर्होमः उपस्थानं च ॥

यदि हविः प्रोक्षन्नग्निमभिप्रोक्षेद्धतेन यज्ञेन यजेत । पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति पुनरग्निमुप-समिन्ध्यात् । ९ ।

हुतो निर्वीर्यः। पुनरुपसमिन्ध्यादित्यन्वाधानिकोपसमिन्धनापेक्षया पुनःशब्दः ॥

एवं सर्वेष्वग्न्युपघातेषु । १० ।

एवं परिषेचनादौ प्रमादे ऽप्युपसमिन्धीत। सर्वग्रहणात् मूत्रपुरीषा-द्यशुचिसंसर्गे ऽश्वशूद्रोदक्याद्यप्रयतसंसर्गे ऽप्युपसमिन्धीत। बौधायन-स्त्वाह अमेध्याभ्याधाने समारोप्य निर्मथित्वा पवमानेष्टिरिति। महाभारते ऽप्यारण्यपर्वणि पठन्ति. रजस्वला चेच्छ्रौताग्निमशनामा-त्स्पृशते यदि. इष्टिरष्टाकपालेन कर्तव्या शुचये ऽग्नय इति ॥

अग्नये ऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्या-ग्नावग्निमभ्युद्धरेयुः । ११ ।

यस्याहवनीये विद्यमाने तमसन्तं बुद्ध्वा तस्योपर्यन्यं प्रणयेत् तस्ये-तामिष्टिं निर्वपेत् ॥ ननु किमभ्युद्धरणमात्रप्रयुक्तमिदं प्रायश्चित्तं आहो। स्विदग्निप्रणयनप्रयुक्तमिति न ज्ञायते. उद्धरणशब्दोऽभय-

चापि दर्शनात् । तत्र यद्यभ्युद्धरणमात्रप्रयुक्तं ततो ऽभ्युद्धृत्याग्निं मध्ये तत्त्वं विदित्वा अनिहितवतो ऽपि प्रायश्चित्तं स्यात्. विपर्यये तु न स्यात् । अतो वक्तव्यो विशेषः. तत्राह

**यथा कथा चाभ्युद्धरेयुः प्रायश्चित्तमित्याश्मरथ्यः । यद्यसंन्युप्ते स्याशयेयुरनुगमयेयुरेनं न प्रायश्चित्तमित्यालेखनः । १२ ।**

अस्तु वाभिप्रणयनं मा वा । यदि कथंचिदभ्युद्धरेयुः भवत्येवेदं प्रायश्चित्तमित्याश्मरथ्यमतम् । आलेखनस्तु मन्यते. यद्यनिहिते ऽग्नौ स्याशयेयुः जानीयुस्तत्त्वं तदेनं पश्चादुद्धृतमग्निमनुगमयेयुः. स तु भवत्येतत्प्रायश्चित्तम्. सर्वप्रायश्चित्तमात्रं तु श्रूयते अप्राप्तस्योद्धरणमिति । यत एतदुभयमप्याचार्याणां मतं ततो याथाकामी तयोरिति भावः ॥ कर्मार्थाग्न्यभ्युद्धरणविषयश्चायं विधिः. निर्दिष्टभागो वा एतयोरन्यो ऽनिर्दिष्टभागो ऽन्य इति लिङ्गात् । तेनापवृक्त*कर्मण्यन्यार्थमुद्धृते ऽग्नौ संन्युप्ते लौकिकाग्निसंसर्गनिमित्तेष्टिरेव कार्या नाभ्युद्धरणनिमित्ता ॥

**अग्नये ज्योतिष्मते ऽष्टाकपालमित्युक्तम् । १३ ।**

ब्राह्मणे तु अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो ऽहुते ऽग्निहोत्र उद्वायेदिति प्रकृत्य प्रणयनं निषिध्य निन्दित्वा च पुनरितः प्रथममित्येतया म...न्थनमुक्तम् । तत्र प्रणयन-

* Corrected; the MSS. read °र्

निन्दानिषेधयोर्मन्थनविधिप्रशंसार्थत्वात् प्रणयनमन्थनयोर्विकल्प इति सूत्रकाराभिप्रायः॥ तत्र च लिङ्गम्, तं हैतमेके पशुबन्ध एवो- त्तरवेद्यां चिन्वत इति ब्राह्मणव्याख्याता विकाराः,ताननुक्रमि- ष्यामः। पशुबन्धे सोमे सत्त्रे सहस्रे सर्ववेदसे वेति ब्राह्मणनिषिद्ध- स्यैव पशुबन्धस्य विकल्पतयानुस्मरणम्। तथा दध्नो ऽवदाय शृत- स्यावद्यति, एतद्वा विपरीतम्, तथा पत्नीं संनह्यति तिष्ठन्तीं वेत्यादि द्रष्टव्यम्॥ अयं च विधिः अहुते ऽग्निहोत्र इति वचनात् आ पूर्वाहुतेर्होमकालविषयैः सर्वैरपि पूर्वोक्तैर्विधिभिर्विकल्प्यते। यद्याग्निरुद्धृत इति वचनाच्च नाजस्रे ऽग्नौ भवति॥

अथाहुतिं जुहुयात्त्रयस्त्रिंशत्तन्तव इति। १४।

अथानुगतेष्टेरनन्तरं मित्राद्याहुतीनां वा त्रयस्त्रिंशत्तन्तव इत्याहुतिः॥

यस्य सांनाय्ये ऽधिश्रिते हविषि वा निरुप्ते पुरुषः श्वानो रथो वान्तराग्नी वीयाद्वराहैडको वा तद्वापो ऽन्वतिषिच्य गामन्वत्यावर्तयेद्धर्तां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहसः स्वाहेति। १५।

पुरुषो मनुष्यजातीयः। अनः शकटम्। वराहो ग्रामसूकरः। एडको मेषः, क्रमेलक इत्यन्ये। यद्येषामन्यतमः सर्वो वा हविरु- त्पत्तिप्रभृत्या प्रदानादन्तरा गार्हपत्याहवनीयौ गच्छेत्तदात्र पुरुषा- दिगते मार्गे ऽपो ऽन्वतिषिच्य तानतिक्रान्तानप्सु मिश्रा गामन्वत्य

गां सर्वतो ऽनुगमय्यावर्तयेत्. यत एव गमितस्तत एव प्रतिगमये-दित्यर्थः। गामन्तरेणातिक्रमयेदित्याश्वलायनः ॥

**देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरागच्छतु पितॄन्पञ्चजनान्दिश आप ओषधीर्वनस्पतीञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरागच्छत्विति षडाहुतीर्हुत्वेदं विष्णुर्विचक्रम इति वर्त्म समूहेत्। पदं वा लोभयेत् ।१६।**

पितॄनित्यादिषु जनमगन्नित्यादेरनुषङ्गः। आपो जनमगन्निति द्वितीयार्थे प्रथमा। ओषधीर्वनस्पतीञ्जनमगन्नित्येको मन्त्रः. षडिति वचनात्॥ वर्त्म समूहेत् अनोरथयोर्वर्त्मनी समीपदेशेन समीकुर्यात्। पदं वा लोभयेत् पुरुषादीनां पदरूपं नाशयेत्। गार्हपत्यभस्मना पदमभिवपेदिति तु सत्याषाढः ॥

**यस्यानो वा रथो वान्तराग्नी यात्याहवनीयमुद्वाप्य गार्हपत्यादुद्धरेद्यदग्ने पूर्वं प्रभृतं पदं हि ते सूर्यस्य रश्मीनन्वाततान। तत्र रयिष्ठामनुसंभरैतं सं नः सृज सुमत्या वाजवत्या॥ त्वमग्ने सप्रथा असीत्येताभ्याम्॥ ततः पथिकृतीं पूर्ववन्निर्वपेत्। १७।**

सामान्यवचनात्सार्वत्रिको ऽयं विधिः। पूर्वविधिविषये तु तेन बाध्यते। तथा यद्यनो रथो वान्तराग्नी सदोहविर्धाने वा नीयात्पथिकृतीं पूर्ववन्निर्वपेदिति सौमिकेनापि बाध्यते. तस्यापि सदोहविर्धाननिर्माणादूर्ध्वभावित्वेन विशिष्टविषयत्वात्। अथवा वि-

कल्प एवास्य द्वाभ्यां न सामान्यविशेषभावः शाखाभेदात्। तथा च सत्याषाढभारद्वाजाभ्यां पूर्वविधिमुक्त्वाऽनन्तरमुक्तम्. यद्यनो वाऽन्तराग्नी वीयादित्येकेषां न कालमवधारयतीति। समानोऽयं विधिरजस्रेऽपि अविशेषात्। बह्वृचसूत्रेचाधीयते. यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वाश्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति. नैनत्मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवन्तीति. तद्यन्मनसि कुर्वीत गार्हपत्यादविच्छिन्नामुदकधारां हरेत् तन्तुं तन्वन्रजसो भानुमन्विह्यीत्याहवनीयात्. सा तत्र प्रायश्चित्तिरिति॥ पूर्ववदिति पयो ऽग्निकाद्धर्हिराहरेदनडुान्दक्षिणेति विधिनेत्यर्थः॥

एतामेव निर्वपेत्।१८।

इति दशमी कण्डिका।

स्तोत्रे शस्त्रे वा मूढे।१।

स्तोत्रशस्त्रयोरवयवस्याप्रतिभाने अन्यथाप्रतिभानं वा मोहः। तत्राप्येतामेवेष्टिं निर्वपेत् यद्या समाप्तेरप्रतिसंहिते भवतः। प्रतिसंधाने तु नेष्यते। सर्वाप्रतिभाने तु कृत्वा सर्वप्रायश्चित्तं तदेव प्रतिभावद्भिः प्रतिभावनीयम्॥

यस्य वाग्निभिरग्नीन्व्यवेयुर्यो वा व्यवेयात्।२।

एतामेव निर्वपेदित्यनुषङ्गः। अग्निभिरिति जात्याख्यायां बहुवचनं संसर्गित्वाद्वा। यस्याग्नीन्विहृतान्परः स्वेनाग्निना समारूढेनासमारूढेन

वा व्यवेयात् व्यवदध्यात् तस्येयमिष्टिः। यस्यायं व्यवेयात् तस्यापि लौकिकाग्निना व्यवेताग्नेरपीत्यन्ये॥

यस्य वाग्निभिरग्नीन्विहरेयुः। ३।

पूर्ववदनुषङ्गः। बहूनां महप्रयाणादौ प्रमादाद्यस्याग्निं परग्निना सह निदध्युः एवं तस्मिन्नुपावरोहन्ति वा तस्यापि विहर्तुरियमिष्टिर्भवति। संसर्गेष्टिश्च संसर्गनिमित्ता. इतरस्य तु संसर्गेष्टिरेवाभिविहरणाभावात्। अत्रापि समारोपणेन विविक्ते ऽग्नाविष्टिः॥

एतां जने प्रमीतस्य। ४।

जने प्रमीतस्य देशान्तरे मृतस्य मरणश्रवणानन्तरं गृहेष्वेतामिष्टिं निर्वपेत्। भारद्वाजस्त्वत्रानुग्रहमाह. प्राचीनावीती पूर्णाहुतिं जुहुयादित्येक इति॥

तस्याभिवान्यवत्सायै पयसाग्निहोत्रं जुहुयादा शरीरस्याग्निभिः संस्पर्शनात्। ५।

व्याख्याताभिवान्यवत्सा। तस्याः पयसाग्निहोत्रं जुहुयात् आ शरीरदाहात्। यद्यपि तद्यावज्जीवं श्रुतं तथापि वचनाद्धूयते. निवर्तते त्वन्यत्सर्वम्। बाह्वृच्ये त्वेवमेव मृताग्निहोत्रमुक्तोक्तम्. अथाप्याहुरेवमेवैनानजस्रानजुहुत दन्धीरन्ना शरीराणामाहर्तोरिति॥

सर्वं तूष्णीं क्रियेत। ६।

गतः॥

प्राचीनावीती दोहयति। ७।

प्रदर्शनार्थं दोहग्रहणम्। प्राचीनावीत्येव सर्वत्र पित्रर्थत्वात्। पित्रर्थत्वं चोपरि देवेभ्यो धारयतीति लिङ्गात् ॥

ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रान्कृत्वा दक्षिणार्धे गार्हपत्यस्य शीते भस्मन्यधिश्रित्य दक्षिणोद्वास्य सकृदेव सर्वं तूष्णीमुन्नीयाधस्तात्समिधं धारयन्दक्षिणेन विहारमुद्द्रवति। ८।

ये पुरोदञ्च इति ये पूर्वमग्निहोत्रे परिस्तरणदर्भा उदगग्रा इत्यर्थः। तूष्णीमुन्नीयेति पुनर्वचनमादरार्थं वाग्यमनार्थं वा ॥

उपरि हि देवेभ्यो धारयतीति विज्ञायते। ९।

देवेभ्यो ह्युपरि धार्यते न पितृभ्य इत्यर्थः ॥

स उपसाद्य समिधमाधाय सकृदेव सर्वं तूष्णीं जुहुयात्। १०।

पुनस्तूष्णींवचनमुत्तरविधिविकल्पार्थम् ॥

अपि वा सोमं पितृमन्तं पूर्वस्यामाहुत्यामुपलक्षयेत्। अग्निं कव्यवाहनमुत्तरस्याम्। ११।

सोमाय पितृमते स्वाहेत्युपलक्षयेत्पूर्वस्याम्. अग्नये कव्यवाहनाय स्वाहेत्युत्तरस्याम् ॥

प्राशनोत्सेचनपरिषेचनानि न विद्यन्ते। १२।

लेपप्राशनादीनि त्रीण्यपि न विद्यन्ते। तथोदकोत्सेचनान्युच्छिष्टभाजो

जिन्वेत्यादीनि। तथोभयतः परिषेचने सह धारया च, तदङ्गत्वात्। सर्वमन्यत्क्रियते॥ गृहे प्रमीतस्याप्यर्वाक् पितृमेधादयमेव विधिर्न्यायसाम्यादूह्यः। अत्र भारद्वाजः, आहिताग्निं जने प्रमीतं तैलद्रोण्यामवधाय शकटेनाहरन्ति, निर्मन्थ्येन वा दग्ध्वा कृष्णाजिने ऽस्थीन्युपनह्याहतेन वाससा प्रच्छाद्य दीर्घवंशे प्रबध्यानधो निदधानाः प्रयता मृन्मयभोजना आहरन्ति, तानि ग्राममर्यादायां प्रतिष्ठाप्याग्नीन्भाण्डं च निर्हरन्तीति॥

## ब्राह्मणेभ्यो यज्ञायुधानि ददाति। १३।

पात्रप्रतिपत्तिकाले तानि पत्नी पुत्रो वा ब्राह्मणेभ्यो ददाति। दानवचनादेवं ज्ञायते प्रतिग्रहीतुरप्युपयोज्यान्येवेति॥

## ददात्येवायस्मयानि। १४।

यदयोमयमसिदः स्वधितिरित्यादि तद्ददात्येव। ददाति वा चिनोति वेतरयज्ञायुधानीति भावः। परमतनिरासार्थं वावधारणम्, यथाह भारद्वाजः, पुत्रस्य दृषत्स्यादायसं चेति॥

## अपो मृन्मयान्यभ्यवहरन्त्यश्ममयं च। १५।

अश्मैव सहैव सर्वाण्यप्सु क्षिपेत्॥

## पुत्रस्य दृषत्स्यात्। १६।

दृषत् पट्टः, दृषदुपलाश्मादि पुत्रस्य स्यादित्यर्थः। तथा चाश्ममयमित्येव कात्यायनः॥

यद्यप्रमीतं प्रमीतमुपशृणुयुरग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेत् । १७ ।

अमृतं मृतमुपश्रुत्य पुनरमरणे निर्णीते अग्नये सुरभिमते निर्वपेत् ॥

यदि पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत दक्षिणतः शीते भस्मन्युत्तरामाहुतिं निनयेत् । १८ ।

उत्तराहुत्यादेः कर्मशेषस्य मृतहोमन्यायेन समाप्तिर्वेदितव्या ॥

भस्मोत्करं वा गमयेत् । १९ ।

यत्राग्नीनां भस्मराशिर्निहितः तत्र वा निनयेदित्यर्थः ॥

यैषा पितृमेधे प्रथमाहुतिस्तामेवात्र कुर्यादित्येके । २० ।

मरणानन्तरं वा पितृमेधमारभ्य यत्प्राक् परेयुवांसमिति * सूत्राहुतेस्तत्कृत्वा तामेवाहुतिमत्रोत्तराहुतिस्थाने ऽग्निहोत्रशेषेण जुहुयात् । ततः प्रक्रान्तपितृमेधमेव निर्वर्तयेत्, न होमशेषमित्यर्थः । अथवा पितृमेधप्रसिद्धा यैषाहुतिस्तामेवात्राद्याहुतिमत्र कुर्यात्, अपवर्तिताग्निहोत्रशेषमित्यर्थः ॥

यदि विसंस्थितायामिष्ट्यां यजमानो म्रियेत सर्वतः समवदाय सर्वा देवता अनुद्रुत्य स्वाहाकारेण जुहुयात् । २१ ।

विसंस्थितायां आरब्धापरिसमाप्तायामिष्ट्यां मरणे यजमानस्य सर्वेभ्यः

* Thus the MSS. G, I and Taitt. Araṇyaka 6. 1. 1, ; K read परेयिवांसमिति

प्रधानहविर्भ्यो जुह्वां सह गृहीत्वा सर्वाः प्रधानदेवता अनुद्रुत्य दर्विहोमधर्मेण जुहुयात्. यथा अग्नये विष्णवे ऽग्नीषोमाभ्यां स्वाहेत्यादि॥ तत्रावस्थाभेदेन संस्थाभेदाः समाम्नाता बाह्वृचे. यथा य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञः स्यादिति. नैनं याजयेदित्याहुरनभिप्राप्तो हि यज्ञं भवतीति। तथा अधिश्रिते ऽग्निहोत्रे सांनाय्ये हविःषु वा म्रियेत का तत्र प्रायश्चित्तिरिति. अन्वेवैतान्यनुपर्यादध्याद्यथा सर्वाणि संदह्येरन्निति। तथा आसन्नेषु हविःषु म्रियेत का तत्र प्रायश्चित्तिरिति. याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवन्ति ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुन्ति जुहुयादिति॥ कात्यायनस्त्वाह. हविष्येषु चेदाक्रियमाणेषु मरणं दक्षिणाग्नावेनान्संदहेत्. न वा अयुक्तत्वात्. गार्हपत्ये ग्रहणादि प्रागासादनात्. आसादनाद्याहवनीये. मरणान्तं भवति. संस्थाप्यं वा प्रक्रान्तत्वादिति। एवं सर्वेष्टिपशुषु द्रष्टव्यम्॥ सोमे ऽप्याह भारद्वाजः. यदि यज्ञे यजमानो म्रियेत कथं प्रेते ऽवस्थापनमिति. न विद्यत इत्याहुर्मरणान्ता यज्ञा भवन्तीत्यन्यवभृथं कुर्वीत. यदि यज्ञे पत्नी म्रियेत निर्मन्थ्येन दग्ध्वा मार्जालीयन्त्यन्ते भस्मानुपत्रपेयुः आ यज्ञापवर्गादिति। तथा यदि म्रियेत प्रागवभृथादन्यवभृथं कुर्वीरन्. अवभृथं वा गमयित्वा प्रोक्ष्यैनमभ्युदाहृत्य स्वैरग्निभिर्दहेयुः एतावदेकाह इति। अन्यवभृथ इत्यवभृथधर्मेणाग्निभिर्दहनमित्यर्थः॥ शाण्डिल्यगृह्ये ऽप्युक्तम्. जीवतः कर्माणि विसमाप्ते चेदतिप्रेयान्मरणान्तमेकाहेषु नास्ति तस्य समापनमिति । केचित्तु सोमेषु मृते सर्वेभ्यो हविर्भ्यः सोमेभ्यश्चेति विधिना सर्वहवींषि जुह्वति॥

यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत यां दिशमभिप्रस्थितः स्यात्तामस्याग्निभिः कक्षं दहेयुः ।२२।

यदि प्रोषितो मृत इति न तावज्ज्ञायेत तत्त्वं मृत इति तदा गमनकाले यां दिशं प्रति प्रस्थितः स्यात् तस्यां दिशि तदग्नौ यः कक्षः तमस्याग्निभिस्तृणौ दहेयुः ॥

अपि वा त्रीणि षष्टिशतानि पलाशवृन्तानाम् तैः कृष्णाजिने पुरुषाकृतिं कुर्वन्ति । पलाशवल्कैः कुशैर्वा संधिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते । दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशतापञ्चाशतैकैकं बाहुम् । ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते । सप्तत्यासप्तत्यैकैकं पादम् । ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते । अष्टाभिः शिश्नं द्वादशभिर्वृषणम् । तैः कृष्णाजिने पुरुषाकृतिं कृत्वा स्नापयित्वालंकृत्यान्तर्वेदि कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छाद्य बान्धवाः पर्युपविशन्ति । अभिमृशन्त्ययमस्यासौ यस्य त इमे अग्नय इति प्रेते ऽमात्याः । इत्येतदादि कर्म प्रतिपद्यते । कृत्वा तामस्याग्निभिर्दहेयुरिति वाजसनेयकम् ।२३।

पलाशस्य वृन्तानि पलाशवृन्तानि । त्रीणित्रीणि पलाशानि येषु

काण्डेषु तिष्ठन्ति तानि हन्तानीत्याचक्षते । तेषां षष्ट्यधिकानि त्रीणि शतान्युपक्लृप्तानि भवन्ति । तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तां वा दहेयुः । तस्या रचनाप्रकारः पितृमेधेन द्रष्टव्यः । बाहृच्ये पितृमेधकल्पेषु च पृथक्पृथगुक्तः तत्रतत्रैव द्रष्टव्यः ॥

यदि हवींष्यासन्नानि कृष्णशकुनिरुपर्युपर्यतिपतेत्पक्षाभ्यामाधून्वान इवाभिनिषीदेदिदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात् । २४ ।

कृष्णशकुनिः काकः । स हविषामासन्नानामुपरि पक्षवायुनावीजमान उप समीपतो गच्छेत् तेषामुपरि निषीदेद्वा तत्र वैष्णव्या जुहुयात् तत्संसृष्टं हविरप्सु प्रक्षिप्यान्यमुत्पादयेच्च ॥

यद्युच्चैः पतेन्न तदाद्रियेत । २५ ।

यदि दूरतो गच्छेत् न तत्र प्रायश्चित्तमित्यर्थः ॥

यद्युच्छ्रियमाणो* यूपस्य चषालं वा पद्येत ब्रह्म प्रतिष्ठा मनस इत्याहुतिं जुहुयात् । २६ ।

पद्येत पतेत् ॥

इत्येकादशी कण्डिका ॥

---

* Thus all MSS.; the form is derived from a root श्रद् with the meaning of श्रि.

यदि हविःशेषाननुद्वासितानननूयाजैरभ्याश्रावयेद्यद्दो देवा अतिपादयानीत्याहुतिं जुहुयात्। १।

अनुद्वासितेषु हविःशेषेषु आश्रावणं अभ्याश्रावणम्॥

यदि प्रणीता स्कन्देयुरुपदस्येयुर्वापो हि ष्ठा मयोभुव इति तिसृभिः पुनर्गृहीत्वा ततं म आप इत्याहुतिं जुहुयात्। २।

उपदासः शोषणम्॥

यद्यग्न्याधेये सूर्यो ऽनाविः स्यादुद्वयं तमसस्पर्युद् त्यं चित्रमित्याहुतीर्जुहुयात्। ३।

अनाविः स्यादुदयकाले प्रच्छन्नो न प्रकाशेत॥

यद्येनमुपधावेयुर्गोमायवो ऽवादिषुरेकस्तको ऽवादी-दभिमृताः स्मः परिधिं नः कुर्विति पालाशमिध्ममुप-समाधायेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि प्रजापत इति षडाहुतीर्हुत्वेमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम्। शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वते-नेति दक्षिणतो ऽश्मानं परिधिं दधाति। ४।

येषां कुले पुनःपुनर्मरणं प्रवृत्तं स्यात् ते ऽभिमृताः। ते यद्येनमुप-धावेयुः आहिताग्निमेनं शरणं गच्छेयुः एवं ब्रुवाणाः, गोमायवः

शिवाः अस्मान्प्रत्यशिवां वाचमवादिषुः एकस्तो वा दुर्वाचमवादीत् एवं दुर्निमित्तानि पश्यामः अभिमृताः स्मश्च तदस्माकं मरणभीतानां परित्राणार्थं परिधिं कुर्विति. तदा ब्राह्मणश्चेदभिमृतः पालाशमिध्मं लौकिके ऽग्नावादोत्सुपसमाधाय दर्विहोमविधिनैता आहुतीर्हुत्वा दक्षिणतो ऽश्मानं परिधिं दधाति। कस्य दक्षिणतः. अभिमृतानामिति ब्रूयात्. इमं जीवेभ्य इति लिङ्गात्. अभिमृतेभ्य उत्तरया दक्षिणतो ऽश्मानं परिधिं दधातीति गृह्ये व्यक्तवचनाच्च ॥

नैय्यग्रोध इध्मः क्षत्रियस्य राष्ट्रमर्यादायाम्। ५।

क्षत्रियस्याभिमृतस्य नैय्यग्रोध इध्मो राष्ट्रमर्यादायामुपसमाधेय इत्यर्थः॥

आश्वत्थो वैश्यस्य क्षेत्रमर्यादायाम्। ६।

तस्य यत्क्षेत्रं तस्मिन् आश्वत्थ इध्म उपसमाधेयः। शूद्रस्य तु नेष्ट एवायं विधिः ॥

इष्टेभ्यः स्वाहेत्यष्टावाहुतीर्दार्शपूर्णमासिकैः सर्वप्रायश्चित्तैर्विकल्पेरन्। ७।

अष्टावेता आहुतयः प्रकृतिविकृत्योर्ब्रह्म प्रतिष्ठेत्यादिभिर्विकल्पन्ते ॥

यदि दौःष्वप्न्यमन्यद्वा भयं पश्येद्यत इन्द्र भयामह इत्याहुती जुहुयात्। जपेदित्येके। ८।

यदि दुःस्वप्ननिमित्तमुत्पातादिनिमित्तं वा भयं पश्येदाहिताग्निः तदैते यत इन्द्र स्वस्तिदेत्याहुती जुहुयाज्जपेद्वा ॥

सर्वेषां वै घर्मो रुचां रोचते । तस्मात्प्रवर्ग्येण प्रचर्य प्रवृज्यमानस्य वोपश्रुत्याभिर्गीर्भिरिति जुहुयात् । जपेदित्येके । ९ ।

सर्वेषां ज्योतिषां मध्ये घर्मस्तिग्मतरं ज्योतिः. यथोक्तं श्रुतौ रोचितस्त्वं देव घर्म देवेष्वसीति । तेन तदभिभावुकं स्यात् । तस्मात्प्रवर्ग्यकर्मण्यार्त्विज्यं कृत्वा अकुर्वन्वा प्रवृज्यमानस्य घर्मस्याभिषवादिप्रभवं शब्दं श्रुत्वा आभिर्गीर्भिरिति जुहुयाज्जपेद्वा ॥

यदि होमायोपसमिद्धेष्वहुतेष्वग्निषु यजमानो ऽश्नीयाद्यत्ते वयं यथा ह तदित्याहुती जुहुयात् । समिधौ वादध्यात् । जपेदित्येके । १० ।

न सायमाहुतावहुतायामश्नीयात. एवं प्रातरित्युक्तम । तदतिक्रमे प्रायश्चित्तमुच्यते । होमायोपसमिद्धेष्विति होमार्थं विहृतेष्वित्यर्थः । यदग्ने यानीत्यादिभिः समिद्धेष्विदं प्रायश्चित्तम् । प्राक्तु समिन्धनाद्व्रातपतीमित्यन्ये ॥

यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्यामभिनिम्रुक्ताभ्युदितपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानो वा जुहुयात् । जपेदित्येके । ११ ।

यस्य प्रसुप्तस्य सूर्यो ऽस्तमेति सो ऽभिनिम्रुक्तः । यस्योदेति सो ऽभ्युदितः । यस्मिन्ननाहिताग्नौ कनिष्ठो ऽग्नीनाधत्ते स पर्याहितः । यस्मिन्नसुतसोमे कनिष्ठः सोमेन यजेत स परीष्टः । यस्मिन्ननाग्नौ

कनिष्ठो ऽग्निं गृह्णीयात्स परिविन्नः। यस्मिन्ननूढभार्ये कनिष्ठो दारानुपयच्छते स परिविन्नः। स्वयमुपयन्ता कनिष्ठः परिविविदानः॥ तत्राभिनिम्रुक्तादिशब्देष्वपि परिविविदान इतिवद्विभक्तिं दत्त्वा योजनीयम्। पर्याहितादेर्ज्येष्ठस्यैवायं विधिः. न पर्याधात्रादेः कनिष्ठस्य. तस्य परिविविदानत्वेनोपादानात्। तेष्वनाहिताग्नीनामौपासने होमो जपो वा। तेषामिहवचनं समानविध्युपात्तत्वादिति द्रष्टव्यम्॥ परीष्टलक्षणमुक्तं भार्गवेन. अकृतप्रथमयज्ञे* ज्येष्ठे सति करोति तं. कनिष्ठः परियष्टा† स्यात्परीष्टो ऽग्रज उच्यते॥

**अनाम्नातमिति तिस्रो ऽनाम्नाते जुहुयात्। जपेदित्येके। १२।**

अनाम्नाते प्रायश्चित्तविशेष इत्यर्थः। साधु वा कृतमेतदङ्गमसाधु वेत्यनिर्णीत इत्यन्ये। तत्रैष विधिः सर्वप्रायश्चित्तेन विकल्प्यते. यथा महाव्याहृतीः प्रकृत्यामनन्ति छन्दोगाः. यद्यविज्ञातं यद्यानवगतं सर्वस्यैव प्रायश्चित्तिः. तस्मादेतामेव जुहुयात्. अपि वानाम्नातं यदाम्नातमिति. अपि वा प्राजापत्यां प्रजापते न त्वदेतानीति॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

---

* † Corrected; the MSS. *fik* read अकृतप्रथमे यज्ञे and पर्येष्टा; in MS. *a* the whole passage is missing.

यस्याज्यमनुत्पूतं स्कन्देच्छिन्दत्प्राणि दद्यात्। १।

छिन्दत्प्राणीति यत्तृणादीनि दन्तैश्छिन्दन्भक्षयति तदेव गवाश्वादि दद्यात्, न बालमित्यर्थः ॥

यद्युत्पूतं चित्रं देयम्। २।

चित्रं हृदयंगमं धनमिति शेषः। तथा चित्रं धनमित्यत्र भारद्वाजः ॥

वरो देय इत्येकेषाम्। ३।

गतः ॥

यदि सुगातं यदस्य गृहे पुष्कलं स्यात्तद्दद्यात्। सं त्वा सिञ्चामीति तत्संसिञ्चेदभि वा मन्त्रयेत। ४।

यदस्य गृहे पुष्कलं सुलभं यवव्रीह्यादि दद्यात्। ततस्तःस्रुवः स्कन्नं स्रुचि संसिञ्चेत् स्रुचि पुनर्निक्षिपेत्। संसेकायोग्यत्वे ऽभिमन्त्रयेत ॥

देवां जनमगन्यज्ञ इत्येकेषामनन्तरमाज्याद्वदति। ५।

एकेषां शाखा। आज्यादनन्तरं आज्यमधिकृत्य देवां जनमगन्यज्ञ इत्याज्यस्कन्नाभिमन्त्रणं वदतीत्यर्थः॥ कुत एतदभिमन्त्रणं वदतीति चेत्, तस्यैवानन्तरं वचनात्, देवां जनमगन्यज्ञ इत्येतैर्यथापूर्वमभिमन्त्र्येति लिङ्गाच्च। तथा देवां जनमगन्यज्ञ इत्येतदभिमन्त्रयेतेत्येकेषामित्येव भारद्वाजः। एतदुक्तं भवति, न केवलं सुगाते किं तु सर्वत्रैवाज्ये स्कन्ने देवां जनमगन्यज्ञ इत्येतैर्मन्त्रैरभिमन्त्रणं तैस्तैर्विधिभिर्विकल्प इति ॥

यज्ञस्य त्वा प्रमयाभिमया प्रतिमयोन्मया परिगृह्णामीति तत्परिगृह्य भूपतये स्वाहेति प्राञ्चं प्रादेशं मिमीते। भुवनपतये स्वाहेति दक्षिणम्। भूतानां पतये स्वाहेति प्रत्यञ्चम्। भूत्यै स्वाहेत्युदञ्चम्। भूर्भुवः सुवरित्यूर्ध्वम्। ६।

तत्स्कन्नं परिगृह्य परितश्छिन्नेनापभज्य तस्य देशं तस्योपरि प्रतिदिशं प्रादेशान्मिमीते। तस्मात्प्रतिदिशमित्यन्ये। प्रदेशिन्यङ्गुष्ठयोः प्रसारितयोरायामः प्रादेशः। पूर्वतरविधिशेषश्चायं न सर्वविधिशेषः. प्रासङ्गिकत्वात्तस्य। तेन सुगते स्कन्ने पुष्कलं दत्त्वा सं त्वेति संसिच्याभिमन्त्र्य वा ततः प्रादेशाः। यदा तु देवां जनमगन्यज्ञ इत्यभिमन्त्रणं तदा प्रादेशा न भवन्ति. न च पुष्कलदानादि। निगदव्याख्यातश्चायमर्थः कल्पान्तरेषु ॥

भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनुमन्त्रयेतेति सर्वहविषामनवयवेन श्रूयते। ७।

सर्वेषामेव हविषामर्थे श्रूयते. न तु कंचिद्विशेषमवयुत्येत्यर्थः। केचित्वाहुः. सर्वहविषामित्येष्टिकसर्वहविरभिप्रायं दर्शपूर्णमासप्रकरणे श्रुतत्वात्. अनवयवेनेत्यनेनापि तेष्वेव विषयकार्त्स्न्यं विवक्षितमिति। तच त्वाह भारद्वाजः. भूपतये स्वाहेति स्कन्नमनुमन्त्रयेतेत्येकेषां न किंचन हविरधिकृत्य वदतीति ॥ तच्चेदमविशेषवचनं यत्राप्युर्व

अभिमन्त्रणान्तरं तत्रापि तेन विकल्प्यते । समुच्चीयत इत्यन्ये. यथा देवा जनमगन्यज्ञ इत्यादौ । यत्र त्वनुक्तं तत्र नित्यमेवेष्यते. यथा यस्य हविर्निरुप्तं स्कन्देत् यस्य वा देवतायै गृहीतमकृतमित्यादौ ॥ न बर्हिषि स्कन्ने हविषि प्रायश्चित्तमिष्यते. अस्कन्नं हि तद्यद्बर्हिषि स्कन्दतीति श्रुतेः । तत्र त्वाह भारद्वाजः. न बर्हिषि स्कन्ने प्रायश्चित्तमित्याश्मरथ्यः. यदि भूमिं प्राप्नुयात्कुर्यादेव तत्र प्रायश्चित्तमित्यालेखन इति ॥

यदि कपालं भिद्येत गायत्र्या त्वा शताक्षरया संदधामीति तत्संधायोपरि गार्हपत्ये धार्यमाणमभिजुहुयान्मनो ज्योतिर्जुषतामिति । ८ ।

यदि कर्मणि प्रयुक्तं कपालं भिद्येत तत्संधानार्थद्रव्यैः संधाय मनो ज्योतिरिति संधानलिङ्गया तदभिजुहुयात् । समानो ऽयं विधिरेकदेशभेदे ऽपि. यथोक्तं न्यायविद्भिः. अर्थसमवायात्प्रायश्चित्तमेकदेशे ऽपीति ॥

अथैनदपो ऽभ्यवहरेदभिन्नो घर्मो जीरदानुरिति । ९ ।

भूमिर्भूमिमगादित्यभ्यवहारमन्त्रो निवर्तते प्रत्याम्नानात् । अप्सु तु तेनाभिमन्त्रयत एव ॥

अथान्यत्संस्कृत्य कपालेष्वपिसृजेच्चयस्त्रिंशत्तन्तव इति यदि प्रागुपधानाद्भिद्येत । १० ।

अन्यत्कपालं दर्भेषु प्रयुज्य तत एकवदूहेन संमृश्यैवं प्रोक्ष्य च त्रयस्त्रिंशदिति भिन्नस्य स्थाने क्षिपेत् प्रागुपधानाच्चेत्तद्भिन्नं भवति ॥

अथ यद्युपहितानामेतेनैव मन्त्रेणान्यदुपदध्यात्। ११।

परतस्तूपधानाद्भेदे ऽन्यत्संस्कृतमेतेनैव मन्त्रेणोपदध्यादित्येतावान्विशेषः। समानमन्यत्संधानादि ॥

यस्य वा मन्त्रस्य स्थाने भिद्येत। १२।

अथवा येन मन्त्रेण प्रागुपहितं भिद्येत तेनैवोपदध्यादित्यर्थः ॥

यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालम्। १३।

अथ यदि कर्मणि प्रयुक्तानां मध्ये प्रागर्थकर्मणः पुरोडाशाधिश्रयणात्कपालं नश्येत् न दृश्येत तदैतां द्विहविष्कां निर्वपेत्। तस्यां तु

भार्गवो होता भवति। एकहायनो दक्षिणा। १४।

एवमस्यामृत्विङ्नियमात् प्रासङ्गिकत्वाच्च तन्त्रिण एव होतारं भृगुवंश्यमागमयेत्। अविरोधाद्दक्षिणायाश्च समुच्चयः ॥

मही द्यौः पृथिवी च न इति द्यावापृथिव्ययर्चा स्रुवाहुतिमत्र वाजसनेयिनः समामनन्ति। १५।

अत्र अस्मिन्विषये। परतस्तु अपहारनाशे सर्वप्रायश्चित्तमेव ॥

इति त्रयोदशी कण्डिका।

यद्येककपालः स्कन्देत्परि वावर्तेत प्रजापतेर्वर्तनिमनुवर्तस्वानु वीरैरनुराध्याम गोभिः। अन्वश्वैरनु सर्वैरु पुष्टैरनु प्रजयान्विन्द्रियेण देवा नो यज्ञमृजुधा नयन्त्विति यथास्थानं कल्पयति। १।

स्थितस्य स्थानाच्चलनं स्कन्दनम्। पार्श्वात्पार्श्वान्तरेणावर्तनं पर्यावर्तनम्। यथास्थानं कल्पयति पूर्वस्मिन्नेव स्थाने स्थापयति॥ समानो ऽयं विधिर्हुताहुतस्कन्दने। हुतस्य पर्यावर्तने तु यदि हुतः पर्यावर्ततेत्यादिविधिना कल्पनं वेदितव्यम्॥

तं यजमानो ऽभिमन्त्रयते प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रति प्रजायां प्रतितिष्ठामि भव्ये॥ विश्वमन्याभिवावृधे तदन्यस्यामधिश्रितम्। दिवे च विश्वकर्मणे पृथिव्यै चाकरं नम इति। अथास्कान्द्यौः पृथिवीमित्याहुती जुहुयात्। २।

गतौ॥

वैश्वानरं द्वादशकपालं निर्वपेद्यदि पत्नीः संयाजयन्कपालमभिजुहुयात्। ३।

प्रासङ्गिकत्वमस्यापि तन्त्रमध्यपाताद्द्रष्टव्यम्॥

एतामेव निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम्। ४।

व्याख्यातो ऽयं विधिः पथिकृद्विधिना॥

एतामेव निर्वपेद्यदकृत्वाग्रायणं नवस्याश्नीयात् । ५ ।

नानिष्ट्वाग्रायणेनाहिताग्निर्नवस्याश्नीयादित्युक्तम् । तदतिक्रमेऽप्येषैव प्रायश्चित्तिः ॥

आनीतो वा एष देवानां य आहिताग्निरदन्त्यस्य देवा अन्नम् । यदकृत्वाग्रायणं नवस्याश्नीयाद्देवेभ्यो भागं प्रतिकॢप्तमद्यादार्तिमार्छेत् । ६ ।

अथानेन प्रायश्चित्तनिमित्तस्य प्राशनस्य निन्दा प्रदर्श्यते प्रायश्चित्तादरार्थम् । देवानां ह्येष संबन्धमानीतो योऽग्नीनाधत्ते, भागलिप्सुभिर्देवैः स्वीयत्वेन परिगृहीत इति यावत् । तस्मादतः परमस्यान्नं देवा भुञ्जते । तत्र यदिताननिष्ट्वा स्वयं नवमश्नीयात् देवेभ्य एव भागतया कॢप्तमग्रपाकमश्नितवान्स्यात् ततश्चार्तिं प्राप्नुयात् । तस्मादशननिषेधं नातिक्रामेत् । अतिक्रम्य त्वश्नन्नेतां निर्वपेत् । निरूप्य चैनां स्वे काले पुनराग्रयणेन यजेत, अशननिमित्तत्वादस्याः । कालातिक्रमे च पुनः पथिकृतवैश्वानरौ प्रागेव दर्शितौ ॥

मारुतं त्रयोदशकपालं निर्वपेद्यस्य यमौ जायेयातां गावौ वा पुरुषौ वा । ७ ।

पुरुषौ मनुष्यजातीयौ ॥

निर्वीर्यतां वै पुरुष आशास्ते । अपशुतां गौः । ८ ।

वीर्यं प्रजननशक्तिः । आशासनमिच्छा । तया च तत्कार्यं करोति ।

र्थो लक्ष्यते. तदयमर्थः। पुरुषो यमो जातो वीर्योपघातं करोति. पशुश्चापशुताम्। तस्मादादर्तव्यं प्रायश्चित्तमिति ॥

गायत्री पुरोऽनुवाक्या भवति। त्रिष्टुग्याज्या। ९।

मरुतो यद्ध वो दिवः. या वः शर्मेति ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्यमन्यस्याग्निषु याजयेयुर्यस्य वाग्निषन्यो यजेत। १०।

यदि प्रमादवशात्परस्याग्निषु परमनवहिता ऋत्विजो याजयेयुस्तत्रे-यमिष्टिरुभयोर्यष्टुरग्निमतश्च ॥

रौद्रं वास्तुमयं चरुं निर्वपेद्यस्य रुद्रः पशूञ्छमायेत। ११।

यस्य पशूञ्ज्वरो मारयेत्तस्य तच्छान्त्यर्थश्चरुः। वास्तुर्नाम सस्यविशेषः ॥

एतयैवावृता निषादस्थपतिं याजयेत्। १२।

निषादो नाम ब्राह्मणाच्छूद्रायामुत्पन्नः। क्षत्रियादित्यपरम्। स्थपतिः महत्तरः। निषादश्चासौ स्थपतिश्चेति निषादस्थपतिः। सो ऽपि स्वर्गकामो ऽनयेष्ट्या यजेत। ननु शूद्रस्य कर्मानर्हस्य कुतः कर्माधिकारः कुतश्च तस्याग्निविद्ये। तत्राह

सा हि तस्येष्टिः। १३।

सा हि तदुद्देशेन विहिता। अतस्तावत्तस्यामस्ति तस्याधिकारः

सैव च यावदर्थमन्याग्निविधे अध्याचेष्यतीति भावः । लौकिकाग्नावियष्टिरित्येके । तत्र हविष्कृदाधावेति प्रभृद्रम्येत्यादि न प्रसर्तव्यम् ॥

कृष्णाजिनं दक्षिणा कूटं वा कर्णो वा गर्दभो हरिणो वा हरिणपृणाका वा श्यामाकपात्रो वा शफको वेति विज्ञायते । १४ ।

निषादस्य मृगघातकवृत्तेः स्वकर्मार्थसाधनविशेषः कूटम् । अकर्णः कर्णविकलः । निषादैः कृतपरिचया हरिणत्रस्यार्थं विसृष्टा हरिणपोतिका हरिणपृणाका । पात्रपूरणाः श्यामाकाः श्यामाकपात्रः । शफकः प्रसृतखुरो हरिण इष्यते ॥

इति चतुर्दशी कण्डिका ।

यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत । १ ।

आहिताग्नेर्ब्रह्मचर्यकाले स्त्रियमुपेयुषो ऽयं विधिः. आहिताग्न्यधिकारात् । अथवा प्रसिद्धब्रह्मचारिण एव ग्रहणम्. रूढेर्बलीयस्त्वात् । वक्ष्यति च ब्रह्मचारिधर्मेषु. गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेतेति । न चैवमस्यानर्थक्यम्. देवताविकल्पार्थत्वात् । न चाहिताग्न्यधिकारे वचनानुपपत्तिः. देवताभेदे श्रौतप्रयोगविधानार्थत्वेनोपपत्तेः । तस्माद्ब्रह्मचर्यार्थत्वे ऽपि न दोषः ॥ तदुक्तं भारद्वाजेन. यो ब्रह्मचारी स्त्रियमुपेयादिति कस्यायं वादः. आहिताग्नेरित्येकम्. अनाहिताग्नेरित्यपरमिति ॥ तत्र त्वाहिताग्ने-

प्रतिपत्त्यादि प्रायश्चित्तं द्रष्टव्यम्। यथोक्तम्. यत्ये ऽहनि मांसं वाश्नाति. स्त्रियं वोपैतीति. यदि दीक्षितो ऽवकिरेतेत्यादि॥

भूमावकपालं पुरोडाशं श्रपयेत्। २।

अकपालमिति वचनात् भूमिकपालमित्यवचनाच्च कपालधर्मरहितायां भूमौ पुरोडाशं श्रपयेत्॥

अस्रवदानैश्चरेयुः। ३।

वपादिभिरवदानैरसृ चरेयुः। प्रयाजादिभिरप्यस्त्वेव प्रचारः. प्रधानप्रदेशत्वादङ्गानाम्। न चात्रभृथयत्यत्रापस्तत्र गच्छन्ति. अपो ऽभ्यवहरन्तीत्यवचनात्। तेनाप एवोत्तरवेदिस्थाने स्थापनीया भवन्ति। तत्रावभृथवदवेक्षादीनामर्थलुप्तानां निवृत्तिः. यथार्थं मन्त्राणामूहश्च द्रष्टव्यः॥

रक्षोदेवत्यः स्यान्निर्ऋतिदेवत्यो वा। ४।

गर्दभ इति शेषः॥

निर्ऋतिं पाकयज्ञेन यजेत। ५।

निर्ऋतिदेवत्यपक्षे नायं पशुपक्षः। किं तु पार्वणविधिना लौकिके ऽग्नौ निर्ऋत्यै स्वाहेति दर्विहोमः कार्य इत्यर्थः। तथावकीर्णिनो गर्दभेज्या लौकिक इति कात्यायनः॥ तत्र तु हविःशेषं शूद्राय दद्यात्. यथा वक्ष्यति. गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत तस्य शूद्रः प्राश्नीयादिति॥

यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति । तत्सं-
स्थाप्यान्यद्धविस्तद्दैवतं निर्वपेत् । ६ ।

यस्य हविः चायति विदह्यते तं यज्ञमलक्ष्मीर्गृह्णाति . न स कार्य इति यावत् । ततश्च चामस्य हविष आज्यं प्रतिनिधिं कृत्वा शिष्टैश्च हविर्भिस्तत्कर्म संस्थाप्य तस्मिन्नेव विहारे ऽन्यद्धविस्तद्दैवतं निर्वपेत् । अन्यन्वाधानादि तेनैव हविषा पुनर्यजेत नान्यैरचामैरपीत्यर्थः । तदेव हविर्निर्वपेदित्येव सत्याषाढभारद्वाजौ । द्वोहयोर्दाहे तु वैशेषिकत्वादार्तिप्रायश्चित्तमेवेष्यते ॥

अथैकेषाम् । यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति । यदुच्छिष्टं स्यात्तेन प्रचरेद्द्वेष्याय तां दक्षिणां हविरुच्छिष्टं च दद्यात् । तमेव निर्ऋत्या ग्राहयतीति विज्ञायते । ७ ।

पुरोडाशे चामे ऽयं विधिः पूर्वेण विकल्प्यते । तत्र यदेव चामावशिष्टं स्यात्तेनैव यजेत । या तु तस्मिंस्तन्त्रे दक्षिणा तां चामहविःशेषं च द्वेष्याय दद्यात् । तथा च कृते यज्ञग्राहिणी निर्ऋतिस्तस्मिन्गमिता भवति । ततश्च स एव यज्ञः श्रेयान् संपद्यत इति पुनरिज्यापि न कार्येति भावः ॥

सर्वदाहे प्रायश्चित्तम् । ८ ।

यदेतत्चामप्रायश्चित्तं तत्सर्वदाह एव भवेत् . नैकदेशदाहे . तस्याव-

र्जनीयत्वात् । यथोक्तं न्यायविद्भिः. नामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वादिति ॥

**यदि वावदानेभ्यो न प्रभवेत् । ९ ।**

असर्वदाहे ऽपि यदा शिष्टं हविरिज्यार्थेभ्यो ऽवदानेभ्यो न पर्याप्तं स्यात्तदापीष्यते । न कथंचिदवदानेभ्यः पर्याप्त इत्यर्थः ॥

**यद्यप्रत्तदैवतं हविर्व्यापद्येतान्यद्धविस्तद्दैवतं निर्वपेत् । १० ।**

अप्रत्तं देवतायै यस्मात्तदप्रत्तदेवतम् । अप्रत्तदैवतमिति वा पाठः.* तदा त्वप्रत्तं दैवतमवदानं यस्येति विग्रहः ॥ व्यापन्निर्दोष इति वक्ष्यति । सा च नाशादिनाप्ययोग्यस्योपलक्षणार्था . असर्वहविर्विषया च. यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वेत्युत्तरत्रवचनात् । तदस्यां व्यापत्तौ सत्यां यद्दैवत्यं हविर्व्यापन्नं तस्मात्तमन्यन्निर्वपेत् . न तु तत्सहभाव्यव्यापन्नमपि हविरन्तरमित्यर्थः ॥ प्रत्तदैवतस्य त्वप्रत्तसौविष्टकृतस्यापि व्यापत्तौ न पुनरुत्पत्तिः . अप्रत्तदैवतमिति वचनात् अप्रयोजकत्वाच्च । तथा प्राक् स्विष्टकृत इत्येवाश्वलायनः . तथा अवदानदोषे पुनरायतनादवदानमिति च ॥ सांनाय्यव्यापत्तौ त्वार्तिप्रायश्चित्तमेवेष्यते वैशेषिकत्वात् । वक्ष्यति च . तत्र स्रुगादानप्रभृतयो मन्त्रा इति । तद्विकारव्यापत्तिरपि तेनैव व्याख्याता । तत्र त्वाह भारद्वाजः . सांनाय्यप्रायश्चित्तान्यामिक्षायां न विद्यन्ते . यद्यन्यतर-

---

* This reading is exhibited by my MSS. of the text.

ह्यापद्येत यत एव कुतश्चोत्पाद्य प्रचरेत्. यद्युभयं व्यापद्येताज्येन दध्ना पयसा वा यजुषोत्पूतेन प्रचरेत्. आज्येन वाजिने व्यापन्न इति ॥

तत्र स्रुगादानप्रभृतयो मन्त्रा आवर्तेरन् । ११ ।

स्रुगग्निहोत्रहवण्यादीयते येन स मन्त्रः स्रुगादानः। समन्त्राणामेव कर्मणामावृत्तिसिद्धौ मन्त्रवचनमुत्तरविधिविकल्पार्थम् ॥

यावदन्ते वा व्यापद्येत । १२ ।

यावदन्ते कर्मणि कृते व्यापत्तिर्जाता ततः परभाविन एव मन्त्राः प्रयुज्येरन्। पूर्वभाविनां तु सकृत्प्रयोगादेव सिद्धः कर्मोपकारः। त एव वा पूर्वप्रयुक्ताः स्वैःस्वैः कर्मभिरावर्तमानैः संपत्स्यन्त इति भावः ॥

यदि प्रत्तदैवतमाज्येन शेषं संस्थापयेत् । १३ ।

यदि प्रत्तदैवतं ततः स्विष्टकृदादि शेषमाज्येन निर्वर्तयेत्. न तु हविरन्तरमागमयेन्नोपयेदित्यर्थः। यदा तु प्रत्तदैवतमपि प्रागेव प्रदानाद्दुष्टमिति ज्ञायते तदा तु पुनरुत्पत्तिरेव. असत्कल्पत्वात्प्रदानस्य। अत्र त्वाह कात्यायनः. अदोषो वा. न वै देवाः कस्माच्चन बीभत्सन्त इति श्रुतेरिति ॥

यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाज्येनैता देवताः प्रतिसंख्याय यजेत । १४ ।

यस्य लेकद्विबहुषु तन्त्रेषु यावत्संभवं सर्वाण्येवाप्रत्तदैवतानि हवींषि नश्येयुर्दाहादिना दुष्येयुर्वा केशकीटादिना अपहरेयुर्वा तानि दस्यवस्तदा यासां हविर्व्यापन्नं ता देवताः प्रतिसंख्याय प्रदानार्थं

गणयित्वा श्रौवाज्येन प्रतिनिधिना यथाप्रकृत्येव यजेत. नोपांशुधर्मेण. प्रतिनिधेस्तद्धर्मवचनात्. पशुधर्माज्यं भवतीति लिङ्गाच्च । आज्यानामपि व्यापत्तौ स्वात्स्वाद्योनेः स्वैःस्वैर्मन्त्रैः पुनर्गृहीत्वा यजेत ॥

**अथान्यामिष्टिमनुल्बणां तन्वीत। यज्ञो हि यज्ञस्य प्रायश्चित्तिः । १५ ।**

अथ संस्थितायामिष्टौ तामेवेष्टिं पुनरनुल्बणामविकृतां कुर्वीत. यतो यज्ञस्यार्तस्य पुनरिज्यैव प्रायश्चित्तिः। तत्र तु सर्वहविर्व्यापत्तिविषये सांनाय्यंयोरप्ययमेव विधिर्वैशेषिकत्वादिष्यते. नातिप्रायश्चित्तम्॥ आश्वलायनमतात्त्वानाहनाद्धर्मैवायं विधिः. यथा हविषां व्यापत्तावोल्हाम् देवतास्वाज्येनेष्टिं समाप्य पुनरिज्येति। तथा हविरावृत्तिं प्रकृत्याह. प्रागावाहनाच्च दोष इति। तथा अप्यत्यन्तं गुणभूतानामिति च। गुणभूतानामपि हविषामत्यन्तमावाहनात्प्रागूर्ध्वं च सर्वदाहे हविरावृत्तिः नेज्यावृत्तिरित्यर्थः ॥

**अपो व्यापन्नं हविरभ्यवहरतीति विज्ञायते । १६ ।**

व्यापन्नं तु हविरप्सु क्षिपेत्। किमेतद्व्यापन्नं नाम। तत्राह

**यदार्याणामभोजनीयं स्यान्न तेन यजेत । १७ ।**

अयमभिप्रायः। यागानर्हतापत्तिः व्यापत्तिः. सा चार्यभोजनानर्हत्वलक्षणो दोषः। न तेन दुष्टपर्यायेण व्यापन्नेन यजेत। तदप्स्वेव क्षिपेदिति। तथा चापो दुष्टं हविरभ्यवहरन्तीति प्रकृत्याह भारद्वाजः. कथं दुष्टं हविः स्यात्. यदार्याणामभोजनीयं न तेन देवान्यजेतेति। तथा शिष्टभक्षप्रतिषिद्धं दुष्टमित्याह कात्यायनः। आश्वलायन-

स्याद्. व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैरिति ॥

यस्य पुरोडाशो दुःशृतस्तद्धविर्यमदैवत्यं यममेव तद्गच्छतीति विज्ञायते। संस्थाप्य तदन्वाहार्यपचने चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत्। १८।

पुरोडाशग्रहणात्पुरोडाशतद्विकारेष्वेवायं विधिः. नेतरविकारेषु। यदपक्वं विषमपक्वं वा तद्दुःशृतम्। तत्तस्यै देवतायै हुतमपि यमदैवत्यं भूत्वा यममेव गच्छति। तस्मात्तदारब्धं कर्म तेनैव हविषा संस्थाप्य ततश्चतुःशरावं पक्त्वा चतुरो ब्राह्मणान्भोजयेत्। एतदेवास्य प्रायश्चित्तमित्यर्थः ॥

तेषां भार्गवः प्राशितॄणामेकः स्यात्। १९।

एकस्य भार्गवनियमान्नलिङ्गनियमो भोक्तृषु ॥

यो ऽदक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामो ऽनायुः। उर्वरां दद्यात्। २०।

दक्षिणाविशेषानाम्नाने यदि यत्किंचिदोदनाद्यदत्त्वा यजेत स यज्ञः प्रक्षामः दग्ध इव भवति निर्वीर्यत्वादनायुरिव च भवति. यज्ञ आयुष्मान्स दक्षिणाभिरिति श्रुतेः। अथवा अनायुरनायुष्यं च यजमानस्य स्यादित्यर्थः। तथानायुर्यजमानः स्यादिति सत्याषाढभारद्वाजौ ॥ तत्राभिप्रेतदक्षिणातुल्यमूल्यामुर्वरां दद्यात्। सर्वसस्याढ्या भूः उर्वरा ॥

यथादिष्टां दक्षिणामन्तरियादुर्वरा प्रतिष्ठिता देया। सा प्रायश्चित्तिः। २१।

अथ यदि चोदितामेव दक्षिणामदत्त्वा यजेत तत्रापि तत्पुरुषोर्वरादानमेव प्रायश्चित्तं नेतरदित्यर्थः। प्रतिष्ठिता निरवद्या ॥

यद्यभागां देवतामावाहयेदाज्येनैनां यथोढां यजेत। पुरस्ताद्वा स्विष्टकृतः। २२।

यद्यचोदितां देवतामावाहयेत् तां यथोढां यस्मिन्क्रम आवाहिता तस्मिन्नेव क्रमे यजेत। हुतेषु वा नारिष्ठेषु मा चाज्यहविष्ट्वादुपांशुधर्मेण यष्टव्या। आवाहनवचनं च निर्वापोपाकरणदोहनादिरूपस्य हविर्ग्रहणस्यापि प्रदर्शनार्थम्. यद्यभागां देवतामावाहयेद्गृह्णीयादिति बह्वृचश्रुतेः। तेनाभागार्थे निरुप्तमुपाकृतं दुग्धं चैवोत्सृज्य एवमाज्येन यजेत। कात्यायनस्त्वाह. अधिकं निरुप्य तत्र यजेन्न वा अचोदितत्वादिति। तत्र भागिन्यभागयोर्मिश्रनिर्वापे ऽपि विभागमन्त्रेण विभक्तस्याभागाभागस्य त्यागः ॥

यदि भागिनीं नावाहयेद्यच्च स्मरेत्तदुपोत्थाय मनसावाह्य यद्वो देवा अतिपादयानीत्याहुतिं जुहुयात्। २३।

भागिन्यनावाहने सति प्रागिज्यायाः स्मृते तदानीमेवोपोत्थाय मनसावाह्य यद्वो देवा इत्याहुतिं जुहुयात्। परतस्त्विज्यायाः स्मृतावाहुतिरेव. नावाहनम् ॥

इति पञ्चदशी कण्डिका ।

यदि पुरा प्रयाजेभ्यो बहिःपरिध्याहुतिः स्कन्देदाग्नीध्रं ब्रूयादेतां संक्रष्य जुहुधीति। तां सो ऽञ्जलिना जुहोति। तस्मै पूर्णपात्रो देयः। १।

यत्र पुरा प्रयाजेभ्यो ऽप्याहुतिसंभवः सो ऽस्य विधेर्विषयः यथा करम्भपात्रादि। पूर्णपात्रः पात्रपूर्णा व्रीह्यादिः॥

यत्किंच यज्ञे मृन्मयं भिद्येत तदपो ऽभ्यवहरेद्भूमिर्भूमिमगादिति। २।

ब्रह्मणो ऽप्यनेनाभिमन्त्रणं प्रतिधातव्यम्॥

आहवनीये दारुमयाणि। ३।

तानि तूष्णीं प्रहरेत् न मन्त्रेण. भूमिर्भूमिमगादिति लिङ्गविरोधात्॥

यदृक्तो यज्ञं भ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयात्। यदि यजुष्टो भुव इति दक्षिणाग्नौ। यदि सामतः सुवरित्याहवनीये। ४।

ऋक्तः ऋग्द्वारतः. ऋग्वेदविहितस्य कस्यचित्कर्मणो मन्त्रस्य वा भ्रेष इत्यर्थः। एवं यजुष्ट इत्यादि॥

यदि सर्वतः सर्वा जुहुयात्। ५।

युगपत्सर्वतो भ्रेषे सर्वा व्याहृतीर्जुहुयात्. सर्वाभिर्व्याहृतीभिरेकामाहुतिमाहवनीये जुहुयादित्यर्थः. यथा सावित्राणि जुहोतीत्यादौ।

कुत एवं व्याख्यायत इति चेत्. पृथक् सर्वा जुहुयादिति व्याख्याते सूत्रानर्थक्यप्रसङ्गात् बाहृच्ये कल्पान्तरेषु चैवं व्यक्तोपदेशाच्च। बाहृच्ये तावद्यथोक्ता आहुतीरुक्तोक्तम्. यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एवेति। भारद्वाजश्चाह. अथ यदि सर्वतो भूर्भुवः सुवरित्याहवनीये जुहुयादिति। एवं कल्पान्तरेष्वपि द्रष्टव्यम्॥

तदिदं सर्वप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः। यत्रा-नाम्नातं तत्र क्रियेतेत्यालेखनः। सर्वत्र समभ्युच्चयः स्या-दित्यपरम्। ६।

तदिदमिति सेयं सर्वाभिर्व्याहृतीभिरेकाहुतिः सेत्यर्थः। कुतः। आनन्तर्यात्. सर्वप्रायश्चित्तसमभिव्याहाराच्च। सा हि तस्या एव समाख्या शास्त्रेषु प्रसिद्धा. यथा तावद्बाहृच्ये भूर्भुवः स्वरिति सर्वा अनुद्रुत्येति प्रकृत्याम्नायते. सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतय इति। तथा छान्दोग्ये ऽपि. किं सर्वप्रायश्चित्तमिति महाव्याहृती-भिरेव यद्यजन्तीति। एवं सूत्रकारवचनान्यपि तत्रतत्रैवानुसंधेयानि॥ तदिदं सर्वप्रायश्चित्तमनाम्नातप्रायश्चित्ते तावद्विषये नियमेन क्रियते. इतरत्राप्याम्नातैः सह विकल्पेनेति प्रथमः कल्पः। यत्रानाम्नातो विशे-षस्तत्रैवेति द्वितीयः। न केवलमनाम्नाते किं त्वाम्नाते ऽपि विशेषे तेनतेन समुच्चयनियम इति तृतीयः॥

यद्येनं विहारे बहिर्वा भयं विन्देत्प्रजापतिर्विश्वकर्मा तस्य मनो देवं यज्ञेन राध्यासम्। अर्थेगा अस्य

जुहितो ऽवसानपते ऽवसानं मे विन्देत्याहुतिं जुहुयात्। ७।

यद्येनं विहृताग्निं यजमानं विहारविषये बहिर्वा भयमागच्छेत् तदैवेयमाहुतिः. यत इन्द्र भयामह इति चाहुतिद्वयम्। विहृताग्नेस्त्वेतदेव ॥

यस्य हविर्निरुप्तं स्कन्देच्छिन्दत्प्राणि दद्यात्। यद्युन्नयेच्चित्रं देयम्। वरो देय इत्येकेषाम्। ८।

निर्वापप्रभृत्योत्पवनात् छिन्दत्प्राणि दद्यात्. ततश्चित्रम्। उभयत्र भूपतय इत्यनुमन्त्रणम्। व्याख्यातः शेषः ॥

यस्य देवते अवदाने हवींपि याज्यानुवाक्ये वा विपरिहरेयुर्यस्य वा देवतायै गृहीतमहुतं स्कन्देद्देवतान्तरये वा यदस्य गृहे पुष्कलं स्यात्तद्दद्यात्। ९।

यस्य देवते विपरिहरेयुः व्यत्ययेन नयेयुर्ऋत्विजः. यथा निर्वापात्राहनादि प्रथममग्नीषोमयोः कुर्युरथाग्नेरिति। प्रथमं पूर्वार्धादवदायाय मध्यादित्यवदानविपर्यासः। तथा अग्नीषोमीयादग्निं यजत्याग्नेयादग्नीषोमावित्यादि हविषाम्। याज्यामनुवाक्यां कुर्यात् अनुवाक्यां वा याज्यां अचोदितां वान्यतरच्च कुर्यादुभे वाचोदिते इति याज्यानुवाक्ययोः॥ देवतायै गृहीतमितीज्यार्थमवत्तमित्यर्थः। देवतान्तरयः स्वकर्मे अनिज्या अनिर्वापो वा। यदस्य गृह इत्यादि व्याख्यातम्॥ एतेषु निमित्तेषु पुष्कलदानमेव प्रायश्चित्तम्। यदा-

न्यदीयाद्धविषो ऽन्या देवतेज्यते अन्यदीयाभ्यां वा याज्यानुवाक्याभ्यां तत्र पुष्कलं दत्त्वा शिष्टादेव पुनरवदाय यजेत. सर्वस्यै हविषो देवतार्थत्वात्. अवदानदोषे पुनरायतनादवदानमित्याश्वलायनवचनाच्च॥ तथा देवतायै गृहीतस्य स्कन्दने भूपतय इत्यभिमन्त्र्यायमेव विधिरादानायोग्यत्वे। आदानयोग्यत्वे तु तदेवादाय यजेत॥ तथा देवतान्तरे ऽप्यसमाप्ते कर्मणि स्मृते तदामीमेवेज्या निर्वापो वा। समाप्ते त्वन्वाधानादारभ्यान्तरितयागार्था पुनरिज्या॥

त्वं नो अग्ने स त्वं नो अग्न इति सर्वत्रान्तरये विपर्यासे चैते आहुती जुहोतीत्येके। १०।

सर्वत्रोक्तविषये ऽन्यत्र चायं विधिः। उक्तविषये तु पूर्वेण विकल्प्यते। तत्र प्रधानान्तरये कृत्वा प्रायश्चित्तं पुनःक्रिया पूर्वमेव दर्शिता॥ यदाङ्गमप्यन्तरितमसंस्थिते तन्त्रे स्मृतं तदुपकारक्षमं च तदपि क्रियते। द्रव्यसंस्कारास्त्वपवृक्ते द्रव्ये न क्रियन्ते तदर्थत्वात्। तथा समन्त्रके कर्मण्यमन्त्रकमपवृक्ते* प्रायश्चित्तमेव न पुनर्मन्त्रप्रयोगः. तादर्थ्यादेव. पुनःप्रयोगो वा यावदन्तं वा व्यापद्येतेत्यत्रोक्तान्न्यायात्। तथा च भारद्वाजः. अपवृक्तार्थस्य कर्मणो मन्त्रप्रयोगः कृताकृत इति। द्राह्यायणेन चोक्तम्. यजुरन्तरये ऽव्याहारं ध्यानजप्यं उपेक्षणं शाण्डिल्य इति॥ होममन्त्रान्तरये तु पुनर्होमो ऽन्यत्र प्रतिनिगद्य होमेभ्यः। तेषु तु नावृत्तिः याज्याप्राधान्यात्॥

यस्यं पुरोडाश उद्वा पतेत्सं वा विजेत तमुद्वास्य

* Corrected; *a* अपवृक्त, / *i k* अपवृक्ते.

बर्हिषदं कृत्वा किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्ते-रिहागहि। अघोरो यज्ञियो भूत्वासीद सदनं स्वमासीद सदनं स्वम्॥ मा हिंसीर्देव प्रेषित आज्येन तेजसाज्यस्व मा नः किंचन रीरिषः। योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीत्येताभ्यामभिमन्त्रयेताभि च घारयेत् ।११।

उत्पतेत् कपालेभ्यः पात्र्या वा प्रमादादपगच्छेत् संविजेत भिद्येत वा ततस्तमादाय बर्हिष्यासाद्य किमुत्पतसीति द्वाभ्यामभिमन्त्र्य द्वाभ्यामभिघार्य पुनः स्थाने स्थापयेत्। अस्तीर्णे तु बर्हिष्यभिमन्त्रणाभिघारणे एव क्रियेते. नोद्वासनादि॥

भूत्वा प्रभवति यजमानो यस्यैतां यज्ञे प्रायश्चित्तिं कुर्वन्ति।१२।

भूत्वा भूतिं प्राप्य प्रभवति प्रभुर्भवति. समानानामीश्वरो भवतीत्यर्थः। प्ररोचनाप्रदर्शनमादरार्थम्॥

इति षोडशी कण्डिका।

इति चतुर्थः पटलः॥

---

अथ पशुप्रायश्चित्तमारिप्सुस्तत्र चातुर्मास्यानामपि साधारणं पृषदाज्यप्रायश्चित्तं तावदाह॥

स्कन्ना द्यौः स्कन्ना पृथिवी स्कन्नं विश्वमिदं जगत्।

स्कन्नादो विश्वा भूतानि प्र स्कन्नाज्जायतां हविः॥ इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणो रायस्पोषो निषीदतु॥ अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः स्वपत्या सुवीरा। इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः॥ पयस्वतीरोषधय इत्येताभिश्चतसृभिः पृषदाज्यं स्कन्नमभिमन्त्र्यापोऽभ्यवहृत्य निर्णिज्य स्रुचं शतमानं हिरण्यं स्रुच्यवधायेदं विष्णुर्विचक्रम इत्यन्यत्पृषदाज्यं गृहीत्वाश्वेनावघ्राप्यायतने सादयेत्। १।

स्रुक्संयोगात्स्रुग्गतस्यैवायं विधिः। स्थालीगतस्य त्वाज्यवदेव विधिर्भवति। तत्र स्कन्नं चतसृभिरभिमन्त्र्य स्कन्नशिष्टमप्सु क्षिप्त्वा पुनः स्थाल्याः पञ्चहुत्वो वैष्णव्या गृहीत्वा मन्त्रेण सादयेत्॥

अथैकेषाम्। पृषदाज्ये स्कन्ने पृषदाज्ये पृषदाज्यमभिगृह्य मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्। २।

अभिगृह्य स्कन्नशिष्टस्योपरि स्थाल्याः पूर्णां गृहीत्वेत्यर्थः। तत्र तु भूपतय इति स्कन्नाभिमन्त्रणम्॥

एवं सोमे स्कन्ने सोमे सोममभिगृह्य जुहुयात्। ३।

सोमस्यात्र प्रासङ्गिकं वचनम्। तत्रापि योगितः सोममभिगृह्य मनस्वतीं जुहुयात्॥

यद्पामृक्षच्छकुनिर्मुखेन निर्ऋते तव। अग्निष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदन इति कृष्णशकुन्यवमृष्टमभिमन्त्रयते। अभ्यवहरणादि पूर्ववत्। निर्लिख्यते ऽत्र पात्रम्। ४।

अभिमन्त्रणमन्त्रस्त्वत्र यद्पामृत्तदिति भवति. पात्रनिर्लेखनं चाधिकम्। समानमन्यत्पूर्वेणेत्यर्थः। केचित्तु मुखेनेति मन्त्रवर्णात् काकमुखेनापमृष्टस्यैवैतं विधिमिच्छन्त्यन्यस्पृष्टं तद्व्यापन्नविधिनाप्सु क्षिप्वा निर्लिखितायां स्रुचि स्वमन्त्रेण गृह्णन्ति ॥

*यद्वालिक्षच्छ्वपान्मुखेन निर्ऋते तव। अग्निष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदन इति श्वापदावमृष्टमभिमन्त्रयते। अभ्यवहरणादि पूर्ववत्। नात्र पात्रं प्रयुज्यते। अन्यस्मिन्गृह्णाति। ५।

शुन इव पादा यस्य स श्वापदः श्वसृगालमार्जारादिः पञ्चनखः। तदवमृष्टं त्वेतयाभिमन्त्र्य स्रुचं च तां त्यक्त्वा पात्रान्तरं संस्कृत्य तस्मिन्गृह्णाति। समानमन्यत्पूर्वेण। एतेनैव निदर्शनेन पतितोदक्याद्यप्रयतस्पृष्टानां द्वादशमलोपहतानां च त्यागो वेदितव्यः ॥

यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्याहुतिं जुहुयात्। यस्माद्भीषावाशिष्ठास्ततो नो अभयं

* Corrected; the MSS. read यद्वालिख्यङ्क॰.

क्षधि। प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुष इति जुहुयादभि वा मन्त्रयेत । ६ ।

उपाकरणप्रभृत्या संज्ञपनात् यदि पशुः क्रन्देत्तदा यदस्य पार इति कृत्वा यस्माद्भीषेत्यनया जुहुयात् अभिमन्त्रयेत वा पशुम्। संज्ञपनदशायां लिन्द्रस्य भाग इत्यवेक्षणस्यापि समुच्चय इति द्रष्टव्यम् ॥

यद्यु वै निषीदेदेतयैव यस्माद्भीषा न्यषद इति द्वितीयाम् । ७ ।

उपाकृतस्योपवेशने त्वेतयैव यस्माद्भीषा न्यषद इति विकृतया द्वितीयामाहुतिं जुहुयात् । समानमन्यत्पूर्वेणेत्यर्थः । केचित्तु तिष्ठति पशाविति प्रयाजेषु नियमात्तवैतं विधिमिच्छन्ति ॥

निपन्नं तं मैत्रावरुणदण्डेनोत्थापयेत् । ८ ।

इति सप्तदशी कण्डिका ।

उदुस्र तिष्ठ प्रतितिष्ठ मा रिषो मेमं यज्ञं यजमानं च रीरिषः। सुवर्गे लोके यजमानं हि धेहि शं न एधि द्विपदे शं चतुष्पद इति । १ ।

निषण्णे त्वयमप्यपरो विशेष इत्यर्थः ॥

उच्छागेति छागम्। उन्मेषेति मेषम्। उद्वश इति वशाम् । २ ।

उस्रशब्दस्य गोजातिवचनत्वात् गच्छेत्यविकृतो मन्त्रः । छागमेषयोस्तूच्छाग तिष्ठ उन्मेष तिष्ठेति विक्रियते । वशायां तु जात्यनादरेणोदश इत्येव भवति । तत्रोच्छागेत्यस्य प्रकृत्यर्थत्वाद्विकृतिषु पश्वनेकत्वे स्त्रीपशौ च यथार्थमूहः । नोस्रादीनामूहो विकृत्यर्थमेवोपदेशात् ॥

यस्माद्भीषावेपिष्ठा इति द्वितीयां वेपमाने । ३ ।

पूर्ववद्व्याख्या ॥

यस्माद्भीषा पलायिष्ठा इति द्वितीयां पलायिते । ४ ।

अपक्रमणं पलायनम् ॥

अनागच्छत्यन्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत । ५ ।

तस्मिन्नागमयितुमशक्ये सति संस्थानवर्णवयोभिस्तत्सदृशं तज्जातीयमन्यमुपाकुर्यात् । तज्जातीयालाभे प्रतिनिधिरुक्तः सत्याषाढभारद्वाजाभ्याम् . अजा अवयो गाव इत्यन्यो ऽन्यप्रतिनिधयो भवन्तीति ॥

यस्माद्भीषा समशास्था इति द्वितीयामकामसंज्ञपने । ६ ।

स्वयं व्याध्यादिना मरणं अकामसंज्ञपनम् ॥

य इदमकस्तस्मै नमस्तस्मै स्वाहेति सर्वत्र तृतीयाम् । ७ ।

सर्वत्रेति न केवलमत्रैव किं तु यत्रयत्र यस्माद्भीषेति द्वितीयाहुतिरुक्ता वक्ष्यते वा तत्र सर्वत्रेयं हृतीयेत्यर्थः ॥

न वा उवेतन्म्रियसे । आशानां त्वा विश्वा आशाः । आपो हि ष्ठा मयोभुव इत्येताभिस्तिसृभिरपो ऽभ्यवहृत्यान्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत । ८ ।

मृतं पशुमपो ऽभ्यवहृत्य पूर्ववदन्येन यजेत ॥

यस्माद्भीषा निमेहसीति द्वितीयां मूत्रं कुर्वति । यस्माद्भीषा शकृत्करोपीति द्वितीयां शकृत्कुर्वति । ९ ।

हृतीयाहुतिरप्यनयोः पूर्ववत् ॥

ऊर्ध्व ऊ षु ण ऊतय इत्युच्छ्रयन्तमभिमन्त्रयते । १० ।

द्वाभ्यां पादाभ्यामूर्ध्वमवस्थापनं उच्छ्रयणम् ॥

यद्युपपाय्यमानो न पिबेन्न वा उवेतन्म्रियस इत्युपपाययेत् । ११ ।

अपां पेरुरसीति पाय्यमानस्य स्वयमपाने बलादनेन पाययेत् ॥

गर्भं स्रवन्तीमगदामकमाग्निर्होता पृथिव्यन्तरिक्षं द्यौर्यतश्च्युतदग्नावेव तन्न तत्प्राप्नोति निर्ऋतिं पराचैरिति पशूखां स्रवन्तीमभिमन्त्रयते । १२ ।

भिन्नां स्रवन्तीमभिमन्त्र्यान्यामुखां संस्कृत्य निवेशयेत् ॥

पशुमाग्नीतमुदञ्चं नयन्तीत्युक्तम् । १३ ।

;मित्यारभ्य ये पशुं विमथ्नीरन्नित्यन्तं प्रागयदुक्तं ब्राह्मणे
संधातव्यमित्यर्थः । तत्र हि दैवं पशुं प्रकृत्योक्तम्. यर्हि
तमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणं हरेदिति । यर्हि
ते पशुमाग्नीतमिष्टप्रयाजं संज्ञपनार्थमुदञ्चं नयन्ति तर्हि
ो तस्य तस्मात्प्राजहितात्पशुश्रपणं शामित्राग्निं हरेदित्यर्थः ।
ामानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणं हरन्ती-
ाद्धरणं निन्दित्वोक्तम्. स एव स्यान्निर्मन्थ्यं वा कुर्यादि-
त्र प्राजहित एव योनिः स्यान्निर्मन्थ्यं वेत्यर्थः । पूर्वत्र चात्र च
ं प्राजहितपरामर्श इत्येतदपि प्राञ्चमग्निं प्रहरन्तीत्यादि-
ालोचनयैव प्रत्येतव्यम् । बौधायनश्चाह. स एव स्यादिति
ईपत्यमभ्युपदिशतीति ॥ समानो ऽयं विधिः सवनीये ऽपि
ात् । निरूढपशौ त्वाहत्यवचनादाहवनीयादेवाहर्तव्यः ॥
ब्राह्मणे. यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमव-
ातः प्रायश्चित्तिरिति । यदि पशुसंबन्ध्येकमनेकं वावदानं
ादिनावदानायोग्यं स्यात्तस्य स्थाने ध्रौवादाज्यादवद्येदित्यर्थः ।
ारद्वाजेन. यद्यद्धविर्नश्येदाज्यं प्रतिनिधिरिति ॥ कृत्स्ननाशे
लम्भः । केचित्तु वपाहृदययोर्नाशे ऽपि पुनरालम्भमिच्छन्ति.
श्चात्मत्वसंस्तवात्. यथा आत्मा वपेति. पशोर्वा आलम्भस्य
माभिसमेतीति च । तदयुक्तं विशेषानुपदेशात्. अर्थवाद-
ात्मप्रवादस्य । तदुक्तं कात्यायनेन. अवदानहानौ नाद्रि-
दयनाशे त्वन्यमालभेतेत्येके हृदयं पशुरिति श्रुतेः. सर्वेषां

वाज्यस्य यजेत्. अर्थवादमात्रं पशुवचनमिति॥ यदि मतं अनवदानत्वाद्वपाया न तत्रायं विधिरिति तदपोत्तरसूत्रे निरसिष्यते। वपादीनां मात्राहीनत्वे ऽप्येकदेशे विद्यमाने तेनैव यजेत न प्रतिनिधिना. द्रव्यप्राधान्यात्. यथोक्तं मात्रापचारे तच्छेषेण समाप्नुयादिति॥

ये पशुं विमथ्नीरन्यस्तान्कामयेतार्तिमार्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयात्। आहवनीये शामित्रे वा निरूढपशुबन्धे। १४।

यदि दस्यवः पशुं विमथ्नीरन् जीवन्तं मांसावस्थं वा बलात्कारेण हरेयुः तांश्च यदि यजमानः कामयेत आर्तिं प्राप्नुयुरिति तदानया जुहुयात्। तदलाभे तु पलायितविधिरेव भवति॥

यदि वपा हविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वग्निया यूयं दधाथेन्द्रियं पय उत्यादाय यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश। स नः पाह्यरिष्ट्यै स्वाहेत्याहुतिं जुहुयात्। १५।

अङ्गावदानसमुदायो हविः. अथ हविषा प्रचरन्ति छागस्य हविषो ऽनुब्रूहीत्यादौ तथादर्शनात्। हविषो ऽवदानं हविरवदानम्। तत्र हविर्विशेषणं पुरोडाशावदाननिवृत्त्यर्थम्। अवदानग्रहणं लेकैकावदानस्कन्दने ऽपि प्रवृत्त्यर्थम्। अहविरवदानत्वाद्वपायाः पृथग्ग्रहणम्. न त्वनवदानत्वात्. अन्यथा कृत्स्नां वपामवदायेत्यादिसूत्रविरोधात्। तेन यदि पशोरवदानं नश्येदिति विधिर्वपायामपि भवत्येव। यस्य

वा देवतायै गृहीतमकृतं स्कन्देदिति पुष्कलदानं चाच समुच्चेतव्यं अविरोधात्॥ आदायेति यथास्थानं प्रतिपाद्येत्यर्थः॥

यद्यष्टापदीत्यनुबुध्येत धाता रातिः सूर्यो देवो दिवि-षद्भ्य इत्याहुती हुत्वाष्टाप्रूड्ढिरण्यमुष्णीषेणावेष्ट्य। १६।

इत्यष्टादशी कण्डिका।

कोशेऽवधाय द्वितीयेऽवधाय तृतीयेऽवदधाति। १।

विकृतिषु स्त्रीपशुरालभ्या। यद्यष्टापदीत्यनुबुध्येत. गर्भिणीत्यर्थः। गर्भपादैः सहास्या अष्टौ पादा भवन्तीति कृत्वा गर्भप्रदर्शनार्थत्वाच्च गर्भद्विलादिना द्वादशपद्यादावपि समानोऽयं विधिः। ततः प्राक् संज्ञपनादनुबोधे तामुत्सृज्यान्यामुपाकुर्यात्। परतस्त्वनुबोधे धाता रातिः सूर्यो देव इत्याहुती हुत्वाष्टाप्रूडष्टबिन्दुकं हिरण्यमुष्णीषेण. दीर्घवाससावेष्ट्य तत्कस्मिंश्चित्सापिधाने कोशेऽवधाय तमपि कोश-मन्यस्मिन्कोशे तथा कृत्वा तमपि तृतीये कोशेऽवदधाति॥

विबिलानिव कोशान्कृत्वार्थैनामध्वर्युरभिमन्त्रयते यस्यास्ते हरितो गर्भ इति। २।

त्रीनपि तान्कोशान्विगतबिलानिव दृढापिहितान्कृत्वा दक्षिणार्थं निधाय ततो गर्भिणीमभिमन्त्रयते यस्यास्त इति॥

आ वर्तन वर्तयेति प्रदक्षिणं गर्भमावृत्य वि ते भिनद्मि तकरीमित्युखमाच्छ्यति। ३।

विशसनकाले पशोरूपस्थनिर्गमानुगुणमावृत्य तदावरकमुखं नाम मेदः छ्यति छिनत्ति ॥

बहिस्ते अस्तु बालित्यन्तरा सक्थिनी गर्भं निरस्य शूले प्रणीक्ष्य शामित्रे निहत्य श्रपयति।४।

तत्र ऊर्ध्वमर्धेन गर्भं निःसार्य शूले प्रणीक्ष्य शूलाग्रप्रोतं कृत्वा निहत्य श्रपयति. गर्भश्रपणानुगुणमग्निसमीपे शूलं निखाय शामित्रे श्रपयतीत्यर्थः ॥

उरुद्रप्सो विश्वरूप इन्दुरिति गर्भरसाय पात्रमुपोहति।५।

शूलाग्रे श्रप्यमाणाद्गर्भात्स्रवतो रसस्य धारणार्थमधस्तात्पात्रमुपयच्छति ॥

पशुपुरोडाशं निरुप्य गर्भपुरोडाशं निर्वपति भक्तो-द्यावापृथिव्यमेककपालम।६।

पशुपुरोडाशनिर्वपणकाल एव चेत् ज्ञाता गर्भिणीति तदा तन्निरुप्यानन्तरं गर्भपुरोडाशमनुनिर्वपति। पश्चात्तु ज्ञाने यदैव जानीयात् तदैव निर्वपेत्। स च भक्तोद्यावापृथिवीभ्यां निरुप्यते. न गर्भदेवतायै। न चास्यैककपालधर्माः. शेषस्योत्तरत्र प्रतिपत्तिविधानात्. इतरथा सर्वहुतत्वेन शेषासंभवात ॥

पशुपुरोडाशेन प्रचर्य गर्भपुरोडाशेन प्रचरति भक्तो-द्यावापृथिव्येनेति।७।

भारद्वाजादिभिर्गर्भपुरोडाशस्य पशुपुरोडाशेन सह प्रचारवचनात् तन्निरासार्थं पुनःक्रमवचनम्। पशुपुरोडाशेन प्रचर्य ततो भक्तौद्यावापृथिव्येन गर्भपुरोडाशेन प्रचरति. न तु तेन समवदायेति भावः॥

**पशोर्दैवतान्यवद्यन्गर्भस्य पुरस्तान्नाभ्या अन्यदवदाय दैवतेष्ववदधाति। उपरिष्टादन्यत्सौविष्टकृतेषु।८।**

पशोर्दैवतेष्ववत्तेषु गर्भस्य नाभ्या ऊर्ध्वमेकमवदाय दैवतेषु क्षिपति। तदा अधस्तान्नाभ्या अवदाय सौविष्टकृतेष्वित्यर्थः. पुरस्ताद्वै नाभ्यै प्राण उपरिष्टादपान इति लिङ्गात्॥

**त्रैधं गर्भरसं व्यानयति दैवतसौविष्टकृतैडेषु च।९।**

यूष्णः समुच्चयार्थश्चकारो भिन्नक्रमो योजनीयः. समासोपात्तत्वात्. दैवतादीनां समुच्चयान्तराभावाच्च। यूष्णोपसिच्य त्रिषु गर्भरसं व्यानयतीत्यर्थः॥

**एकपदी द्विपदीति पुरस्तात्स्विष्टकृतो जुहोति।१०।**

पुरस्ताद्वनस्पतेरिति वचनात् तस्य पुरस्तादेवेयमाहुतिः॥

**अष्टाप्रूड्ढिरण्यं दक्षिणा।११।**

अत्राध्वर्यवे अष्टाप्रूड्ढिरण्यं सकोशं ददाति॥

**गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजति प्र तत्ते अद्य शिपिविष्ट नामेति। उत्तरया वा।१२।**

नीम. ७

यजतिरत्र जुहोत्यर्थः. विष्णवे शिपिविष्टाय जुहोतीति लिङ्गात्. अभिचरन्दशहोतारं जुहुयादिति श्रुतस्य जुहोतेर्दशहोत्राभिचरन्यजेतेति यजतिना निर्देशदर्शनाच्च। तथा किमित्ते विष्णविति जुहोतीत्येव कल्पान्तरकाराः। अतो दर्विहोमधर्मेण जुहोति॥

मरुतो यस्य हि क्षय इति गर्भं गर्भपुरोडाशं चोत्तरेण गार्हपत्यस्य शामित्रस्य वा शीते भस्मन्युपोप्य मही द्यौः पृथिवी च न इति शीतेन भस्मनाभिसमूह्यैतं युवानमिति पञ्चभिरुपतिष्ठते। १३।

अभिसमूहनं प्रच्छादनम्। एतं युवानमित्युपस्थाय ततः स्विष्टकृदादि कर्म प्रतिपद्यते॥

तदिदं *गर्भिणिप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः। यत्रानाम्नातं तत्र क्रियेतेत्यालेखनः। १४।

गर्भिणिप्रायश्चित्तमिति ह्रस्वश्छान्दसः. यथा गर्भिण्यो भवन्तीति। यत्रादित्यां मल्हां गर्भिणीमालभत इत्यादौ आम्नाता गर्भिणी तत्रापि निमित्तगताविशेषात्कर्तव्यमेवैतन्नैमित्तिकमित्याश्मरथ्यमतम्। आलेखनस्तु मन्यते. वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते. रक्षांसि वा एतत्पशुं सचन्ते यदेकदेवत्य आलब्धो भूयान्भवतीति. यथा चोदितादतिरेकदोषनिमित्तत्वश्रुतेर्यत्रानाम्नाता गर्भिणी तत्रैव कर्तव्यमिति॥

* B C D E गर्भिणी°, and this reading stood also originally in A.

यद्यनपवृक्तार्थो* यूपो विरोहेत्तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं बहुरूपं सवनीयस्योपालम्भ्यं कुर्यात्।१५।

अहर्गणेषु यद्यसमाप्तकार्यो यूपो विरोहेत् तदा तस्मिन्नेव यूपे तत्कालपर्यागतस्य पशोः प्रसङ्गन्यायेन त्वाष्ट्रं पशुमुपालम्भ्यं कुर्यात्॥

त्वाष्ट्रं चरुमत्र वाजसनेयिनः समामनन्ति। १६।

गतः॥

त्वाष्ट्रीरेवात्र स्रुवाहुतीर्जुहोतीत्येके। १७।

त्वष्टा दधदिन्द्राय तन्नस्तुरीपं त्वष्टा वीरमिति त्वाष्ट्र्यः॥

इत्येकोनविंशी कण्डिका।

यदि यूपः सुषिरः स्याद्तीसारेण यजमानो म्रियेत। वैष्णव्या व्याहृतिभिः प्राजापत्यया च हुत्वा तं संवृश्च्याग्नौ प्रवृज्याथान्यं साधयेत्। १।

यूपश्चेत्सुषिरवान्स्यात् †अतिस्रवणेनोदरस्य यजमानो म्रियेत। तत्रेदं विष्णुरिति वैष्णव्या व्याहृतिभिः प्रजापते न त्वदिति प्राजापत्यया च हुत्वा तं यूपं छित्त्वाहवनीये प्रदीप्य यूपाभिमन्त्रणादिविधिनान्यं निर्दोषमाहरेत्। न यूपाहुतिरावर्तते. अप्रत्यक्षत्वात्. यूपाहुतिं हुत्वाग्निष्ठप्रथमानिति लिङ्गाच्च॥

---

* Corrected; all MSS. read यद्यनपवृत्तार्थो.

† a अतिस्रंसनेनो॰.

यदि क्रिम्णः क्रिमय एनं भक्षयेयुः । पूर्ववत्प्रायश्चित्तम् । २ ।

क्रिम्णः क्रिमिणः. यद्यन्तर्गताः क्रिमयः स्युरित्यर्थः । एनं यजमानम् ॥

यद्याव्रश्चनमास्कन्देत्यल्येनमतिचरिष्यतीति विद्यात् । व्याहृत्यादि समानमुत्तरम् । ३ ।

यूपश्छिन्नः पतन्प्रतिवल्शाव्रश्चने स्वमूल एव यदि पतेत् तदा पत्नी दुर्वृत्ता स्यात । तत्र वैष्णवीवर्जं व्याहृत्यादि सर्वमुत्तरं कर्म समानं पूर्वेण ॥

यदि दक्षिणा पतेत्प्रत्यङ्का सं वा शीर्येत शाखासु वा सज्येत यजमानो म्रियेत । वैष्णव्याः स्थाने याम्यौ । समानमुत्तरम् । ४ ।

दक्षिणामुखः पतेत्प्रत्यङ्का पतेत्संशीर्येत भज्येत वा पततः. पतित्वा शाखासु वा सज्येत वृक्षान्तरस्य तत्र वैष्णव्याः स्थाने यमो दाधारेति याम्यौ स्यात् । सर्वमन्यद्व्याहृत्यादि समानं पूर्वेण ॥

यद्यप्सु पतेदप्सु म्रियेत । वैष्णव्याः स्थाने वारुणी । समानमुत्तरम् । ५ ।

व्याख्यातः पूर्वेण । उदुत्तममिति वारुणी ॥

यदि प्रासहा हरेयुः सर्वस्वं जीयेत । वैष्णव्याः स्थान ऐन्द्री । समानमुत्तरम् । ६ ।

यदि केचिद्यूपं प्रासहा प्रमह्य हरेयुः तदा हीनधनः स्याद्यजमानः । तत्र वैष्णव्याः स्थाने ऐन्द्री स्यात् इन्द्रं वो विश्वतस्परीति । शेषं पूर्ववत् ॥

यदि मूल उपशुष्कः स्यान्न पितृभ्यो यथापुरं करिष्यतीति विद्यात् । यदि मध्ये क्षुधा मरिष्यति । यद्यग्रे न स्वर्गं लोकं गमिष्यतीति ॥ यद्यग्निष्ठा विच्छिद्येत यजमानो म्रियेत । यदि पूर्वा पत्नी । एतद्वा विपरीतम् । यदि दक्षिणा माहिषेयः पुत्रः । यद्युत्तरान्वग्ज्येष्ठः । यदि दक्षिणपूर्वा ब्रह्मा । यदि दक्षिणापरा होता । यद्युत्तरापराध्वर्युः । यद्युत्तरपूर्वाग्नीध्रः । ७ ।

यदि मूलभागे यूपः शुष्कः स्यात्तदैवं जनो यजमानं जानीयात् न यथापूर्वं श्राद्धं करिष्यति ऋद्धिविगमादिति । यदि मध्ये शुष्कः स्यात् क्षुध मारिष्यतीति विद्यात् । यद्यग्रे न स्वर्गं लोकं गमिष्यतीति विद्यात् ॥ किं च यदि तक्ष्णो ऽकौशल्यादग्निष्ठा विच्छिन्ना स्यात् यजमानो म्रियेत । यदि पूर्वाश्रिः पत्नी म्रियेत । एवमुत्तरेष्वप्यनुषङ्गो द्रष्टव्यः । माहिषेयो ज्येष्ठाया ज्येष्ठः पुत्रः । तस्यानन्तरो ऽन्वग्ज्येष्ठः ॥ यस्मादेते शुष्कत्वादिषु दोषास्तस्मात्तेष्विदं प्रायश्चित्तमाह ॥

शुष्कादिषु सर्वेषु याम्यादि समानमुत्तरम् । ८ ।

यदुक्तं वैष्णव्याः स्थाने याम्यो समानमुत्तरमिति तदेवात्र स्यादित्यर्थः ॥

यदि लोहिन्यो लेखाः प्रसव्यं यूपं परिह्वरेयुर्न साहस्रं क्रतुमाहरिष्यतीति विद्यात्। श्वेताश्चेत्प्रदक्षिणं क्षिप्रं साहस्रं क्रतुमाहरिष्यतीति। ९।

'यदि काश्चिद्रक्तवर्णा लेखाः प्रसव्यं यूपं वेष्टयन्तो दृश्येरन् तदा न यजमानः सहस्रदक्षिणेन क्रतुना यक्ष्यतीति विद्यात्। अथ श्वेताः सत्यः प्रदक्षिणं चेद्वेष्टयेयुः तदा क्षिप्रमेव तेन यक्ष्यतीति विद्यात्। ज्ञानं चात्र प्रीत्यप्रीतिफलमात्रम्. न प्रायश्चित्तार्थम्. तस्यानुपदेशात्. अन्यथा क्रत्वाहरणस्येष्टत्वेन तद्भितत्वेन च ज्ञानस्य प्रायश्चित्तार्थत्वायोगाच्च ॥'

यद्याहुतौ हुतायां कृष्णो धूमो दक्षिणां दिशमभिनिहन्याद्वातो वा प्रसव्यं धूममावेष्टयेद्यजमानो म्रियेत। सर्वप्रायश्चित्तं जुहुयाज्जुहुयात्। १०।

आहुतौ प्रकरणात्पश्वाहुतौ हुतायाम्। सामान्यनिर्देशात्सर्वस्यामाहुताविर्त्येके। यद्यग्नेः कृष्णवर्णो धूम उत्थितो दक्षिणां दिशं प्रतिगच्छेत् अथवा यं कंचिदप्याहुतिमुत्थं धूमं वातः प्रसव्यमावेष्टयेत् तद्यजमानमरणं सूचयेत्। अतस्तत्परिहारार्थं सर्वप्रायश्चित्तं जुहुयात्। सर्वप्रायश्चित्तं च प्रागेव व्याख्यातम् ॥

इति विंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां पञ्चमः पटलः।

इति नवमः प्रश्नः ॥

ओम् ॥

उक्ता नित्या हविर्यज्ञा उक्तानि चैषां प्रायश्चित्तानि । अथेदानीं सोम आरभ्यते । सो ऽपि नित्यः. त्रिभिर्ऋणवा जायत इत्यृणसंस्तवात्. तथा सोमान्तान्यस्मानन्नुक्रम्य नैयमिकं ह्येतदृणसंस्तुतमिति वसिष्ठवचनात्. सूत्रकृताप्यग्नीनाधाय कर्माण्यारभते सोमावरार्ध्यानि यानि श्रूयन्त इति गृहस्थस्याश्रमान्तरं प्रेप्सतो ऽप्यावश्यकतयोपदेशात्. तथा वसन्ते वसन्ते सोमेन यजेतेति दर्शपूर्णमासवदभ्यासविधानात्. तथा सोमपीथविच्छेदे प्रायश्चित्तवचनात्. तथा सर्वेषु ब्राह्मणेषु कल्पेषु च नित्यैः समभिव्याहाराच्च । तस्मान्नित्य एव सोमः । स च ज्योतिष्टोम इति वक्ष्यते ॥ न चासावनिष्टदर्शपूर्णमासेनाहर्तव्य इति प्रायः कल्पान्तरकाराणां मर्यादा । तत्र भारद्वाजस्तावत्. न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेतेति । तथा तस्य नानुपक्रान्तयोर्दर्शपूर्णमासयोराहार इति सत्याषाढः । कात्यायनेनाप्युक्तम्. दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति । ब्राह्मणे च. यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति अयमेव कल्पः स्तुतः । आश्वलायनस्त्वाह. दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन. ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके. प्रागपि सोमेनैक इति । सूत्रकृतो ऽप्यनियम एव क्रमस्याभिप्रेतो विशेषावचनात् ॥ विच्छिन्नसोमपीथेन त्वग्नीनाधाय दर्शपूर्णमासाभ्यामिष्ट्वा श्रात्यं च पशुमालभ्य ततः सोमाय दीक्षितव्यं. अनालम्भे तस्मिन्सोमानधिकारात् । तदालम्भस्त्वनिष्ट्वापि

दर्शपूर्णमासाभ्यां लभ्यते सत्स्वग्निषु सत्यां च सोमपीथेच्छायां तन्निरोद्धुरभावात्॥ नन्वसैा सांनाय्यप्रकृतिः कथमकृतायां प्रकृतैा करिष्यते. किमियं राजाज्ञानाकृतायां प्रकृता विकृतिः कार्येति। न तावदस्याः प्रकृत्यनुष्ठानापेक्षमनुष्ठानं विकृत्यनुपदिष्टाकाङ्क्षितप्राकृतविध्यन्तस्य वेदनमात्रापेक्षत्वात्। न च सांनाय्याग्नीषोमीयविकाराधिकरणन्यायादेव नियमः शङ्कनीयः. तस्यातद्धोचरत्वात्. तत्र हि नासोमयाजी संनयेदिति सांनाय्यस्य सोमोत्तरकालत्ववचनात्. प्रकृतिवद्विकृतिः कर्तव्येति न्यायाच्च। तद्विकाराणामपि सोमोत्तरकालभावित्वमेव व्युत्पाद्यं न तु प्रकृतिविकृत्योः पैार्वापर्यम्। न च शास्त्रीयो ऽयं नियमः. तत्र शास्त्रानुपलम्भात्। विपरीतानुष्ठैव तु शास्त्रादवसीयते. अग्न्याधेयस्येष्टिविधानादतिरात्रस्य प्रथमयज्ञत्वविधानात्. असोमयाजिनः पशुविधानाच्च। तथा दर्शपूर्णमासमासामिष्टिपशुचातुर्मास्यैरथ सोमेनेति। तस्माद्येषामेतद्रूपसंख्यानं त एवात्र प्रमाणं प्रष्टव्या इति सिद्धम्। अनारब्धदर्शपूर्णमासस्यापि सात्यपथिभ्याल्लभ्यत इति तत्रास्यारम्भणीया नियता. प्रकृत्यर्थेनाप्यकृतत्वात्. कृता हि सा तदर्थेनेति विकृतिषु तदक्रियायां हेतुवचनाच्च॥ सर्वथापि तावत्सिद्धं विच्छिन्नसोमपीथस्यानारब्धसात्यपथीनं सोमदोचेति। को ऽयं विच्छिन्नसोमपीथो नाम। नन्वुक्तो ऽयं ब्राह्मणे. ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ तृतीयात्पुरुषात्सोमं न पिबेत्. विच्छिन्नो वा एतस्य सामपीथ इति। तत्र च त्रयः प्राश्नन्तयः प्रत्यश्च इत्यादौ प्रागुक्तो दौत्वावेदननामसु त्रह्मण्यादौ नामभिः कीर्त्यमाना च पित्रादीनां त्रिपुरुषी। तस्यां चरमः प्रपितामहस्तायो

ऽभिप्रेतः. स त्वात्मनस्तृतीयः पितामहः। कुतः। सोमपानोच्छ-
न्नस्यात्मनस्तद्विच्छेदाभावात्. एतत्ते तत ये च त्वामन्वेतत्ते पितामह
प्रपितामह ये च त्वामन्विति त्रिष्वपु स्वक्तिषु निदधाति तस्माद्रा
तृतीयात्पुरुषान्नाम न गृह्णन्तीत्यादौ व्यक्तार्थलाभः। तथा विध्यर्थत्व-
मप्यत एव निदर्शनादवगन्तव्यम्। तदयमर्थो भवति. यस्य पित्रा-
दयस्त्रयः पुरुषाः सोमं न पीतवन्तः स सोमपीथार्थी पशुमालभे-
तेति। कात्यायनमतात्तु द्विपुरुषविच्छित्तावपीष्यते यथाह. वसन्ते
ऽग्निष्टोमः. ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासोमपीथिन इति ॥
कः पुनरुत्सृष्टः। छागः पुनरुत्सृष्ट इति भारद्वाजः। बौधायनस्त्वाह.
पुनरुत्सृष्टो ऽनड्वानित्यवगीर्णगव एष उक्तो भवतीति। लिङ्गं चात्र
भवति. पुनरुत्सृष्ट इव ह्येतस्य सोमपीथ इति ॥ दुर्ब्राह्मणस्य त्वैन्द्रा-
ग्नेनेष्ट्वाश्विनो ऽप्यालभ्यः. यथोक्तं ब्राह्मणे. आश्विनं धूम्रललाममा-
लभेत यो दुर्ब्राह्मणः सोमं पिपासेदिति। को ऽसौ दुर्ब्राह्मणः।
तमाह बौधायनः. यस्य वेदश्च वेदी च विच्छिद्येते त्रिपुरुषं स वै
दुर्ब्राह्मणो नाम यश्च पौनर्भवो भवेदिति। तत्र वेदश्च वेदी चेति
चकाराभ्यां व्यक्तम्. समुच्चयावगमादुभयविच्छेद एव भवत्याश्विनो
नान्यतरस्य विच्छेदे। भारद्वाजस्त्वाह. विलुप्तसावित्रीको दुर्ब्राह्मण
इति। तस्मिंस्तु पक्षे त्रिपुरुषमुभयविच्छेदे ऽपि भवत्येवाश्विनः.
ऐन्द्राग्नस्तु नेष्यते निमित्ताभावात् ॥

**सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वानूचानानूर्ध्ववाचो ऽनङ्गहीनान्। १।**

सोम ओषधिविशेषः. तत्साधनत्वात्कर्मणो ऽपि नाम। तेन यक्ष्यमाण आगूर्याप उपस्पृश्य चर्त्विजो वृणीते। आगूरणं तु याजमान एव व्याख्यातम्। ब्राह्मणानामार्त्विज्यमित्यनेनैव सिद्धे पुनर्ब्राह्मणवचनमादरार्थम्। अथवा तस्माद्वाजपेययाज्यार्त्विजीन इति श्रुतेः क्षत्रियस्यापि वाजपेययाजिनः प्राप्तिरत्र शङ्किता निरस्यते। आर्षेयो ब्रह्मौदने व्याख्यातः। बालवृद्धयोः प्रायः क्रियासु पाटवं न स्यादिति युवस्थविरग्रहणम्॥ अथ को ऽनूचानः। मार्गादनपगतो ऽनूचान इति भारद्वाजः। तस्य च नाननूचानमृत्विजं वृणीत इत्यनेन सिद्धस्याप्यादरार्थं पुनर्वचनम्॥ ऊर्ध्ववाचः पटुस्थानकरणाः। अनङ्गहीनाः अन्यूनाङ्गाः। अन्यूनानतिरिक्ताङ्गा इत्याश्वलायनद्राह्यायणौ॥

तेभ्यः सोमं प्राह। २।

सोमप्रवाक इति शेषः। कुत एतत्। माद्यःक्रोश्वश्वरथाः सोमप्रवाका विधावन्तीति लिङ्गात्. कण्ठोक्तत्वाच्च कल्पान्तरेषु। यथाह भारद्वाजः. सोमप्रवाको यत्रास्मै सोमं प्राहेति। तथा सोमप्रवाकं परिपृच्छेदित्याश्वलायनः। एवमन्यत्रापि द्रष्टव्यम्॥ तदयमर्थो भवति. यजमानप्रहितः सोमप्रवाकस्तंं यथोक्तगुणमुपेत्य सोमं प्राह. सोमेनासौ यक्ष्यते स याजयितव्यस्त्वयेति॥

तं पृच्छति क ऋत्विजः के याजयन्ति कच्चिन्नाहीनः कच्चिन्न व्यस्तमार्त्विज्यं कच्चित्कल्याण्यो दक्षिणा इति छन्दोगब्राह्मणं भवति। ३।

तं सोमप्रवाकं पृच्छति सस ऋत्विक्. के पूर्वमाधानादिषु कर्मस्वृत्विजः के चास्य याजयन्तीत्यादि । सो ऽपि यथायथं प्रतिब्रूयात् ॥ तत्र पूर्वर्त्विक्परीक्षा तावत्पतित याजितत्वादियजमानदोषशङ्कानिरासार्था वर्तमानर्त्विक्परीक्षा च संभक्षणानर्हत्वशङ्कानिरासार्था । अहीनादि-परीक्षा तु तत्र याजननिषेधादेव. यथोक्तमाश्वलायनेन. न्यस्तमा-र्त्विज्यमकार्यमहीनस्य नीचदक्षिणस्येति ॥ छन्दोगब्राह्मणवचनमाद-रार्थम्. विकल्पार्थमित्येके ॥

अथ जपति महन्मे ऽवोचो भर्गो मे ऽवोचो यशो मे ऽवोचः स्तोमं मे ऽवोचः कॢप्तिं मे ऽवोचो भुक्तिं मे ऽवोचः सर्वं मे ऽवोचस्तन्मावतु तन्माविशतु तेन भुक्षिषीयेति । ४ ।

अथ यदि याजयिष्यन्भवति ततो जपतीत्यर्थः । तथा च द्राह्यायणः. सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत. महन्मे ऽवोच इति करिष्यन्प्रतिमन्त्रयेतेति । भारद्वाजमतात्त्वयाजयिष्यतो ऽपि नित्यो जपः ॥

पद्वा नामासि स्रुतिः सोमसरणी सोमं गमेयमिति पन्थानमातिष्ठते । ५ ।

यजमानगृहगामिनं पन्थानं प्रतिपद्यते ॥

देवो देवमेतु सोमः सोममेत्वृतस्य पथा विहाय दौष्कृत्यमित्यभिप्रव्रजति । ६ ।

गतः ॥

पितरो भूरिति दक्षिणाहस्तः पितॄनुपतिष्ठते । ७ ।

प्राचीनावीत्युपतिष्ठते ॥

तान्वृणीते चतुरः सर्वान्वैकैकशः । ८ ।

तानागतान्सर्वानपि वक्ष्यमाणैर्मन्त्रैर्यजमान एकैकं वृणीते. महर्त्विज एव वा चतुरः । अथ तानेव सर्वाननुक्रामति ॥

अध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् । ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणः । होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन् । उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् । ९ ।

अनुक्रमणादियत्तावधृतेति । चमसाध्वर्यूणामृत्विग्धर्मा महन्म इत्यादयो न भवन्ति ॥ तथाध्वर्यूंःहोतॄनिति वर्गशो ऽभिधानात् सर्वे ऽध्वर्यवस्तमुद्गातार इत्यादिषु वर्गा एव सिद्धाः । वर्गाणां क्रमविशेषवचनात् यदप्रतिरथं द्वितीयो होतेत्यादयश्च सिद्धाः । वरणक्रमस्तु वक्ष्यमाण एव. न त्वयम् । न चाध्वर्युर्वा ऋत्विजां प्रथमो युज्यत इत्यनेनापि क्रमेण वरणमिति युक्तम् . सूत्रविरोधात् मन्त्रविरोधाच्च। सूत्रकृतस्तु क्रमान्तरविरोधे मन्त्रक्रम एव बलीयानित्यभिप्रायः ॥

. सदस्यं सप्तदशं कौषीतकिनः समामनन्ति । १० ।

सप्रदश्रवचनात्सो ऽप्यृत्विग्धर्मांल्लभते ॥

स कर्मणामुपद्रष्टा भवति । ११ ।

उपद्रष्टा साध्वसाधुनोरनुसंधाता ॥

यदि चतुर आद्यान् । १२ ।

यदि चतुरो वृणीते तदा प्रतिवर्गमाद्यान्महर्त्विजो वृणीते। इतरे स्वृता एव कुर्युः॥

अथ वरणाः । १३ ।

मन्त्रा इति शेषः ॥

अग्निर्मे होतादित्यो मे ऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताकाशो मे सदस्य आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यव इत्युपांशु देवतादेशनम्। असौ मानुष इत्युच्चैः । १४ ।

अग्निर्म इत्यादिनोपांशु देवता आदिश्यासौ मानुष इत्युच्चैर्निगदेदिति शेषः। यद्यप्येकैकश इत्युक्तं तथापि होत्रकाणां समासत एव वरणं, यथा विष्णुरुद्रकृष्णा मानुषा इति। तथा असौ मानुषा इति होत्रकानिति सत्याषाढः॥ अनन्तरमाम्नातात् प्रतिप्रस्थात्रादीनमन्त्रकं वृणीते। अथवा तानपि मन्त्रैरेव, अध्वर्य्वादिसमाख्यानात्। क्रमस्त्वेषां सत्त्रदीक्षान्यायात् अध्वर्य्वादिक्रमेण व्यवस्थापनीयः॥ ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनवचनात्, आचार्यार्त्विजे

श्वशुरायेति स्वयं चाभिधानात् ऋत्विजां मधुपर्कः कार्यः। भारद्वाजस्य ब्रह्मचारिण ऋत्विजः प्रचरन्ति तेषां संस्थिते कर्मण्यशनप्रसिद्धिरित्याह। तथा न स्त्रियमुपेयुरा क्रतोरपवर्गादित्याश्वलायनः॥

इति प्रथमा कण्डिका।

स्वर्गकामो ज्योतिष्टोमेन यजेत। एककामः सर्वकामो वा। युगपत्कामयेताहारपृथक्त्वे वा। १।

त्रिवृदादय एकविंशान्ताः स्तोमा यस्य सोमस्य स ज्योतिष्टोमः। तस्य च नित्यत्वादफलार्थिनापि कर्तव्यस्यैव सतो दर्शपूर्णमासादिवत्फलसंबन्ध इति द्रष्टव्यम्। व्याख्यातं चैतद्दर्शपूर्णमासयोरेककाम इत्यादिनैव॥

वसन्ते ज्योतिष्टोमेन यजेत। २।

कालविधिः॥

अग्निष्टोमः प्रथमयज्ञः। ३।

यज्ञायज्ञियस्य स्तोत्रे अग्निस्तुत्या यस्य संस्था सोऽग्निष्टोमः प्रथममाहर्तव्यः। न तूकथ्यादयस्तद्गुणविकाराः न चान्ये ऽहीनैकाहा इत्यर्थः। तथाग्निष्टोमं प्रस्तुत्य ब्राह्मणं तस्मादाङ्ज्येष्ठयज्ञ इत्यादि स ह्येतेनाग्रे ऽयजतेत्यन्तम्। तथा एष एव प्रथमो यज्ञानाम्. य एतेनानिष्ट्वाथान्येन यजते कर्तपत्यमेव तज्जीयते वा प्र वा मीयत इति छन्दोगाः॥

अतिरात्रमेके पूर्वं समामनन्ति । ४ ।

गतः ॥

वसन्तेवसन्ते ज्योतिष्टोमेन यजेत । तस्य तिस्रो दक्षिणा इति छन्दोगब्राह्मणं भवति । ५ ।

पुनर्ज्योतिष्टोमग्रहणाद्द्वितीयादिप्रयोगेषूक्थ्यादिसंस्था अपि लभ्यन्ते । तस्य प्रतिवसन्तमाहार्यतयाभिमतस्य प्रथमाहारप्रभृति तिस्रो दक्षिणाः । द्वितीयाहारप्रभृतीत्यन्ये. छन्दोगब्राह्मणमित्यनेनाभ्यासस्यानित्यत्वं दर्शितं न चेत् पूर्वतमसूत्रानर्थक्यप्रसङ्गात्. तस्य तिस्र इति व्यतिरेकवचनायोगाच्च । लिङ्गं च. अपुनर्भव्यो ऽस्य सोमपीथ इति ॥

रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत । ६ ।

रथंतरं होतुः पृष्ठं यस्य स रथंतरसामा । तेन सोमेनेत्यर्थः ॥

न रथंतरसामानमहुत्वा बृहत्सामानमाहरेदित्येके । ७ ।

गतः ॥

यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां वैव पौर्णमास्यां वा यजेत । ८ ।

यदहः क्षीणः पूर्णो वा स्याच्चन्द्रमाः तदहरमावास्यापौर्णमासीशब्दा-

भ्यामुच्यते. तथा व्युत्पत्तेः। स कालः सर्वेज्यानाम्। इष्टीनां तु कालस्य प्रकृतिसिद्धत्वात् सद्यस्कालत्वार्थं वचनम्। तासु साङ्गं प्रधानमिति न्यायेन संधिमत्येवाहनि साङ्गप्रधानाः संतिष्ठन्ते। तथा काम्येष्टीः प्रकृत्य सत्याषाढः. सद्यस्कालाः सांनाय्यवत्यस्तु द्व्यहकाला इति। पशुस्तु द्व्यहकालो ऽपि. यद्यसद्यस्काल इति लिङ्गात्। बौधायनश्च. इष्टिपशुबन्धाः सोपवसथाः सद्योयज्ञा वेति। प्रकृत्यविरोधश्चाश्वयणे दर्शितः॥

देव वरुण देवयजनं मे देहीति यजमानो राजानं देवयजनं याचेत्। ९।

विद्यमाने ऽपि नित्या याञ्चा. तद्वतो राज्ञो ऽपि याञ्चावचनात्॥

स यदि ददाति देवयजनवान्भूया इत्येनमाह। यदि न ददाति यदहं देवयजनं वेद तस्मिंस्त्वा देवयजन आ क्षिणोमीति। १०।

उत्तरवाक्ये ऽप्याहेत्यनुषङ्गः॥

अथैनमनुव्याहरन्ति। मन उपावधीर्मनस्त्वा हास्यतीति ब्रह्मा। वाचमुपावधीर्वाक्त्वा हास्यतीति होता। प्राणमुपावधीः प्राणस्त्वा हास्यतीत्यध्वर्युः। चक्षुरुपावधीश्चक्षुस्त्वा हास्यतीत्युद्गाता। आत्मानमुपावधीरात्मा त्वा हास्यतीति सदस्यः। प्रजातिमुपावधीः प्रजा त्वा

हास्यतीति यजमानः। अङ्गान्युपावधीरङ्गानि त्वा हास्यन्तीति होत्रकाः। भूतान्युपावधीर्भूतानि त्वा हास्यन्तीति सर्व ऋत्विजः। ११।

एनं अदातारम्। अनुव्याहारः शापः। सर्वे उक्ता अनुक्ताश्च। तमेव शप्त्वा ततो ऽन्यं याचते॥

इति द्वितीया कण्डिका।

राजा देवयजनं याचति। अग्निर्होता स मे होता होतर्देवयजनं मे देहीति होतारम्। आदित्यो ऽध्वर्युः स मे ऽध्वर्युरध्वर्यो देवयजनं मे देहीत्यध्वर्युम्। चन्द्रमा ब्रह्मा स मे ब्रह्मा ब्रह्मन्देवयजनं मे देहीति ब्रह्माणम्। पर्जन्य उद्गाता स म उद्गातोद्गातर्देवयजनं मे देहीत्युद्गातारम्। आकाशः सदस्यः स मे सदस्यः सदस्य देवयजनं मे देहीति सदस्यम्। आपो होत्राशंसिनस्ते मे होत्राशंसिनो होत्राशंसिनो देवयजनं मे दत्तेति होत्रकान्। रश्मयश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यून्। १।

राज्ञो होत्रादीनामनुज्ञापनमेव याचनम्॥

अपि वा न देवयजनं याचेत्। देवता एवोपतिष्ठेत

मक्षेदं पश्य विधर्तरिदं पश्य नाकेदं पश्य । रमतिः पनिष्ठर्तं वर्षिष्ठमम्रता यान्याहुः सूर्यो वरिष्ठो अक्ष-भिर्विभात्यनु द्यावापृथिवी देवपुत्रे इति । २ ।

अयं कल्पस्त्रयाणामपि ॥

एदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यव-स्यति । ३ ।

अध्यवस्यति सहाग्निभिर्वासार्थं अनुप्रयायावस्येदित्यर्थः. अवस्यतेस्त-थादर्शनात्. एदमगन्म देवयजनमिति मन्त्रवर्णाच्च । दीक्षितस्य प्रयाणमध्यवमानं चापरिष्टाद्वक्ष्यति । न चात्र वास्तोष्पतीयावसित-होमौ. कर्मार्थप्रयाणत्वात् । अत्रापि भवत इति केचित् ॥

प्राग्वंशस्य मध्यमं स्थूणाराजमारभ्य जपतीति वाज-सनेयकम् । ४ ।

समारोप्याग्नीन्देवयजनं प्रपद्य प्राग्वंशस्य पृष्ठधारकं प्रधानस्तम्भमाल-म्भमानो जपतीत्यर्थः । तथाह कात्यायनः. समारोप्याग्नी शाला-स्तम्भं पूर्वार्ध्यं गृहीत्वारणिपाणिराहेदमगन्मेति । प्राग्वंशस्य करिष्यमा-णत्वादक्ष्यमाण एवात्र वेति पक्षे ऽयं मन्त्रः । केचिदत एववचनात् प्रागेव करणमाहुः ॥

ततः संभारयजूंषि जुहोति । ५ ।

विहृत्याहवनीयं संभारयजूंष्याह ॥

अग्निर्यजुर्भिः सविता स्तोमैरित्येषोऽनुवाक आम्नातः। ६।

अस्मिन्यानि यजूंषि तानीत्यर्थः॥

अथ राजानमाहृत्य पयसौदनेन परिवेविषन्त्या क्रयात्। ७।

अस्मिन्काले आ क्रयात् अद्यप्रभृत्यहरहः परिवेविषन्ति भोजयन्ति पयसोपसेकेन॥

स्वे दक्षे दक्षपितेह सीद देवानां सुम्नो महते रणाय। स्वासस्थस्तनुवा संविशस्व पितेवैधि सूनव आ। सुशेवः। शिवो मा शिवमाविश सत्यं म आत्मा श्रद्धा मेऽक्षितिस्तपो मे प्रतिष्ठा। सवितृप्रसूता मा दिशो दीक्षयन्तु सत्यमस्मीति पुरस्ताद्दीक्षणीयाया आहवनीयं यजमान उपतिष्ठते। सप्तहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वा। ८।

इति तृतीया कण्डिका।

दीक्षणीयायास्तन्त्रं प्रक्रमयति। १।

न दीक्षणीयाङ्गं सप्तहोता किं तूपस्थानं सप्तहोता चोभयमपि दीक्षाङ्गम्। अतो दीक्षणीयोत्कर्षे उपस्थानमुत्कृष्यते. पुरस्तादिति

वचनात् । सप्तहोता च ॥ सप्तहोतुश्च पृथगग्नित्वं दर्शितमेव । ततश्च सप्तहोत्रर्थमग्निं प्रणीय स्वे दक्षे इत्युपस्थाय सप्तहोतारं हुत्वा सोमार्थं प्रणीय दीक्षणीया ॥ न च महते रणायेति लिङ्गात् सोमार्थस्यैवोपस्थानम्. सप्तहोत्रर्थस्यापि महारणार्थत्वात् । नह्याहुते तस्मिन्महारणः संवर्तेत । अमहारणार्थत्वे ऽपि सूत्रकारोक्तक्रमबाधेन लिङ्गादरो न युक्तः । लिङ्गादरे वा सप्तहोतापि सोमार्थ एवाग्नौ स्यात् । न सौत्रक्रमभङ्ग इत्यास्तां तावत् । अथवा परतः सप्तहोतुरुपस्थाने ऽपि न सौत्रक्रमबाधः. पुरस्ताद्दीक्षणीयाया इति वचनात्. अव्यवहितपूर्वभावस्यैव च स्फूर्तेः पुरस्ताच्छब्दार्थत्वाच्च. यथा पुरस्तादनूयाजानां पुरस्तात्स्विष्टकृत इत्यादौ दृष्टं चाव्यवधानार्थत्वम् । दीक्षणीयोत्कर्षपक्षे सप्तहोतारं हुत्वेति तु पूर्वकालतामात्रमेव क्त्वाप्रत्ययेन नाव्यवधानमित्यविरोधः । सर्वथा न लिङ्गात्सौत्रक्रमबाध इति सिद्धम् ॥

आग्नावैष्णवमेकादशकपालं निर्वपति । आग्नावैष्णवं वा घृते चरुम् । २ ।

गतः ॥

पुरोडाशो ब्रह्मवर्चसकामस्य । घृते चरुः प्रजाकामस्य पशुकामस्य वा । ३ ।

नित्ययोरेव कामो ऽपि ॥

'आदित्यं घृते चरुं द्वितीयं प्रजाकामपशुकामस्यैके समामनन्ति । ४ ।

प्रजापत्योरेकैकस्य फलत्वमनन्तरोक्तयोरेव कामयोर्देवतान्तरविकल्पात् कामपदाभ्यासाच्च ॥

पञ्चदश सप्तदश वा सामिधेन्यः । ५ ।

गतः ॥

प्राग्वंशमेके पूर्वं समामनन्ति । दीक्षणीयामेके । ६ ।

दीक्षणीयायाः पश्चात्प्राग्वंशं वक्ष्यति । तस्यायं विकल्पः ॥

पत्नीसंयाजान्ता दीक्षणीया संतिष्ठते । ७ ।

आज्येडान्ता । संपत्नीयो ऽपि पुरस्ताद्देवपत्नीनाम् । इडासूक्तवाकयोर्याजमाने विशेषः प्रकृतावेव दर्शितः ॥

धारयति ध्रौवमाज्यम् । ८ ।

गतः ॥

यत्प्रागग्नीषोमीयात्तेनोपांशु चरति । ९ ।

चरतीति वचनात्तच्च यावत्प्रधानमुपांश्विति न्यायादिष्टिप्रधानानामेवोपांशुत्वम् । अङ्गानां तु यथाप्रकृति । यत्र ताल्वादिव्यापारस्यैवोपलब्धिस्तदुपांशु ॥

अथैकेषाम् । यावत्यस्य वाग्भवति तावतीं दीक्षणीयायामन्वाह । ततो नीचैस्तरां प्रायणीयायाम् । नीचैस्तरामातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये । १० ।

उपांशूपसत्स्विति सर्वोपांशुत्वमभिप्रेतम्। कस्मात्। उपांशुयाजवत्प्रचरन्तीत्यतिदेशात्. एवं प्रधानानामुपांशुत्वसिद्धेः. उपांशूपसदा चराम तथा नो ऽसुराः पाप्मा नानुवेत्स्यन्तीति वाक्यशेषाच्च। तथोपांश्वधिकारे पित्र्योपसदः सतन्त्रा इत्याश्वलायनः॥

मन्द्रेण दीक्षणीयायाम्। मन्द्रतरेण प्रायणीयायाम्। मन्द्रतरेणातिथ्यायाम्। उपांशूपसत्सु। उच्चैरग्नीषोमीये॥ उपांशु वा दीक्षणीयायाम्। उपांशुतरं प्रायणीयायाम्। उपांशुतरमातिथ्यायाम्। उपांशूपसत्सु। उच्चैरग्नीषोमीये। ११।

उरःकण्ठशिरःस्थानभेदात्त्रयो विभागा भवन्त्युच्चैःस्वरस्य। तेषूरस्यशब्दोपलब्धिमान्मन्द्रः। तस्य शब्दोपलब्धितारतम्यान्मन्द्रत्वतारतम्यं द्रष्टव्यम्॥

दर्शपूर्णमासप्रकृतीनां सोमे ऽग्न्यन्वाधानं व्रतोपायनमारण्याशनं जागरणमन्वाहार्यस्य च दानं पत्न्याः संनहनं विमोचनमिति न विद्यन्ते। १२।

ये सोमान्तःपातिन इष्टिपशुबन्धास्तेषां चोदकप्राप्तान्यग्न्यन्वाधानादीनि निषिध्यन्ते. सोमाङ्गैरेव कैश्चित्सिद्धार्थत्वात्. यथा देवतापरिग्रहार्थत्वादग्न्यन्वाधानादयस्तत्समानार्थैर्दीक्षणीयादिभिः। न चासिद्धं तेषां देवतापरिग्रहार्थत्वं. यजमानाय परिगृह्य देवान् देवता

एवोभयतः परिगृह्येति मन्त्रब्राह्मणसिद्धत्वात्। तथा दीक्षितव्रता-दिभिर्व्रतोपायनाद्यर्थसिद्धिः॥ ननु सवनीयस्य पशोरुपवसथे जागरणस्य श्वःसुत्यायामिति विधानात् अन्यस्य च सद्यस्कालतयाप्राप्तेरेवा-भावात्किमत्र निषिध्यते। उच्यते. ऐष्टिकस्य चोदकप्राप्तस्यायं प्रति-षेधः। अस्ति वा तस्मादस्य भेदः। अस्त्येवेति ब्रूमः। तत्तावदमा-वास्यायां रात्रिं जागर्त्यपि वा सुप्यादिति पाक्षिकम्। नैतदेवम्। तथा आहवनीयागारे गार्हपत्यागारे वा शेत इति तस्य स्थानं. आग्नीध्रे हविर्धाने वा यजमानं जागरयन्तीत्यस्य। तस्मादस्ति धर्मभेदाद्भेदः॥ इतिरत्रप्रकारवचनः॥ अङ्गान्तरमपि यत्प्रसङ्गादु-पजीव्यं तदपि निवर्तते. यथा विद्युदसीत्यपामुपस्पर्शनं ब्रह्मवरण-मित्यादि द्वयोरपि क्रत्वर्थयोरेव प्रासङ्गिकत्वात्॥

**अग्न्यन्वाधानं तु दीक्षणीयायां क्रियेत पत्न्याश्च संनहनम्। १३।**

द्वयमेतद्दीक्षणीयायामन्यथा सिद्धत्वात्क्रियते। व्रतोपायनमप्यनुपेत-त्वात्कार्यमित्येके। तदयुक्तं. द्वयोरेव प्रतिप्रसवे तृतीयस्योपसंख्या-नायोगात्. दीक्षणीययैव तदर्थसिद्धेश्च। यथाह बौधायनः. व्रतं कृणुतेति सर्वेषां व्रतोपायनीया भवतीष्टिरिति। सत्याषाढभारद्वाजौ त्ववभृथोत्तरकालासूदवसानीयादिषु व्रतोपायनं प्रतिप्रसुवाते। नाय-माचार्याभिप्रायः. दर्शपूर्णमासप्रकृतीनां सोम इत्यविशेषवचनात् अप्रतिप्रसवाच्च। पत्नीसंनहनं त्ववभृथोत्तरकालास्वर्थसिद्धं. अवभृथे योक्त्रस्य त्यक्तत्वात्। आह च बौधायनः. संनद्धा पत्नी यज्ञपुच्छ-

मन्वास्त इति । दीक्षणीयायामुक्तं तदन्तमेव धार्यते. सामार्थस्य भावित्वात् ॥

**दीक्षासु यूपं कारयति । १४**

तक्ष्णा ॥

**क्रीते राजन्युपसत्सु वा । १५ ।**

उपसत्स्वित्येव सिद्धे क्रीते राजनीति वचनमनियमार्थम् । यूपः समानो ऽग्नीषोमीयसवनीयानूबन्ध्यानां. सामप्रकरणे विधानात्त्रयाणामर्थित्वात्. कस्यचित्काले ऽनुत्पत्तेश्च । यथोक्तं न्यायविद्भिः. यूपश्चाकर्मकालत्वादिति । तथा चैनमनुक्रम्य समानो यूप इति सत्याषाढः ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

---

**प्राचीनवंशं करोति पुरस्तादुन्नतं पश्चान्निनतं सर्वतः परिश्रितम् । १ ।**

प्राचीनो वंशो यस्य विमितस्य तद्दीक्षितविमितमित्याख्यायते । प्राचीनवंशं विमितं विमिन्वन्तीत्येव शतपथश्रुतिः । तस्य च प्रमाणविशेषाविधानात् अर्थलक्षणावायामविस्तारौ । बौधायनस्तु षोडशप्रक्रमायामो द्वादशव्यासस्तस्य मध्ये द्वादशिको विहार इति. पश्चात्पत्नीशालामिति च । समे शङ्कुं निखाय शङ्कुसंमितया रज्ज्वा

मण्डलं परिलिख्य यत्र लेखयोः शङ्कुच्छाया पतति सा प्राचीति कात्यायनः ॥

अवान्तरदिक्षु स्रक्तयः । २ ।

गतः ॥

स्रक्तिषारोकान्करोति । ३ ।

कोणेषु आरोका अन्तरालानि. आरोकेभ्यारण्यान्याग्यन्तीति श्रुतेः। कोणेषु छिद्राणि करोतीत्यर्थः ॥

प्रतिदिशं द्वाराणि । ४ ।

करोत्येव ॥

पुरस्ताद्द्वारं स्वर्गकामः। दक्षिणतो यः कामयेत पितृलोक ऋध्नुयामिति। पश्चान्मनुष्यलोककामः। उत्तरतो यः कामयेत देवलोक ऋध्नुयामिति। उत्तरतः पुरस्ताद्यः कामयेतोभयोर्लोकयोर्ऋध्नुयामिति। सर्वतो यः कामयेत सर्वासु दिक्ष्वृध्नुयामिति। ५।

यथोक्तासु पञ्चस्वपि दिक्षु एते काम्याः कल्पाः। पूर्व एव नित्यः. पूर्वया द्वारापरस्यां द्वारि दक्षिणस्यां द्वारीति नित्यवदनुवादात्। श्रुतिश्च दिक्ष्वतीकाशान्करोतीति। दिक्षु द्वाराणि. एकद्वाराः काम्याः कल्पा इति सत्याषाढः। न चोत्तरपूर्वं द्वारं प्रत्युच्छिष्टखरं करोतीति सिद्धवदनुवादात्तदपि नित्यं. काम्यश्रुतिविरोधात्. पात्निकेणाप्युपलक्षणसिद्धेश्च ॥

उत्तरेण बर्हिः प्राग्वंशं परिश्रिते यजमानः केशश्मश्रु वापयते । ६ ।

बर्हिरिति स्पष्टार्थम्। केशश्मश्रुग्रहणं लोम्नामप्युपलक्षणार्थम् । न चेदुपपक्षयोः क्रमनियमायोगात् ॥

उपपक्षावग्रे ऽथ श्मश्रूण्यथ केशान्। अपि वा श्मश्रूण्युपपक्षावथ केशान् । ७ ।

उपपक्षौ बाहुमूले ॥

आप उन्दन्त्विति दक्षिणं गोदानमुनत्ति। ओषधे त्रायस्वैनमिति प्रागग्रं दर्भमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिनाभिनिधाय देवश्रूरिति प्रवपति । ८ ।

गोदानं श्रोत्रस्योपरिदेशः । उनत्ति क्लेदयति । उक्तेषु केशश्मश्रुषु दर्भमेकमन्तर्धाय प्रवपति वपनमारभते ॥

एवमुत्तरं गोदानम् । ९ ।

गतः ॥

ओषधे त्रायस्व मा स्वधिते मा मा हिंसीः स्वस्त्युत्तराण्यशीयेति यजमानो जपति । १० ।

त्रीणि यजूंषि त्रिषु कर्मसु यथासंख्येन जपत्युभयत्र ॥

अभ्यन्तरं नखानि कारयते । ११ ।

यथाङ्गुल्यग्रेभ्यो ऽभ्यन्तरं भवति तथा कारयति नापितेन ॥

सव्यस्याग्रे कनिष्ठिकातः । १२ ।

सव्यस्य हस्तस्य पादस्य वाग्रे कनिष्ठिकात आरभ्येति शेषः ॥

हस्त्यान्यग्रे ऽथ पद्यानि । १३ ।

गतः ॥

औदुम्बरेण दतो धावते लोहितमनभिगमयन् ।१४।

दन्तकाष्ठेन ॥

स्थावरास्वप्सु स्नाति शङ्खिनीष्ववकिनीषु लोमशे तीर्थे । १५ ।

सरस्तटाकादिस्थासु अवकिनीषु लोमशे जले तृणच्छन्ने। तीर्थं जनानां स्नानदेशः . अवतार इति केचित् ॥

कुण्डे हिरण्यमवधाय तस्मिन्स्नातीति वाजसनेयकम् । १६ ।

कुण्डमात्रे या आपस्तासु वा हिरण्यमवधाय स्नातीत्यर्थः ॥

इति पञ्चमी कण्डिका ।

---

आपो अस्मान्मातरः शुन्धन्त्विति । हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वावद्यमापः । शतं पवित्रा

वितता ह्यासु ताभिर्नो देवः सविता पुनात्विति। हिरण्यवर्णाः शुचयः पावका इति चैताभ्याम्। १।

पठितया आदिप्रदिष्टया द्वाभ्यां च स्नाति॥

उदाभ्यः शुचिरापूत एमीत्युद्गाहमानो जपति। अपो ऽश्नाति। २।

उद्गाहमानः उदकादुत्तरन्। अपो ऽश्नाति आचम्य दीक्षार्थमपः पिबति॥

एवं पत्नी केशवर्जम्। ३।

उत्तरेण बहिःप्राग्वंशमित्यादि अपो ऽश्नातीत्यन्तं पत्न्या अपि। पूतैमीत्यूहः। तूष्णीकं सर्वमिति बौधायनः॥

अथास्मै क्षौममहतं महद्वासः प्रयच्छति। ४।

अहतं अनुपधुक्तमकारूहतं वा॥

तत्प्रतिगृह्णाति दीक्षासि तपसो योनिस्तपो ऽसि ब्रह्मणो योनिर्ब्रह्मासि क्षत्रस्य योनिः क्षत्रमस्यृतस्य योनिर्ऋतमसि भूरारभे श्रद्धां मनसा दीक्षां तपसा विश्वस्य भुवनस्याधिपत्नीं सर्वे कामा यजमानस्य सन्त्विति। ५।

गतः॥

सोमस्य तनूरसि तनुवं मे पाहि दीक्षासि तनूरसि

तां त्वां शिवां स्योनां परिधिषीयेति तत्परिधाय सोमस्य नीविरसीति नीविमनुपरिकल्पयते । ६ ।

वेष्टितवसनग्रन्थिः नीविः ॥

ऊर्जे त्वेत्यन्नमश्नाति सर्पिर्मिश्रं दधि मधु चाभ्युपसेकम् । ७ ।

भोजनादि प्राग्वंशे. उपरिष्टाद्बहिःप्राग्वंशवचनात्। दधि मधु चान्नमभिषिक्ताभिषिक्तेत्यर्थः ॥

यदस्य मनसः प्रतिप्रियं तदश्नाति । ८ ।

प्रतिप्रियं यत्स्वस्य प्रियम्. अन्यदपि ॥

तदेवास्यामुष्मिंल्लोके भवतीति विज्ञायते । तथाशितः स्याद्यथा ततो दीक्षासु कनीयःकनीयो व्रतमुपेयात् ।९।

तदेवास्य परलोके सेत्स्यति । तथा मृष्टमाशितः स्यात् यथा पश्चाद्व्रतह्रासे ऽपि नावसीदेत् ॥

पुरस्तात्केशवपनाद्वाससो वा परिधानाद्भोजनमेके समामनन्ति । १० ।

गतः ॥

महीनां पयो ऽसीति दर्भपुञ्जीलाभ्यां नवनीतमुद्यौति । ११ ।

उद्गृह्णाति ॥

वर्चोधा असीति तेन पराचीनं त्रिरभ्यङ्क्ते। मुख-मग्रे। १२।

अप्रतिनिवर्तयन्नात्मानं त्रिरभ्यङ्क्ते। सकृन्मन्त्रः। मुखादारभ्याञ्जनं त्रिरपि॥

अनुलोममङ्गानि। स्वक्तो भवति। १३।

यन्मुखानि लोमानि ततस्ततो ऽभ्यङ्क्ते मुखादङ्गान्तराणि। मुखे त्वनियमः। अनुलोममितराण्यङ्गानीत्येव सत्याषाढः॥

इति षष्ठी कण्डिका।

वृत्रस्य कनीनिकासीति त्रैककुदेनाञ्जनेनाङ्क्ते। १।

त्रिककुदाख्ये-पर्वते-भवं त्रैककुदम्॥

यदि त्रैककुदं नाधिगच्छेद्येनैव केन चाञ्जनेनाञ्जीतेति वाजसनेयकम्। २।

गतः॥

सतूलया दर्भेषीकया शरेषीकया दर्भपुञ्जीलेन वाभ्यन्तरं द्विर्दक्षिणमनिधावमानः। सकृत्सव्यम्। ३।

तूलं पुष्पम्। इषीका तत्काण्डम्। अभ्यन्तरं अपाङ्गादारभ्यान्तर्गतम्। अनिधावमानः अप्रतिनिवर्तयन्। सव्ये ऽपि मन्त्रावृत्तिः॥

अपि वा द्विर्दक्षिणं त्रिः सव्यम्। त्रिस्त्रिर्वोभे। ४।

गतौ॥

अथैनमुत्तरेण वहिः प्राग्वंशाद्दर्भपुञ्जीलैः पवयति। ५।

पावनं शोधनम्॥

द्वाभ्यां पवयति त्रिभिः पवयतीत्युक्तम्। ६।

ब्राह्मणप्रदर्शनं एकविंशतिसंख्याया एव वक्ष्यमाणायाः प्रशंसार्थो ऽवयुत्या* द्वित्वाद्यनुवाद इति ज्ञापयितुं. न तु द्वित्वादि विकल्पयितुम्। कल्पान्तरेषु चैतदुक्तम्॥

एकविंशत्या त्रेधा विभक्तया सप्तभिःसप्तभिर्द्विरूर्ध्वं नाभेरुन्मार्ष्टि। सकृदवाक्। ७।

अवाग्यन्नाभेरेतत्सकृदवमार्ष्टि॥

अन्वञ्चं पावयतीत्येके। ८।

शिरस आरभ्या पादाभ्यां सप्तभिःसप्तभिर्मार्ष्टीत्येके॥

यं द्विष्यात्तं तिर्यञ्चमक्ष्णया वा पावयेत्। ९।

तिर्यञ्चं दक्षिणपार्श्वादारभ्योत्तरतः। अक्ष्णया अनृजु॥

चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रम्। १०।

पावयेदित्येव॥

अच्छिद्रेण पवित्रेणेति सर्वत्रानुषजति। ११।

गतः॥

---

* b ऽवयुत्य.

चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्विति पाव्यमानो जपति। १२।

त्रिभिः पाव्यमानस्त्रीनेताञ्जपति॥

तस्य ते पवित्रपत इति च॥ पवमानः सुवर्जनः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥ प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम्। तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमह इति च। १३।

पवमानः सुवर्जन इति च प्राजापत्यमिति च जप्यानामृचामाद्यन्तोपादानम्। ततश्चोत्तमावर्जं सर्वमनुवाकं जपति। पवमानः सुवर्जन इत्यनुवाकमेव सत्याषाढभारद्वाजौ॥

यद्देवा देवहेडनं त्वमग्ने अयासीति च पूतः। १४।

इदमप्यच्छिद्रपठितानां कूश्माण्डीनामृचामाद्यन्तग्रहणम्। अतः सोऽप्यनुवाको जप्यः। तत्र प्रतीकगृहीतानामपि कार्त्स्न्येन जपः॥

प्राग्वा दीक्षणीयाया जुहुयात्। जपेदित्येके। १५।

स्त्रे इव इत्युपस्थानात्प्राग्जुहुयाज्जपेद्वा॥

इति सप्तमी कण्डिका।

इति द्वितीयः पटलः॥

आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्येन्द्राग्नी द्यावापृथिवी इत्यपरेणाहवनीयं दक्षिणातिक्रम्य त्वं दीक्षाणामधिपतिरसीत्याहवनीयमुपोपविशति। १।

एकद्वारे तु तेनैव प्रवेशः सामर्थ्यात्। उप समीपे॥

एष एवात ऊर्ध्वं यजमानस्य संचरो भवति। २।

संचरः कर्मार्थः॥

अत्र दीक्षणीयामेके समामनन्ति। ३।

अस्मिन्वा काले स्वे दक्ष इत्युपस्थाय दीक्षणीयां कुर्यात्॥

पुरस्ताद्दीक्षाहुतीभ्यः संभारयजूंष्येके। ४।

पुरस्ताद्दीक्षाहुतीभ्य इति वचनादत्र दीक्षणीयापक्षे तदन्ते हूयन्ते। लौकिकाज्येन च होमः. दीक्षाहुत्यर्थत्वाद्ध्रौवाज्यस्य॥

यद्दीक्षणीयाया ध्रौवमाज्यं ततो दीक्षाहुतीः स्रुवेण चतस्रो जुहोति। स्रुचा पञ्चमीम्। आकूत्यै प्रयुजेऽग्नये स्वाहेत्येतैः प्रतिमन्त्रम्। ५।

प्रतिमन्त्रग्रहणं मन्त्रेण ध्रुवाप्यायनं सार्वत्रिकमिति वचनात्। नैष्टिकव्यतिरिक्त इति केचित्॥

द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं षष्ठीम्। ६।

षष्ठीं दीक्षाहुतिमिति शेषः ॥

यत्राध्वर्युरौद्ग्रहणानि जुहोति तद्यजमानोऽध्वर्युमन्वारभ्य पञ्च जुहोति वाचा मे वाग्दीक्षतां स्वाहा। प्राणेन मे प्राणो दीक्षतां स्वाहा। चक्षुषा मे चक्षुर्दीक्षतां स्वाहा। श्रोत्रेण मे श्रोत्रं दीक्षतां स्वाहा। मनसा मे मनो दीक्षतां स्वाहेति। ७।

दीक्षाहुतय एवौद्ग्रहणानि। तास्वेकैकस्यां हुतायामेकैकशो जुहोति तत्र सव्येनाध्वर्युमन्वारभ्य। स्रुक्स्रुवयोरव्यापृतेन होमः ॥

अध्वर्युं वा जुह्वतमनुमन्त्रयते। ८।

अध्वर्युं दीक्षाहुतीर्जुह्वतमेतेषामेकैकेनानुमन्त्रयत इत्यर्थः. अन्यथा मन्त्रलिङ्गविरोधात् ॥

वातं प्राणं मनसान्वारभामहे प्रजापतिं यो भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पात्वंहसो ज्योग्जीवा जरामशीमहीति पूर्णाहुतिं हूयमानामनुमन्त्रयते। ९।

पूर्वेषां होमार्थत्वे ऽपि नित्यं पूर्णाहुत्यनुमंत्रणं. पुनरनुमन्त्रणविधानात् ॥

अत्र संभारयजूंष्येके। १०।

अत्रापि लौकिकाज्येनैव होमः ॥

कृष्णाजिनेन यजमानं दीक्षयति। ११।

गतः ॥

द्वाभ्यां समस्य दीक्षेतान्तर्मांसाभ्यां बहिर्लोमाभ्याम्। १२।

समस्य सहिताभ्यां न त्वेकेन ॥

यद्येकं स्याद्दक्षिणं पूर्वपादं प्रतिषीव्येत्। अन्तान्वा। १३।

एकं चेत्तदा दक्षिणं पूर्वपादं प्रतिषीव्येत् आभुज्याधः प्रवेश्य तन्तुभिः सीव्येत्। अन्तान्वा कृष्णाजिनस्य तथा कुर्यात् ॥

द्वे विषूची प्रतिमुञ्चेत पादं वा प्रतिषीव्येदित्येके।१४।

द्वे विषूची विपर्यस्तशिरःपृष्ठे मिथःसंसक्ते कुर्यादित्यर्थः। पूर्ववदेकस्य पादं वा प्रतिषीव्येत्। विषूचीनकरणप्रतिषेवणयोर्विकल्प एकेषामित्यर्थः ॥

अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति। १५।

द्वयपक्षे प्राचीनग्रीवमुत्तरम् ॥

ऋक्सामयोः शिल्पे स्थ इति शुक्लकृष्णे राजी आलभते। संमृशतीत्येके। १६।

शुक्लकृष्णौ प्रदेशौ सह स्पृशति. शिल्पे स्थ इति लिङ्गात्। आलम्भनं केवलस्पर्शनम्। संमर्शनं संश्लेषवत्॥

इत्यष्टमी कण्डिका।

इन्द्र शाक्वर गायत्रीं प्रपद्ये तां ते युनज्मीन्द्र शाक्वर त्रिष्टुभं प्रपद्ये तां ते युनज्मीन्द्र शाक्वर जगतीं प्रपद्ये तां ते युनज्मीन्द्र शाक्वरानुष्टुभं प्रपद्ये तां ते युनज्मीन्द्र शाक्वर पङ्क्तिं प्रपद्ये तां ते युनज्मीत्येतैः प्रतिमन्त्रं प्रतिदिशं कृष्णाजिनमभिमृशति। मध्य उत्तमेन। १।

गतः॥

अथ प्राङ्मुखो जान्वक्नो ऽभिसर्पति। २।

जान्वक्नः आरोहणानुगुणन्यक्नजानुः संभुग्नजानुरित्यर्थः. यथा तासां दक्षिणो बाहुर्न्यक्न इति॥

इमां धियं शिक्षमाणस्येति कृष्णाजिनं भसत्त आरोहति। ३।

भसत्तः कटिप्रदेशेन॥

सुत्रामाणमित्यारोहञ्जपति। इमां सु नावमारुहमित्यारूढः। आहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तं सत्ये ऽधायि सत्यमृते ऽधाय्यृतं च

मे सत्यं चाभूतां ज्योतिरभूवं सुवरगमं सुवर्गं लोकं नाकस्य पृष्ठं ब्रध्नस्य विष्टपमगममिति च। ४।

गतः॥

अथ पत्नी शिरसि कुम्बकुरीरमध्यूहते। ५।

अध्यूहते अधिनिदधाति॥

कृष्णां जीवोर्णानामिति वाजसनेयकम्। ६।

तत्कुम्बकुरीरं जीवतोऽवेः कृष्णस्योर्णाभिर्वा कृतं भवति॥

जालं कुम्बकुरीरमित्याचक्षते। ७।

जालं आनायः. तच्च वैदले वलये स्यूतं. यथाह बौधायनः. बिदलं कुम्बं भवति. जालं कुरीरं भवतीति॥

विष्णोः शर्मासीत्यहतेन वाससा दक्षिणमंसं यजमानः प्रोर्णुते। नक्षत्राणां मातीकाशात्पाहीति शिरः। ८।

वाससा संप्रावृत्य तस्यैवैकदेशेन शिरः संप्रोर्णुते॥

उष्णीषेण प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकम्। ९।

उष्णीषेणान्येन दीर्घशाटकेन वेष्ट्यते शिर इति॥

न पुरा सोमस्य क्रयादपोर्णुवीतेत्युक्तम्। १०।

अपावरणं अपोर्णवनम्। तस्मात्क्रयात्प्रतिषिध्यातिक्रमे दोषश्लोको ब्राह्मणे सोऽनुसंधेय इत्यर्थः॥

प्राचीनमात्रावाससा पत्नीं दीक्षयति । ११ ।

प्राचीनमात्रेत्यस्यार्थमाह ॥

ऊर्ध्ववास्यं ब्रुवते । १२ ।

ऊर्ध्वया दशया वसनीयं ऊर्ध्ववास्यम् । अन्तरा वापराङ्गं नीतां दशामूर्ध्वं कृत्वा वसनीयमित्यर्थः । उत्तरीयमित्येके ॥

शरमयी मौञ्जी वा मेखला त्रिवृत्पृथ्व्यन्यतरतः-पाशा । तया यजमानं दीक्षयति । योक्त्रेण पत्नीम् । १३ ।

पृथ्वी विस्तीर्णा ॥

ऊर्गसीति नाभिं प्रतिपरिव्ययति द्वेष्यं मनसा ध्यायन् । १४ ।

यजमान इति शेषः ॥

उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थापयति । १५ ।

गतः ॥

अत्र दर्शपूर्णमासवत्पत्नीं संनह्यति । सं त्वा नह्या-मीति विकारः । १६ ।

होमार्थं योक्त्रमात्रमर्थाद्वार्यम्. तस्य चोक्त एव प्रसङ्गः प्रायणी-यादौ ॥

इन्द्रस्य योनिरसि मा मा हिंसीरिति कृष्णविषाणां यजमानाय प्रयच्छति। १७।

कृष्णमृगस्य शृङ्गं कृष्णविषाणा ॥

आबध्नातीत्येके। १८।

वसनस्य दशायां बध्नीतेति बौधायनकात्यायनौ ॥

त्रिवलिः पञ्चवलिर्वा दक्षिणाद्भवति। सव्यादि-त्येके। १९।

गतः ॥

इति नवमी कण्डिका।

कृष्यै त्वा सुसस्याया इति तया वेदेर्लोष्टमुद्धन्ति। १।

यजमानः ॥

सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यर्थं प्राप्ते शिरसि कण्डू-यते। २।

अर्थे कण्डूतौ प्राप्तायाम्। बहुष्वप्यर्थेषु सकृदेव मन्त्रः ॥

विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं हृदि मनो यदस्य गुल्फितमित्यङ्गानि। ३।

कण्डूयत इति शेषः ॥

ऊर्ध्वसदसि वानस्पत्यः सुद्युम्नो द्युम्नं यजमानाय धेहीत्यौदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति। यो वा यज्ञियो वृक्षः फलग्रहिः। ४।

यः फलं गृह्णाति न बन्ध्यो बालो वा। अथवा यदुदुम्बरादिवत् फलमेव गृह्णाति न पुष्पमपीत्यर्थः॥

आस्यदघ्नस्सुबुकदघ्नो वा। ५।

दण्ड इति शेषः॥

सूपस्था देवो वनस्पतिरिति तं यजमानः प्रतिगृह्योरुव्यचा असि जनधाः स्वभक्षो मा पाहीति चमसं व्रतप्रदानमभिमन्त्र्य केशिनीं दीक्षां जपत्यग्निर्दीक्षितः पृथिवी दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे। वायुर्दीक्षितो ऽन्तरिक्षं दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे। आदित्यो दीक्षितो द्यौर्दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे। चन्द्रमा दीक्षितः श्रोत्रं दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे। प्रजापतिर्दीक्षितो मनो दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे। वाचा मे वाग्दीक्षतामग्नये समष्टवा उ। प्राणेन मे प्राणो दीक्षतां वायवे समष्टवा उ। चक्षुषा मे चक्षुर्दीक्षतां सूर्याय समष्टवा उ। श्रोत्रेण मे श्रोत्रं दीक्षतां चन्द्रमसे समष्टवा उ।

मनसा मे मनो दीक्षतां प्रजापतये समष्टवा उ। भूर्भुवः सुवस्तपो मे दीक्षा सत्यं गृहपतिरिति। ६।

यजमान इति शेषः। कंसं व्रतप्रदानमिति सत्याषाढः॥

अथैनमध्वर्युरभिमन्त्रयते। ७।

इति दशमी कण्डिका।

पृथिवी दीक्षा तयाग्निर्दीक्षया दीक्षितो ययाग्निर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा तया वायुर्दीक्षया दीक्षितो यया वायुर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। द्यौर्दीक्षा तयादित्यो दीक्षया दीक्षितो ययादित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। दिशो दीक्षा तया चन्द्रमा दीक्षया दीक्षितो यया चन्द्रमा दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। आपो दीक्षा तया वरुणो राजा दीक्षया दीक्षितो यया वरुणो राजा दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। ओषधयो दीक्षा तया सोमो राजा दीक्षया दीक्षितो यया सोमो राजा दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। वाग्दीक्षा तया प्राणो दीक्षया दीक्षितो

यथा प्राणो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। पृथिवी त्वा दीक्षमाणमनुदीक्षताम्। अन्तरिक्षं त्वा दीक्षमाणमनुदीक्षताम्। द्यौस्त्वा दीक्षमाणमनुदीक्षताम्। दिशस्त्वा दीक्षमाणमनुदीक्षन्ताम्। आपस्त्वा दीक्षमाणमनुदीक्षन्ताम्। ओषधयस्त्वा दीक्षमाणमनुदीक्षन्ताम्। वाक्त्वा दीक्षमाणमनुदीक्षताम्। ऋचस्त्वा दीक्षमाणमनुदीक्षन्ताम्। सामानि त्वा दीक्षमाणमनुदीक्षन्ताम्। यजूंषि त्वा दीक्षमाणमनुदीक्षन्ताम्। अहश्च रात्रिश्च कृषिश्च वृष्टिश्च त्विषिश्चापचितिश्चापश्चौषधयश्चोर्क् च सूनृता च तास्त्वा दीक्षमाणमनुदीक्षन्तामिति। १।

गतः॥

संभारयजूंषि चैनमध्वर्युर्वाचयति। २।

अध्वर्युरिति विस्पष्टार्थम्॥

अथाङ्गुलीर्न्यचति। ३।

प्रथमं द्वे कनिष्ठिके न्यञ्चति संभुजति। एवमुत्तरास्वपि क्रमो द्रष्टव्यः॥

स्वाहा यज्ञं मनस इति द्वे। स्वाहा दिव इति द्वे। स्वाहा पृथिव्या इति द्वे। स्वाहोरोरन्तरिक्षादिति द्वे। स्वाहा यज्ञं वातादारभ इति मुष्टीकरोति वाचं च यच्छति। ४।

मुष्टीकरोति मुष्टीकरणं ताभिरेवाङ्गुष्ठसंयोजनम् ॥

अथैनं त्रिरुपांश्वावेदयति त्रिरुच्चैरदीक्षिष्टायं ब्राह्मणो ऽसावमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्तामुष्याः पुत्रो ऽमुष्याः पौत्रो ऽमुष्या नप्तेति। ५।

अथैनं यजमानमुपांशु देवेभ्य आवेदयति. उच्चैर्मनुष्येभ्यः. उभयेभ्य एवैनमिति श्रुतेः। तत्र द्विपितुरार्षेयन्यायेनोभयोर्वंश्ययोः कीर्तनम्। तथा मातृसपत्नीनामपीत्येके ॥

ब्राह्मणो वा एष जायते यो दीक्षते। तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवावेदयति। ६।

राजन्यवैश्ययोरप्यविकृतो मन्त्रः। कथं तयोर्ब्राह्मणत्वमित्यपेक्षायां ब्राह्मणो वेदात् खल्वपि पुनर्जायते यो दीक्षते. यथाह मनुः

मातुरग्रे ऽधिजननं द्वितीयं मौञ्जिबन्धने। तृतीयं यज्ञदीक्षायामिति। तस्मादविकार एव ॥

इत्येकादशी कण्डिका।

इति तृतीयः पटलः ॥

---

अपराह्णे दीक्षयेत्। १।

दीक्षणीयादि सर्वमपराह्ण एव कुर्यात्. यथाह बौधायनः. प्राक्कालमयाद्दीक्षणीयां संस्थापयेदिति* ॥

---

* bik संतिष्ठापयेदिति !

यं कामयेत तपस्वी स्यादिति तं पूर्वाह्णे । २ ।

गतः ॥

स वाग्यतस्तपस्तप्यमान आस्त आ नक्षत्रस्योदेतोः । ३ ।

किंचिदप्यव्रत्यं नाचरेत् । उदेतोः उद्यात् ॥

वत्सस्यैकं स्तनमवशिष्येतरान्व्रतं दोहयित्वा याः पशूनामृषभे वाचस्ताः सूर्यो अग्रे शुक्रो अग्रे ताः प्रहिण्वो यथाभागं वो अत्र शिवा नस्ताः पुनरायन्तु वाच इति जपित्वा व्रतं कृणुतेति वाचं विसृजते । ४ ।

उदितेषु नक्षत्रेषु व्रते च दुग्धे अपणार्थः प्रैषः । तत्र परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थं बहुवचनम् ॥

दृष्टीः स्थेति चतस्रो ऽङ्गुलीरुत्सृजति । द्वे अन्यतरतो द्वे अन्यतरतः । ५ ।

द्वयोरपि हस्तयोः कनिष्ठिकानामिके उत्सृजति ॥

जागर्त्येतां रात्रिम् । क्रीते राजनि द्वितीयाम् । श्वःसुत्यायां तृतीयाम् । ६ ।

गतः ॥

चनसितं विचक्षणमिति नामधेयान्तेषु निदधाति । ७ ।

त्रैवर्णिकानामामन्त्रण इति शेषः। चनसितं विचक्षणमिति च प्रातिपदिकनिर्देशः. न विभक्तिर्विवक्षिता। एतद्दर्शयति ॥

चनसितेति ब्राह्मणम्। विचक्षणेति राजन्यवैश्यौ। ८।

आमन्त्रयेतेति शेषः। आमन्त्रयेतेत्येव भारद्वाजः। तद्यथा देवदत्त चनसित मित्रपाल विचक्षणेति ॥

परिणयेन मानुषीं वाचं वदति। ९।

परितः सर्वेषु देशेषु एकरूपः परिणीयत इति परिणयः साधुशब्दः। मानुषीं लौकिकीमपि वाचं साधुभिरेव भाषते न म्लेच्छैरित्यर्थः ॥

न स्त्रिया न शूद्रेण संभाषेत। १०।

स्त्रिया त्वशूद्रयापि न संभाषेत ॥

नैनमनुप्रपद्येत। ११।

बहूपकारलोभादपि नैनं शूद्रमनुगच्छेत्। एनं यजमानं शूद्रो नानुप्रपद्येतेत्यपरम्. यथाह सत्याषाढः. यथैनं* शूद्रो ऽनुप्रविशतीति ॥

यद्येनं शूद्रेण संवाद उपपद्येत ब्राह्मणराजन्यवैश्यानामेकं ब्रूयादिममित्थं ब्रूहीति वाजसनेयकम्। १२।

यद्यावश्यकः संवादः त्रैवर्णिकं पुरस्कृत्य संवादयेत्। वाजसनेयग्रहणमादरार्थम् ॥

---

* Thus bik, l न एनं.

कामं शूद्रेण संभाषेत यः पापेन कर्मणाभिलक्षितः स्यादिति शाट्यायनकम् । १३ ।

यस्त्वगम्यागमनस्तेयादिदोषाश्रयतया न श्रुतः तेन कामं संभाषेत ॥

अभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति शाट्यायनकम् । १४ ।

अन्यैरभिवादितस्तेभ्य आशिषं वदति. न तु स्वयमाचार्यादीनप्यागतान्. किं पुनरन्यान् । राजाभिवादननिषेधो राज्ञः. न ब्राह्मणस्य अप्रसक्तेः । द्विःशाट्यायनग्रहणं भिन्नार्थत्वात् ॥

इति द्वादशी कण्डिका ।

अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत् । १ ।

अन्यस्य विधिरयम् ॥

न चास्य नाम गृह्णीयात् । २ ।

भो इत्यादिभिः पूजाशब्दैरामन्त्रयते ॥

न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेत् । ३ ।

आ दक्षिणानां नयनात् नोत्सृजेत् ॥

न च दन्तान्दर्शयते। ४।

गतः॥

हस्तेनापिगृह्य स्मयते। ५।

अपिगृह्य छादयित्वा॥

मधु मांसं स्त्रियमनृतमुपरिशय्यां ष्ठीवनं विकाले निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेत्। ६।

आहिताग्नेः सिद्धस्यैवानृतवर्जनस्य वचनमादरार्थं कर्माङ्गत्वज्ञापनार्थं च। ष्ठीवनं लालादिविसर्जनम्। विकालो निष्क्रमणायोग्यः संध्यादिः। दीक्षितार्थं विमितं दीक्षितविमितम्. तच्च प्राग्वंश एवेति प्रागेव दर्शितम्। प्रवासो ऽन्यत्र रात्रिवासः। दीक्षितविमितादिति च काकाक्षिवदुभयत्र संबध्यते. विकाले दीक्षितविमितान्न निष्क्रामेत् न च ततो ऽन्यत्र रात्रिं वसेदित्यर्थः॥ सर्वत्र चात्र व्रतातिक्रमे व्रातपती प्रायश्चित्तिः। यथाविहितं तु वैशेषिकाणि. यथा वारुणीरभिनिम्रुक्तः. यद्यन्यत्रासीत. यदि दीक्षितो ऽवकिरेतेत्यादीनि॥

न दिवा मूत्रपुरीषे कुर्यात्। ७।

गतः॥

यदि कुर्याच्छायायाम्। ८।

यदि निरोद्धुं न शक्नुयात्तदा छायायां कुर्यात्॥

मूत्रं चिकीर्षन्निय ते यज्ञिया तनूरिति तृणं लोष्टं वापादायापो मुञ्चामि न प्रजामंहोमुचः स्वाहाकृताः

पृथिवीमाविशतेति मूत्रं विसृज्याचम्य पृथिव्या संभवेत्यपात्तं प्रतिनिदधाति। ९।

तृणं लोष्टं वा यतो देशादपात्तं तत्र पुनर्निदधाति॥

यन्मे ऽत्र पयसः परीतोषात्तदर्पिथ। अग्निहोत्रमिव सोमेन तदहं पुनरादद इति रेतः स्कन्नमनुमन्त्रयते। १०।

अबुद्धिपूर्वस्कन्दने ऽयं विधिः। बुद्धिपूर्वे तु दर्शितमेव यदि दीक्षितो ऽवकिरेतेति॥

यदत्रापि रसस्य मे निरष्ठविषमस्मृतम्। अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति छर्दित्वा ष्ठुत्वा वा॥ यदन्नमद्य ते नक्तं न तत्प्रातः क्षुधो ऽवति। सर्वं तदस्मान्मा हिंसीर्नहि तद्ददृशे दिवेति स्वप्ने ऽन्नं भुक्त्वा॥ रुद्रियाभ्यो ऽद्भ्यः स्वाहेति लोहितमुत्पतितं दृष्ट्वा। ११।

इति त्रयोदशी कण्डिका।

बीभत्सा नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति सूहानम्। क्षपा *णाम स्थापः स्वाहाकृताः

* Thus all MSS.

**पृथिवीमाविशतेत्यश्रु। तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदम् । १ ।**

सर्वत्रानुमन्त्रयत इत्यन्वयः। तथा क्षुद्रानमित्यादिषु उत्पतितं दृष्ट्वे-त्यनुषङ्गः। क्षुद्रानं नामासुतं श्लेष्मादि ॥

**न प्रतीच्या द्वारा निष्क्रामति । २ ।**

प्राग्वंशस्येति शेषः ॥

**नाक्रतुसंयुक्तामाहुतिं जुहोति । ३ ।**

स्मार्तानामौपासनादीनां काम्यानां चतुर्होत्रादीनां चायं प्रतिषेधः ॥

**नाग्निहोत्रम् । ४ ।**

जुहोतीति शेषः ॥

**न दर्शपूर्णमासाभ्यां यजते । ५ ।**

प्रदर्शनार्थं चैतदन्येषामपि नित्यनैमित्तिककाम्यानां कर्मणामन्यत्राङ्ग-भूतेभ्यः प्रायश्चित्तेभ्यः ॥

**न ददाति । ६ ।**

अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानमित्यादिना यद्दानमुक्तं तदपि न करोति ॥

**न पचते । ७ ।**

वैश्वदेवाद्यर्थं न पचते ॥

द्वादशाहमवरार्ध्यं दीक्षितो भवति। मासं संवत्सरं यदा वा कृशः स्यादित्यपरम्। ८।

दीक्षितधर्मास्तावत्कतिपये ऽभिहिताः. अभिधास्यन्ते चान्ये सूत्रान्तरे। दीक्षायाः कतोऽस्त्राहःपरिमाणविकल्पा उच्यन्ते. विचित्रत्वासूत्रक्रियायाः। तत्र चैका दीक्षादिसंवत्सरान्ताः कल्पाः प्रकृतावेव विकल्प्यन्ते. सर्वेषां प्रकरणाम्नानाविशेषात्। यथोक्तं न्यायविद्भिः. दीक्षापरिमाणे याथाकाम्यमविशेषात् ॥

विज्ञायते च। यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति। यदास्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति। यदास्य त्वचास्थि संधीयते ऽथ मेध्यो भवति। यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति। ९।

कृष्णं चक्षुषोर्नश्यति पक्ष्मणि लीना तारका न दृश्यते। मेध्यः मेधार्हः ॥

पीवा दीक्षते। कृशो यजते। यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते। १०।

दीक्षादशायां पीवरस्य दीक्षाव्रतैर्यदङ्गेषु चीयते तदग्नावेव हुतं भवति। अतः कर्शिताङ्गेनैव यष्टव्यमित्यर्थः ॥

इति चतुर्दशी कण्डिका।

एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतः। तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतः। चतस्रो वा दीक्षास्तिस्र उपसदोऽष्टमीं प्रसुतः। १।

पञ्चमीं प्रसुतः दीक्षमहरारभ्य पञ्चम्यां रात्रावभिषुतः सोमो भवतीत्यर्थः। एवमुत्तरयोरपि कल्पयोर्द्रष्टव्यम्। तत्र यदीक्षादिविधिना पर्वणि सुत्यानियमात् प्रधानत्वाच्च तदनुरोधेनैकादश्यादौ दीक्षा भवति। कल्पान्तरैस्तु पर्वणि दीक्षेत्यपि श्रुतेर्मुख्यजघन्यन्यायेन पर्वणि दीक्षामिष्ट्वा तदनुरोधेनापर्वणि सुत्याप्यनुज्ञायते। सत्याषाढस्तावत् यदि त्वेका दीक्षा तिस्रश्चतस्रो वापरिमितास्तत्रापर्वणि सुत्यमहर्दीक्षा वेति। भारद्वाजश्चाह. कथमेकावरेषु दीक्षाकल्पेषु. तत्रापर्वणि दीक्षा सुत्या वा. अपर्वणि वा दीक्षा पर्वण्येव सुत्यां संपादयेदिति। तथा. अमावास्यायां दीक्षते नामावास्यायां सुत्यमहर्भवति. यच्चामावास्यायां सुत्यमहर्यजनीये ऽहनि स्यादिति च। बौधायनेनाप्युक्तं. आमावास्येन हविषेष्ट्वा नक्षत्रे वेति। तथा द्राह्यायणोऽप्याह. प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यो दृष्ट्वा वा नक्षत्रयोगं. तेषामेकादीक्षानादेश इति। बह्वृचाश्चाधीयते. आमावास्येन हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव बर्हिषि दीक्षेतैषो एका दीक्षेति॥ अथोभयोरपि दीक्षासुत्ययोः पर्वनियमेन पक्षापवर्गितां सोमस्याह॥

अमावास्यायां दीक्षा यजनीये वा। पौर्णमास्यां यजनीये वा सुत्यमहः। २।

यजनीयदीक्षायां सुत्यापि यजनीय एव द्रष्टव्या॥

एतद्वा विपरीतम् । ३ ।

पौर्णमास्यां दीक्षामावास्यायामपवृज्यते . यजनीययोरुभय-मित्यर्थः ॥

अमावास्यायां दीक्षा यजनीये वा। अमावास्यायां यजनीये वा सुत्यमहः॥ पौर्णमास्यां दीक्षा यजनीये वा। पौर्णमास्यां यजनीये वा सुत्यमहः । ४ ।

व्याख्यातः पूर्वेण। मासापवर्गित्वमेव विशेषः ॥

नैनमन्यत्र दीक्षितविमितादभिनिम्रोचेदभ्युदियाद्वा । ५ ।

व्याख्यातं दीक्षितविमितम्। तत्रैवोदयास्तमयवेलयोः स्यादित्यर्थः। यद्यन्यत्र स्यात्तत्र प्रायश्चित्तमाह॥

वारुणीरभिनिम्रुक्तो जपेत्। सौरीरभ्युदितः। ६।

गतः ॥

अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति। ७।

अमेध्यं अशुचि द्रव्यम्। तदसकृद्दृष्ट्वापि सकृज्जपति कालाव्यवाये॥

उन्दतीर्बलं धत्तेत्यवहृष्टः। ८।

पूर्ववद्व्याख्या ॥

दक्षिणेनाहवनीयं प्राङ् शेते न न्यङ्ङोत्तानो नाग्ने-रपपर्यावर्तेत । ९ ।

अपपर्यावर्तनं अग्नेः पृष्ठतःकरणम्। प्राक्शिरा दक्षिणेन पार्श्वेन शेत इत्यर्थः ॥

यद्यपपर्यावर्तेत विश्वे देवा अभि मामावहत्रन्निति जपेत्। १०।

गतः ॥

नान्यत्र कृष्णाजिनादासीत। यद्यन्यत्रासीत देवां जनमगन्यज्ञ इति जपेत्। ११।

देवां जनमगन्यज्ञ इति एकेषामित्यादिवन्मन्त्रग्रहणम्। प्रतीकाग्रहणात्सर्वानपि मन्त्राञ्जपेत्। सर्वांस्त्वेवापठत्सत्याषाढः ॥

न दण्डात्कृष्णाजिनादिति विप्रच्छिद्येत। उभे निधाय मूत्रपुरीषे कुर्यात्। १२।

गतौ ॥

यावदुक्तं पत्न्या दीक्षितव्यञ्जनानि। १३।

यावदत्रोर्ध्ववास्यादि पत्न्या दीक्षितलिङ्गमुक्तं तावदेव तस्या नान्यत्किंचिन्नवनीतदीक्षादि ॥

समानं ब्रह्मचर्यम्। १४।

ब्रह्मचर्यशब्देनात्र मधुमांसवर्जनादिनियमा उच्यन्ते. स्त्रीगमननिषेधेनैव मैथुनवर्जनस्य सिद्धत्वात् ॥

न दीक्षितवसनं परिदधीत। नास्य पापं कीर्तयेत्। नास्यान्नमश्नीयात्। १५।

अदीक्षितानाममी निषेधाः। दीक्षार्थं वाससेन त्यक्तं परिदधीत न कश्चित्। नास्य सन्नमसन्नं वा दोषं जल्पेत्। नान्नमश्नीयात्॥

यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्। संस्थिते वाग्नीषोमीये। हुतायां वा वपायाम्। १६।

यावता यज्ञस्यार्थस्तावति व्रीह्याज्यादिद्रव्ये यजमानेन विभक्ते शेषाद्भुञ्जीरन्। यदा तु न निर्दिष्टं भवति तदोत्तरावेव कल्पौ भवतः। तथा क्रीतराजक इति धर्मसूक्तो ऽप्यवधिरनुसंधातव्यः॥

इति पञ्चदशी कण्डिका।

इति चतुर्थः पटलः॥

न पुरा नक्षत्रेभ्यो वाचं विसृजेत्। यदि विसृजेदिदं विष्णुस्त्वमग्ने व्रतपा असीति जपित्वा वाचं यच्छेत्। १।

नक्षत्रेभ्य इति वचनात्सायंकालविषय एवायं विधिः। प्रातस्तु त्वमग्ने व्रतपा असीति प्रबुध्य मुष्टी वाचं वा विसृज्येत्येष विधिर्भवति॥

पुनर्वा दीक्षेत। २।

सर्वस्य वा दीक्षातन्त्रस्यावृत्तिः॥

अथैकेषाम्। वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामुत्तमामनूच्य वाग्यन्तव्येति। ३।

इदं विष्णुरिति वैष्णवी । अग्नाविष्णू महि तद्वामित्यनुवाकस्याद्य-योरन्यतरा आग्नावैष्णवी । ततः परयोरन्यतरा सारस्वती. प्र णो देव्या नो दिव इति । ततः परासां तिसृणामुत्तमा बार्हस्पत्या. बृहस्पते अति यदर्य इति ॥

दुग्धमेवाभिविसृजेदित्यालेखनः । ४ ।

यद्यपि न पुरा नक्षत्रेभ्य इत्येतावदेवोक्तं ब्राह्मणे तथा उदितेषु नक्षत्रेषु व्रते च दुग्धे एव वाचं विसृजेदित्यालेखनो मन्यते । यथा वयमिति भावः. सूत्रमतेनापि तथाप्रदर्शनात्. यथा वत्सस्यैकं स्तनमित्यादि । संवादप्रदर्शनं चादरार्थम् । तेनाव्रतदोहादिसर्गे भवत्येतत्प्रायश्चित्तम् ॥

यवागू राजन्यस्येत्युक्तम् । ५ ।

पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्येत्युक्तं ब्राह्मणे । तद्यथावर्णं व्रतान्यनुसंधातव्यानीत्यर्थः ॥

यवागूमेकदुग्धं वा व्रतयेदित्यवर्णसंयोगेनैक उपदिशन्ति । ६ ।

एकस्या व्रतदुहो दुग्धं एकदुग्धम् । तत्सर्ववर्णसाधारणमुक्तं शाखान्तरे । तथा यवागूः । तेनोभयमेतत्सर्ववर्णानां तेन व्रतेन विकल्पते ॥

तद्वैतदेके पयो व्रतयन्ति । तदु तथा न कुर्यात् । पयस्येव यवागूं श्रपयित्वा व्रतयेत् । ७ ।

पूर्वमिन्द्रोत्तरविधिप्रशंसार्था । पयोव्रते पयः केवलं वा व्रतयेत्. पयसि श्रपितां यवागूमित्यर्थः ॥

यदि व्रतधुगल्पं दुहीतान्यां दुह्यात् । ८ ।

गतः ॥

यद्यन्या न स्यादद्भिः संसृज्य श्रपयेत् । ९ ।

अन्याभावे तदेवाल्पमद्भिर्वर्धयित्वा श्रपयेत् ॥

यदि पयो न स्यादप्स्वेव यवागूं श्रपयित्वा व्रतयेत् । १० ।

यद्यल्पमपि न स्यात्तदा यवागूं श्रपयेत् ॥

अप्यन्ततः पिप्पलानि । न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदायेति । ११ ।

पिप्पलानि फलानि व्रीहयो वा । सर्वाभावे फलान्यपि वा व्रतयेत् । न तु लोपयेत्. व्रतस्याग्निहोत्रसंस्तवादिति भावः । इतिकरणः श्रुतिसूचनार्थः । तथा अग्निहोत्रस्याविच्छेदायेति विज्ञायत इति भारद्वाजः ॥

यदि दधीयादेतदेवास्मै दधि कुर्युः । १२ ।

यदि दधीयात् दधीच्छेत् एतदेवातच्य दधि कृत्वा व्रतयेत् ॥

यद्यश्नीयाद्धाना अस्मा अन्वावपेयुः सक्तूनस्मा अन्वावपेयुर्घृतमस्मा अन्वानयेयुः । १३ ।

यदि क्षीणबलो ऽन्नमदनीयमिच्छेत्तदा तस्यानुपदामार्थं व्रतकाले व्रत एव धानादि निवपेयुरित्यर्थः । तथा च ब्राह्मणं. यदि मन्ये-

तोपदस्यामीत्योदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनो ऽनुपदा-सायेति ॥

अप्यग्निहोत्रहविषामेवैकं व्रतयेन्मांसवर्जम्। १४।

उपदस्यन्नोदनाद्यपि व्रतयेत् ॥

सो ऽयं दैक्षो वादो भवतीति खल्वाहुः। सर्वेषामु-पसत्स्वनारभ्य स्तनकल्प आम्नातः। १५।

यो ऽयं पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्येत्यादिविधिः स दीक्षार्थः। उपसत्सु तु सर्ववर्णानामविशेषेण पयोव्रतस्यैव *चतुस्त-नादिकल्प आम्नातः. स चोपसत्स्वेव दर्शयिष्यते ॥

अपराह्णे ऽधिवृक्षसूर्ये वा व्रतप्रदो वाचं यमयति। अग्नीज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति संप्रेष्यति। १६।

व्रतप्रद इति वचनं कुरुतेति बहुवचनं च व्रतप्रदानज्वलनयोः परिकर्मृत्विजामन्यतमप्राप्त्यर्थम्। तेषु तु य एव कश्चिद्व्रतप्रदः स एव संप्रैषमाह। तत्र च प्रथमे ऽहनि दीक्षितवर्जं संप्रैषः. स वाग्य-तस्तपस्तप्यमान आस्त इति प्रागेव तद्वाग्यमनस्योक्तत्वात् ॥

इति षोडशी कण्डिका।

---

* Thus (not चतुःस्तना॰) all MSS.

उदितेषु नक्षत्रेषु पूर्ववद्वाचो विसर्गः। १।

पूर्ववत् वत्सस्यैकं स्तनमित्यादिना विधिनेत्यर्थः॥

एवमुपोदयं यमयति। उदित आदित्ये विसृजते। २।

उपोदयं उदयात्पूर्वकालम्॥

मध्यंदिने मध्यरात्रे च व्रतयति। ३।

गतः॥

अतिनीय वा मानुषं कालम्। ४।

यस्मिन्काले दिवा च नक्तं च प्रायशो मनुष्या भुञ्जते स मध्यंदिनादिर्मानुषः कालः। तस्मिन्नतीते वा व्रतयति॥

सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्ण इत्येके। ५।

सायं दुग्धं रात्रिव्रतम्। प्रातर्दुग्धं अहर्व्रतम्। व्रतयतीत्यन्वयः॥

गार्हपत्ये दीक्षितस्य व्रतं श्रपयति। दक्षिणाग्नौ पत्न्याः। ६।

गतः॥

याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्य। ७।

व्रतस्य स्कन्नस्याग्निहोत्रवत्प्रायश्चित्तिः॥

अग्निहोत्रवत्तूष्णीमुन्नीयापरेणाहवनीयं व्रतमत्याहृत्य प्रयच्छन्नाह व्रत्य व्रतय व्रतमुपेहीति। ८।

व्रतप्रद इति शेषः। व्रतप्रदाने समये चतुः पञ्चकृत्वो वा चतुरवत्ति-पञ्चावत्तिवशादुन्नीय स्वयं बहिर्भूत्वा व्रतमपरेणाहवनीयं हरति ॥

दैवीं धियं मनामह इति हस्ताववनिज्य ये देवा मनोजाता मनोयुज इति दक्षिणेनाहवनीयं परिश्रिते व्रतयति। ९।

यजमान इति शेषः ॥

नैनमदीक्षिता व्रतयन्तं पश्यन्ति। १०।

गतः ॥

शिवाः पीता भवथ यूयमापो ऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः शिवा नो भवथ जीवस इति व्रतयित्वा नाभिदेशमभिमृशते। ११।

अन्ये ऽभिमृशते ॥

अपश्च पीत्वा जपति। १२।

यदा तृषितो ऽपः पिबति तदाप्येतां जपतीत्यर्थः। यदा पिपास-तीत्येव सत्याषाढः ॥

तूष्णीं पत्नी स्व आयतने व्रतयति। १३।

गतः ॥

इति सप्तदशी कण्डिका।

इति पञ्चमः पटलः ॥

अग्ने त्वं सु जागृहीति स्वप्स्यन्नाहवनीयमभिमन्त्रयते । १ ।

यत्र जागरणं नोक्तं तत्रायं नियमः ॥

त्वमग्ने व्रतपा असीति प्रबुध्य सुप्त्वा वाचं वा विसृज्यादीक्षितवादं वोदित्वा । २ ।

सुप्तोत्थिते चाहवनीयमभिमन्त्रयते । तथोत्तरेषु निमित्तेषु । म्लेच्छाभिभाषणं चनसितादिवर्जनं चादीक्षितवादः ॥

विश्वे देवा अभि मामावृत्रन्निति प्रबुध्य जपति । पुनर्मनः पुनरायुरागात्पुनः प्राणः पुनराकूतमागात् । वैश्वानरो ऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वेति च । ३ ।

प्रबुध्याभिमन्त्रणेनानयोर्जपयोः समुच्चयः ॥

तस्माद्दीक्षितो द्वादशाहं भृतिं वन्वीत । यन्नमेव तत्संभरतीति विज्ञायते । ४ ।

भृतिवचनं दक्षिणार्थं भिक्षणम् । तदेकदीक्षादिकल्पेष्वपि कुर्यात्. प्रदर्शनार्थत्वाद्द्वादशाहग्रहणस्य । संभृतद्रव्यस्य तु न भिक्षणं. तत्संपत्त्यर्थत्वात्तस्य ॥

पूषा सन्येति सनीहारान्संशास्ति । ५ ।

सनिः याञ्चालभ्यं धनं. तद्ये हरन्ति ते सनीहाराः । तान्प्रहिणोत्यमुं चामुं च गच्छतेति यतो यतो वेत्स्यमन्यते ॥

चन्द्रमसीत्येतैर्यथालिङ्गं प्रतिगृह्णाति । ६ ।

तैराहृतं हिरण्यादि द्रव्यम् ॥

देवः सविता वसोर्वसुदावेत्यन्यानि । ७ ।

अन्यानि उक्तव्यतिरिक्तानि व्रीह्यादीनि ॥

वायवे त्वेति तासां नष्टामनुदिशति । ८ ।

मन्त्रसमवेतं देवतार्थतया संकल्पनं अनुदेशः ॥

वरुणाय त्वेत्यप्सु मृताम् । ९ ।

अनुदिशतीत्यन्वयः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

निर्ऋत्यै त्वेत्यवसन्नां संशीर्णां वा । १० ।

अवसन्ना दौर्बल्यादसंचारक्षमा । संशीर्णा या शिथिलाङ्गसंधिरुत्थातुमपि न पारयते ॥

इत्यष्टादशी कण्डिका ।

---

मरुद्भ्यस्त्वेति ह्रादुनिहतां मेष्कहतामप्सु वा मग्नाम् । १ ।

ह्रादुनिहतां तडिद्धताम् । मेष्क इति हिंस्रं सत्त्वविशेषमाचष्टे । याप्सु निमग्ना न दृश्यते तामनेनानुदिशति । या दृश्यमानैवाप्सु मृता तस्या वरुणाय त्वेत्येवानुदेशः ॥

रुद्राय त्वेति महादेवहताम्। २।

महादेवहतां ज्वरहताम्॥

इन्द्राय त्वा प्रसह्वन इति यां सेनाभीत्वरी विन्देत। ३।

अभीत्वरी अभिप्रयान्ती सेना यां विन्देत अपहरेत॥

यमाय त्वेत्यविज्ञातेन यक्ष्मणा मृताम्। ४।

यक्ष्मा रोगः॥

अनुदिष्टानामधिगतां न गोषु चारयेत्। ५।

कृते ऽनुदेशे नष्टापहृता वा पुनश्चेल्लभ्येत तां देवतार्थेन त्यक्तत्वादात्मार्थे न गृह्णीयादित्यर्थः॥

पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति। ६।

अथ प्रयाणधर्माः. ते च दीक्षितधर्माधिकारे वचनाददीक्षितप्रयाणे नेष्यन्ते। तत्र समारोपणविधिः प्रागेव दर्शितः। पुनररणिवचनादात्मसमारोपणं नेष्यते. रथवचनाच्च न शकटम्॥

तदभावे रथाङ्गमादाय। ७।

रथाभावे रथस्याङ्गं किंचिद्गृहीत्वा प्रयाति॥

भद्रादभि श्रेय इति प्रयाणः। ८।

प्रयाणमन्त्रो ऽयं यजमानस्य॥

देवीराप इत्यपो ऽतिगाहते। ९।

यदि पथ्यापस्तरणीयाः स्युः ता अनेन प्रविशति ॥

अच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति हस्तेन लोष्टं विमृद्नात्या पारात्। १०।

यथा पांसवः संतताः पतन्ति तथा मृद्नाति. सेतुमेव कृत्वात्येतीति श्रुतेः ॥

पृथिव्या संभवेति सिकता लोष्टं वा मध्ये पारे च न्यस्यति। ११।

गतः ॥

एवं नाव्यासीनस्तरन्। १२।

नावमधिरुह्य तरन्नप्येवं लोष्टं विमृद्नाति न्यस्यति च ॥

अरणीभ्यामरणीभिरित्येके। १३।

गतः ॥

रथेन रथाङ्गेन वा न विप्रच्छिद्येत। १४।

रथरथाङ्गयोरन्यतरेण गार्हपत्यारणीभ्यामरणीभिर्वा सर्वाभिः पथि कदाचिन्न विप्रच्छिद्येत ॥

अथ देवयजनाध्यवसानमेके समामनन्ति। १५।

गतः ॥

य इहाध्यवस्येत्स प्रयायात्। य आदितो न स प्रयाति। १६।

यो ऽन्यत्र दीक्षित्वा ततो देवयजनमध्यवस्येत् स एव प्रयायात्। यस्त्वादावेव प्रयायाध्यवसितदेवयजनस्तत्र दीक्षितो न स ततः प्रयाति. देवयजनाध्यवसानार्थत्वात्प्रयाणस्य. तस्य च कृतत्वादिति भावः। बौधायनस्तु देवयजनदीक्षायामपि तत्र योगक्षेमाकृप्तौ देवयजनान्तराध्यवसानार्थं प्रयाणमनुमन्यते. यथाह. अथातः प्रयाणस्यैव मीमांसा. दीक्षितं वा अयोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षत इति ॥

नित्यानि देवयजनानि। १७।

वक्ष्यन्त इति शेषः ॥

इत्येकोनविंशी कण्डिका।

इति षष्ठः पटलः ॥

दक्षिणतऽउन्नतमुदीचीनावनतं प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम्। १।

स्वभावतो यदेवं तन्नित्यं देवयजनमित्यर्थः ॥

यत्र वा बहवो ब्राह्मणाः संराधयेयुः। २।

यत्र वा बहवो ब्राह्मणाः सदस्यवत्साक्षिणः संराधयेयुः साधु-ते-स्थलाय साधयेरन् तद्देवयजनं स्यात्। गुणान्तराभावे ऽपि गरीयसो ऽस्य

गुणस्य लाभादिति भावः । तथा च देवयजनाधिकारे ब्राह्मणं . विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा इति ॥

**अग्नयो वाव देवयजनम् । यत्र क्वचाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते । ३ ।**

यत्राग्नयः प्रतिष्ठाप्यन्ते तदेव देवयजनम् । अग्निसनाथस्य देशस्य का गुणापेक्षेति भावः ॥

**दक्षिणा वाव देवयजनम् । दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन एव यजत इत्येके । ४ ।**

दक्षिणाबाहुल्ये महागुणे सति देवयजनगुणाभावः क्रतोरकिंचित्कर इति भावः ॥

**पुरोहविषीति काम्यानि । ५ ।**

देवयजनानि पुरोहविषि देवयजन इत्यनुवाके ऽधीतानि यथाब्राह्मणमनुसंधेयानीत्यर्थः ॥

**निर्भ्रस्के ऽभिचरन्यजेत । ६ ।**

किमेतन्निर्भ्रस्कं* नाम । तदाह ॥

**यस्माद्वृक्षाद्वल्मीकानिति निर्हरेयुरथो अभिखनेयुः । ७ ।**

यस्माद्वृक्षादीन्निरंस्यापास्य तन्मूलानि च खात्वा देवयजनं कुर्युः तन्निर्भ्रस्कमि*त्यर्थः ॥

---

* Corrected according to the Sûtra-text; all MSS. of the commentary read निर्भ्रस्कं.

परोक्षं गुहा वने याजयेदभिशस्यमानम्। ८।

यमकर्तारं पातकस्य कर्तारमपदिशन्ति सोऽभिशस्यमानः। तं गूढे वने महाजनस्य परोक्षं याजयेत्॥

परोक्षं पृष्ठान्युपेयुः। सर्वमुपांशु क्रियेत। स्थले यजेत। ९।

तस्य पृष्ठान्यपि परोक्षमुपेयुः न स्वास्तृचु गायेयुः। मन्त्रं च साङ्गं प्रधानमुपांशु क्रियेत। समुच्छ्रितभूमौ यजेत॥

यः कामयेतोभयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति न प्राचीनं देवयजनाद्देवयजनमात्रमुच्छिंषेत्। १०।

उभयोर्लोकयोर्यः ख्यातिकामो यस्य पुरस्तादन्यस्य देवयजनाय पर्याप्तस्तद्देश्य देशो न लभ्येत तादृशं देवयजनं गृह्णीयात्। नित्यस्त्वयं गुणः कल्पान्तरकारमतात्॥

यत्रापो देवयजनं चान्तरेण पन्था अभिविधावेत्तस्मिन्याजयेद्यं कामयेत नैनमुत्तरो यज्ञ उपनमेदिति। ११।

यत्र देवयजनस्य देशस्य संनिकृष्टानां च जलाशयानां मध्ये महापथो याति तत्र याजयेदित्यर्थः॥

कौत्साद्राजानं क्रीणीयादन्यस्माद्वा ब्राह्मणादित्युक्ताद्वाप्यब्राह्मणादिति। १२।

कुत्सगोत्राद्ब्राह्मणात्क्रय: प्रशस्ततरः. तदनु ब्राह्मणान्तरात्. तदनु वर्णान्तरेभ्य इत्याह ब्राह्मणमित्यर्थः ॥

उत्तरवेदिदेश उपरवदेशे वा लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य दक्षिणे चर्मपक्षे राजानं निवपति। उत्तरस्मिन्नुपविशति सोमविक्रयी। १३।

अथ दीक्षासूपक्रांसु* उत्तरेद्युर्विसृष्टवाचि यजमाने राजानं निवपति ॥

उदकुम्भं राजानं सोमविक्रयिणमिति सर्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यः सोमा३ इत्युक्तम्।१४।

उदकुम्भमित्यनुषङ्गादासो ऽप्युपनिधेयः। श्रुतिश्च भवति. अपामन्ते क्रीणातीति। विचित्यः सोमा इत्युक्तमिति विचित्यः सोमा इत्यादिब्राह्मणे यद्विचारपूर्वकमुक्तं तत्तथा कर्तव्यमित्यर्थः। किं तत्र कर्तव्यतयोक्तम्। तदेव दर्शयति ॥

सोमविक्रयिन्सोमं शोधयेत्युक्त्वा पराङावर्तते।१५।

सोमविक्रयिणमेव सोमशोधनाय नियुज्य स्वयं पराङ्मुखः प्रतिनिवर्तते ॥

न †साम्येक्षमुपेयात्। न यजमानः सोमं विचिनुयात्। १६।

---

* Corrected; the MSS. °क्रमासु.

† AN clearly सांमेक्षमु°.

पराङावृत्तः शोध्यमानस्य राज्ञः साम्येक्षं नोपेयात्. कटाक्षेणेक्षेतेत्यर्थः। साम्येक्ष्यमिति पाठे सामि स्तोकमीक्षत इति साम्येक्षः. तस्य भावः साम्येक्ष्यं. तन्नोपेयादिति॥ तृणाद्यपनयनेन शोधनं विचयनम्॥

नास्य पुरुषो नाध्वर्युर्नाध्वर्युपुरुषः। १७।

विचिनुयादिति सर्वत्रान्वयः। सहप्रवृत्तिसंभवादत्र यजमानादीनां निषेधः। अध्वर्युग्रहणमादरार्थम्॥

राज्ञो विचीयमानस्योपद्रष्टारः स्युः। १८।

एते तु समीपस्थिताः पश्येयुः. तदपि नाध्वर्युः करोति. पराङावर्तत इति वचनात्। केचित्तु नोपद्रष्टारः स्युरध्वर्य्वादय इति योजयन्ति। तदयुक्तं. अस्मिन्वाक्यानन्तरश्रवणात्. प्रकृतानां विचयननिषेधार्थत्वात्. पूर्ववाक्यैः सहास्य समन्वयवैयर्थ्याच्च॥

अहं त्वदस्म्याजुह्वान इत्येताभ्यामाहवनीयं यजमान उपतिष्ठते। १९।

गतः॥

इति विंशी कण्डिका।

प्रायणीयायास्तन्त्रं प्रक्रमयति। १।

प्रतिपद्यन्तेऽनया यज्ञं दीक्षिता इति प्रायणीया। तन्त्रं बर्हिराहरणादि॥

वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। २।

वेदानन्तरं परिस्तरणनियमेन पौर्णमासविकारता तन्त्रस्य प्रदर्श्यते. इतरथा वेदानन्तर्यानियमात्परिस्तरणस्य॥

यथार्थं पात्राणि प्रयुनक्ति। स्थालीं कपालानां स्थाने। ३।

गतः॥

निर्वपणकालेऽदित्यै पयसि चरुः प्रायणीयः। ४।

निर्वपणकालेऽदित्यै पयसि चरुः कार्यः स च प्रायणीय इत्यनूदितः। तत्प्रायणीय इति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम्॥

प्राक् संप्रैषात्कृत्वा पत्नीवर्जं संप्रेष्यति। ५।

संनहनप्रतिषेधादेव सिद्धे पत्नीवर्जनवचनं विस्पष्टार्थम्। तस्याश्च सोमार्थमासीनत्वादासनमन्त्रनिवृत्तिः। अत एव देशान्तरोपवेशने पुनर्मन्त्रजपं वक्ष्यति. पत्नी शालामुखीयमुपोपविश्य सुप्रजसस्त्वा वयमिति जपतीति॥

याः कृतायां वेद्यां चोद्यन्ते सैव तासां वेदिः। याः स्तीर्णे बर्हिषि तदेव तासां बर्हिः। ६।

याः कृतायां महावेद्यामिष्टय उत्पद्यन्ते पशवो वा सैव तासां वेदिः स्यात्. न त्वन्या दार्शिकी पाशुकी वा कार्या। याः पुनर्बर्हिष्यास्तीर्ण उत्पद्यन्ते तासां बर्हिरपि तदेव, सोमार्थयोरेव प्रसङ्गात्।

यथा आग्निक्या वैश्वानरीयादिर्वेदिः सौम्यचरोः. सवनीयस्य सवनीयानां च बर्हिरपीत्यादि ॥

आज्यग्रहणकालेऽननूयाजे प्रायणीये चतुर्जुह्वां गृह्णाति। चतुरुपभृति समानयनार्थम्। ७।

पाक्षिकीमननूयाजतां प्रायणीयस्य दर्शयिष्यति। तत्रोपभृत्यपि चतुः पञ्चकृत्वो वा प्रयाजार्थं प्रथमग्रहणमेव गृह्णाति. न द्वितीयमनूयाजार्थमित्यर्थः ॥

अप्रयाज उदयनीये न जुह्वां गृह्णाति। चतुरुपभृत्यनूयाजार्थम्। ८।

अत्रैव प्रसङ्गात्समानब्राह्मणीयत्वाच्च उदयनीयस्यापि विधिः प्रदर्श्यते। तस्याप्रयाजत्वपक्षे द्वितीयमेव ग्रहणमुपभृति गृह्णाति. न प्रथमम्। न जुह्वां गृह्णाति. यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति लिङ्गादिति भावः। स्रुच्याघारस्तु ध्रौवेण कार्यः ॥

पङ्क्तौचा प्रायणीयमासादयति। ९।

चरुमिति शेषः ॥

प्रयाजवदननूयाजमित्युक्तम्। १०।

ब्राह्मणे प्रायणीयस्याननूयाजत्वं उदयनीयस्याप्रयाजत्वं उभयस्योभयत्वं च विकल्पेनोक्तमनुसंधातव्यमित्यर्थः। तत्र यदाननूयाजः प्रायणीयस्तदा विंशतिदारुरिध्मः कार्यः ॥

**चतुर आज्यभागान्प्रतिदिशं यजति। पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतः। मध्ये ऽदितिं हविषा। ११।**

चतुर आज्यभागानिति सरस्वत्याज्यभागेतिवत् द्रव्यचोदना. न त्वाज्यभागकर्मविवृद्धिविधिः. मध्ये ऽदितिं हविषेति व्यतिरेकवचनात्. पञ्च देवता यजतीति पञ्चानां प्राधान्यश्रुतेश्च। अतः पृथगाज्यभागाभ्यामिष्ट्वोपांशुयाजधर्मेणैताश्चतस्रो देवता यष्टव्याः। अथाज्यभागाविष्ट्वेत्येव कात्यायनः। अन्यत्तु मतं. आज्यभागदेवतयोरेतास्वन्तर्भावात्. चक्षुषी वा एते यज्ञस्येत्याज्यभागसाम्यात् न पृथगाज्यभागौ भवत इति। भारद्वाजश्चाह. आज्यभागाविष्ट्वा यजेतेत्याश्मरथ्यः. तास्वेतौ भवत इत्यालेखन इति। तथा शंय्वन्तेयमनाज्यभागेत्याश्वलायनः। अत्रैव शाखान्तरीयं विधिमाह ॥

**अदितिमिष्ट्वा मारुतीमृचमनूच्याज्येन चरुमभिपूर्यैता देवता यजति। ध्रौवाद्वा। स्विष्टकृतं षष्ठम्। १२।**

मरुतो यद्ध वो दिव इति प्रतिपदोक्ता मारुती बौधायनेन। प्रथममेवादितिमिष्ट्वा मारुतीमृचमनूच्य तत आज्येन चरुमभिपूर्य तस्माद्धौवाद्वा गृहीत्वैता देवता यजति. ततः स्विष्टकृतमित्यर्थः। तत्र तु स्विष्टकृतं षष्ठमिति नित्यानुवादः प्राप्तत्वात्। पूर्वस्मिंस्तु कल्पे ब्राह्मणोक्तापि मारुत्यनुक्ता. मन्त्रसमाम्नाये ऽनाम्नानादिति द्रष्टव्यम्। तथा च सत्याषाढभारद्वाजाभ्यामपि तमेव कल्पमुक्त्वानुक्तैव मारुती। अथापरा व्याख्या। यथोक्तमेवादितिमिष्ट्वा मारुतीमृचमनूच्य शंय्वन्ता संस्थाप्या वेति वक्ष्यमाणेन संबन्धः। अथाज्येन चरुमित्यादिना

सर्वेषामाज्यविकल्प उच्यते. यथा चरुगताज्येन चैताः पञ्च देवता यजति स्विष्टकृतं च षष्ठमिति। तत्रादितिस्विष्टकृतोरुपस्तरणाभिघारणार्थत्वेनाज्यान्वयो ऽवगन्तव्य इति ॥

**शंय्वन्ता संस्थाप्या वा। १३।**

शंय्वन्ता संस्थावान्ता संस्थाप्या वा कृत्स्नसंस्था ॥

**पत्नीस्तु न संयाजयेत्। १४।**

संस्थाप्यपक्षे स्रुग्विमोकात्परः आज्येडान्तो विधिर्निवर्तते ॥

**ता उदयनीये संयाजयेत्। १५।**

उदयनीये तु संस्थाप्ये न निवर्तते ॥

**उभे वा कार्ये। १६।**

उभे वा इष्टी पत्नीसंयाजवत्यौ तद्रहिते वा कार्ये इत्यर्थः ॥

**धारयति ध्रौवमाज्यम्। १७।**

ध्रौवधारणवचनात्संस्थाप्यपक्षे ऽपि समिष्टयजुर्न क्रियते ॥

**प्राग्वंशे बर्हिः स्थालीमनिष्कासितां मेक्षणमित्युदयनीयार्थं निदधाति। १८।**

बर्हिः प्रस्तरादन्यत्. तस्य प्रहृतत्वात्। अनिष्कासितां असृष्टलेपाम्। चर्वालोडनदर्वी मेक्षणं. तदप्यनिष्कासितमेव निदधाति ॥

इत्येकविंशी कण्डिका।

इति सप्तमः पटलः ॥

प्रायणीयाया ध्रौवादष्टौ जुह्वां चतुरो वा गृहीत्वा तस्मिन्दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वावदधातीयं ते शुक्र तनूरिति। १।

अष्टौ चतुरो वा स्रुवानिति शेषः। निष्टर्क्यं शिखाकृतिग्रन्थिः। पूर्ववद्ध्रुवाप्यायनं द्रष्टव्यम्॥

पुरस्तात्प्रतीची सोमक्रयण्यवस्थिता भवत्येकहायनी द्विहायनी वर्षीयसी वा। २।

गौरिति शेषः॥

अकूटयाकर्ण्येति रूपाणि। ३।

अकूटत्वादीनि गोरूपाणि यथाब्राह्मणमनुसंधेयानीति शेषः। तत्र कूटत्वादीनि पशौ व्याख्यातानि। तथा श्वेतां कृष्णामुभयरूपां च निन्दित्वा तत उक्तं ब्राह्मणे, अरुणया पिङ्गाक्ष्या क्रीणातीति। तदप्यनुसंधेयम्॥

या रोहिणी बभ्रुलोम्नी पृश्निवाला पृश्निशफा शुच्यक्षी श्वित्रोपकाशा तया क्रीणीयादित्येके। ४।

रोहिणी स्वतो रक्तवर्णा। बभ्रुलोम्नी नानावर्णैर्लोमभिः क्वचित्क्वचिदुपेता। पृश्निवाला श्वेतपृषत्कलापा। शुच्यक्षी श्वित्रोपकाशा श्वित्रसमानवर्णा अपाङ्गप्रदेशे। या त्वेवंभूता सा अरुणया पिङ्गाक्ष्या विकल्पते॥

द्विरूपया राजन्यस्य। ५।

द्विरूपा श्वेतकृष्णरूपा पूर्ववत् ॥

**शुण्ठयाधीलोधकर्ण्या षोडशिनः । ६ ।**

शुण्ठा अल्पकाया । कर्णस्योपरि विचितं यस्याः सा अधीलोधकर्णी* ॥

**तदाज्यं सोमक्रयणीमीक्षमाणो जुहोति जूरसीति। ७।**

तदष्टगृहीतं चतुर्गृहीतं वा ॥

**अपरं चतुर्गृहीतं गृहीत्वा शुक्रमसीति हिरण्यं पश्चादुद्धृत्य वैश्वदेवं हविरित्याज्यमवेक्ष्य सूर्यस्य चक्षुरारुहमित्यादित्यमुपस्थाय चिदसि मनासीति सोमक्रयणीमभिमन्त्रयते । ८ ।**

गतः ॥

**अकर्णगृहीतापद्विबद्धा भवति । ९ ।**

सा त्वकर्णगृहीता अपद्विबद्धा भवति. यत्कर्णगृहीता यत्पद्विबद्धेति दोषश्रुतेः। यदि केवलानेतुं न शक्येत ग्रीवादौ गृहीता बद्धा वानीयते ॥

---

* This passage has been restored conjecturally; for all MSS. are so corrupt and differ so much from each other, that the error which originated from the inexplicable word अधीलोधकर्णी (cf. Taitt. S. 5. 6. 16. 1) may probably be traced back to the codex archetypus. The readings of my MSS. are: b कर्णस्योपरि कर्णाधि (धी originally) च्छिषा यस्याः साधीलोधकर्णा, g कर्णस्योपरि विचिता यस्याः साधीलोधकर्णा, ik कर्णस्योपरि करणिका यस्याः साधीलोधकर्णा, l कर्णस्योपरि कर्णा अधालोधकर्णा.

मित्रस्त्वा पदि बध्नात्विति दक्षिणं पूर्वपादं प्रेक्षते । पूषाध्वनः पात्विति प्राचीं यतीमनुमन्त्रयते । १० ।

गतौ ॥

षट् पदान्यनुनिष्क्रामति दक्षिणेन पदा दक्षिणानि वस्व्यसि रुद्रासीत्येतैः प्रतिमन्त्रम् । ११ ।

सोमक्रयण्या निष्क्राम्यमाणानि दक्षिणस्य पूर्वपादस्य षट् पदानि पश्चादध्वर्युरपि निष्क्रामति ॥

एकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वान्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु चत्वारि मयोभवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्वेतु षड्रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेत्विति निष्क्रम्यमाणेषु यजमानोऽनुवर्तयित्वा । १२ ।

इति द्वाविंशी कण्डिका ।

---

सखायः सप्तपदा अभूम सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठा इति सप्तमे पदे जपति । १ ।

अनुवर्तनं आनुपूर्व्येण वचनं, यथा सर्वेष्वाधानेषु यजमानोऽनुवर्तयत इत्यादौ । सोमक्रयण्या निष्क्रम्यमाणेषु सप्तसु पदेषु एकैकमेतान्मन्त्रान्यजमान उक्त्वा सप्तमे पदे सखाय इत्यपि जपतीत्यर्थः ॥

बृहस्पतिस्त्वा सुम्ने रण्वत्विति सप्तमं पदमध्वर्युरञ्ज-लिनाभिगृह्य पदे हिरण्यं निधाय पृथिव्यास्त्वा मूर्ध-न्नाजिघर्मीति हिरण्ये हुत्वापादाय हिरण्यं देवस्य त्वा सवितुः प्रसव इति स्फ्यमादाय परिलिखितं रक्षः परिलिखिता अरातय इति त्रिः प्रदक्षिणं पदं परिलि-खति यावद्धृतमनुविसृतं भवति । २ ।

यावन्निसृतं तावद्देशं परितो लिखति। अत्र किंदेवत्या खलु पदा-हुतिर्भवतीति प्रकृत्य वाग्देवत्येत्येव ब्रूयादिति बौधायनः ॥

कृष्णविषाणया चानुपरिलिख्यास्मे राय इति स्थाल्यां यावत्सभूतं समोप्य त्वे राय इति यजमानाय प्रय-च्छति । ३ ।

यजमानप्रत्तया कृष्णविषाणया तूष्णीं परिलिखति. मन्त्रानतिदे-शात्। तूष्णीमित्येव सत्याषाढः। यावत्सभूतं यावद्धृतेनोपमिश्रम् ॥

तोते राय इति पत्न्यै । ४ ।

यजमानः प्रयच्छतीति शेषः. अर्धो वा एष आत्मनो यत्पत्नी. यथा गृहेषु निधत्त इति लिङ्गात्। यजमानः पत्न्या इत्येव कल्पा-न्तरकाराः। पत्न्यनेकत्वे ऽपि महिष्याः प्रयच्छति निधानार्थत्वात् ॥

माहं रायस्पोषेण वियोषमिति पत्नी पदं प्रदीय-मानमनुमन्त्रयते । ५ ।

गतः ॥

सं देवि देव्योर्वश्या पश्यस्वेति सोमक्रयण्या पत्नीं संख्यापयति। ६।

संख्यापयति दर्शयति। अत्रानेकासामपि तन्त्रेण संख्यापनं विभुत्वात्॥

त्वष्टीमती ते सपेयेति पत्नी सोमक्रयणीमभिमन्त्रयते। ७।

सर्वाः पत्न्यो ऽनुमन्त्रयन्ते॥

त्वष्टुमन्तस्त्वा सपेमेति यजमानः। ८।

सोमक्रयणीमनुमन्त्रयत इत्यन्वयः॥

यतः पदमपात्तं तस्मिन्सहिरण्यौ पाणी प्रक्षाल्योन्नभ्य पृथिवीमित्यद्भिरुपनिनीय पदं त्रैधं विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शीते भस्मन्युपवपति। तृतीयमाहवनीयस्य। तृतीयं पत्न्यै प्रयच्छति। ९।

गतः॥

तत्सा गृहेषु निदधाति। १०।

गृहेषु स्वावासस्थानेषु॥

इति त्रयोविंशी कण्डिका।

अथादित्योपस्थानं राज्ञश्च निवपनादि कर्मैके समामनन्ति। १।

सूर्यस्य चक्षुरित्यादित्योपस्थानमत्र कृत्वा ततो राज्ञो निवपनादि शोधनान्तं कर्मेत्येकेषाम् ॥

अपि पन्थामगस्महीत्युद्धृतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति। २।

उद्धृतपूर्वभागस्थफलकेन कटादिभिरुपरिष्टाच्छादितेनानसा सह न्युप्तं सोममभिमुखा गच्छन्ति अध्वर्युब्रह्मयजमानाः ॥

शीर्ष्णा गिरौ क्रीतं हरन्ति। ३।

यदि हि गिरौ देवयजनं स्यात्तत्र क्रीतं शीर्ष्णा हरन्ति. नानसेत्यर्थः। कुत एतदिति चेत् देवयजन एव क्रयवचनात् ॥

अपरेणोत्तरेण वा राजानं प्रागीषमुदगीषं वा नद्धयुगं शकटं चुबुकप्रतिष्ठितम्। ४।

ईषाग्रे नद्धयुगं मुखेन भूमौ प्रतिष्ठितं भवति ॥

अंशुना ते अंशुः पृच्यतामिति यजमानो राजानमभिमन्त्रयते। ५।

गतः ॥

यं कामयेतापशुः स्यादित्यृक्षतस्तस्येत्युक्तम्। ६।

ऋक्षतः विशसनभागे चर्मणः सोममानमपशव्यं. लोमभागे पशव्यमित्युक्तं ब्राह्मणे। तस्माल्लोमभाग एव मिमीत इत्यर्थः ॥

क्षौमं वासो द्विगुणं त्रिगुणं वा प्रागृदशमुत्तरदशं चर्मण्यास्तृणाति। उदग्दशं वा। ७।

उत्तरदशं उपरिदशम् ॥

तस्मिन्हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांशून्संगृह्यान्यचन्नभि त्यं देवं सवितारमित्यतिच्छन्दसर्चा मिमीते। ८।

अन्यचन् अङ्गुल्यङ्गुष्ठावनाकुञ्चयन्. प्रसारिताभ्यामेव ताभ्यां यावद्गृहीतुं शक्यं तावन्मिमीत इत्यर्थः ॥

एवमेकयैकयोत्सर्गम्। ९।

उत्सृज्योत्सृज्य पूर्वपूर्वाङ्गुलिं क्रमादुत्तरोत्तरयैकैकयैव मिमीते ॥

सर्वास्वङ्गुष्ठमुपनिगृह्णाति। १०।

गतः ॥

यया प्रथमं न तया पञ्चमं तयैवोत्तमम्। ११।

द्वितीये ऽङ्गुलिपर्याये कनिष्ठिकातो ऽन्ययैकं मुष्टिं मीत्वा ततः कनिष्ठिकात एवारभ्यान्तान्मीत्वा पुनः कनिष्ठिकया समापयतीत्यर्थः ॥

पञ्चकृत्वो यजुषा मिमीते। पञ्चकृत्वस्तूष्णीम्। १२।

यजुरित्यतिच्छन्दसो ऽभिधानं याजुर्वेदिकत्वात् ॥

एवं द्विस्त्रिरपरिमितकृत्वो वा। १३।

यत्राहर्गणादिवशादपर्याप्तः सोमः स्यात्तत्र यावदर्थमावृत्तिः ॥

प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूह्य क्षौमेण वाससोपसंगृह्य प्राणाय त्वेति द्विगुणेनोष्णीषेणोपनह्य व्यानाय त्वेति विस्रस्यावेक्षते प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्त्विति । १४ ।

क्षौमेण तूष्णीं सोममुपसंगृह्य समुच्छ्रित्य क्षौमान्तान्प्राणाय त्वेत्यनेन दीर्घशाटकेनावेष्ट्य व्यानाय त्वेति किंचिद्विस्रस्य प्रजास्त्वमित्यवेक्षते ॥

एष ते गायत्रो भाग इत्येतैर्यजमानो राजानमुपतिष्ठते । १५ ।

एष ते त्रैष्टुभ एष ते जागत इति द्वितीयतृतीयौ मन्त्रौ ॥

इति चतुर्विंशी कण्डिका ।

देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूमस्तं त्वं विश्वेभ्यो देवेभ्यः क्रतून्कल्पय दक्षिणाः कल्पय यथर्तु यथादेवतमित्यादित्यमुपस्थाय सोमविक्रयिणे राजानं प्रदाय पणते । १ ।

उपनद्धमेनं सोमं सोमविक्रयिणे दत्त्वा पणते तेन सह व्यवहरते ॥

सोमविक्रयिन्क्रय्यस्ते सोमा इति । २ ।

पृच्छतीति शेषः । पणनोपोद्घातः प्रश्नः सः ॥

क्रय्य इतीतरः प्रत्याह । ३ ।

गतः ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तमित्युक्त्वा कलया ते क्रीणानीत्येनमाह । ४ ।

कला जङ्घाया अधोभागः ॥

भूयो वा अतः सोमो राजार्हतीति सर्वेषु पणनेषु सोमविक्रयी प्रत्याहासंपदः । ५ ।

आ क्रयसंपदः ॥

कुष्ठया ते क्रीणानीति द्वितीयम् । शफेन ते क्रीणानीति तृतीयम् । पदा ते क्रीणानीति चतुर्थम् । ६ ।

कुष्ठा कलाया अधोभागः । शफः खुरः ॥

एवं त्रिः । ७ ।

एवं कलादीनां पणनपर्यायस्य त्रिरभ्यासः कार्यः ॥

एकैकशो वा त्रिस्त्रिः । ८ ।

गतः ॥

गवा ते क्रीणानीत्यन्ततः । ९ ।

एवमवयवशः सोमक्रयः स्यात् । क्रीतान्ततः समुदायेन क्रीणाति गवा ते क्रीणानीति ॥

अपि वा न गवेति ब्रूयात्। एषेति निर्दिश्य जपति तस्या आत्मा तस्या रूपं तस्याः प्रजा तस्याः पयस्तस्या बन्धुरिति। १०।

अपि वा न समुदायक्रये गवा ते क्रीणानीति ब्रूयात्। एषेति सोमक्रयणीमेव दर्शयित्वा तस्या आत्मेति जपति। जपस्त्वयं गवा ते क्रीणानीति वचनकल्पेऽपि भवत्येव. समुदायक्रयविशेषत्वात्। ब्राह्मणे यत्कलया ते शफेन ते क्रीणानीति पणेतेति कलाशफाभ्यामवयवक्रयं प्रस्तुत्य तन्निन्दित्वा गवा ते क्रीणानीत्येव ब्रूयादिति समुदायक्रय एव स्तुतः। सूत्रकारेण तु शाखान्तरमुपसंहरता कलाद्यवयवचतुष्टयक्रयसहितः समुदायक्रयश्चोदितः. स एवानुसर्तव्यः। सत्याषाढकात्यायनाभ्यामयमेव कल्पो दर्शित इति द्रष्टव्यम्॥

शुक्रं ते शुक्रेण क्रीणामीति जपित्वा हिरण्येन क्रीणाति। ११।

नात्र कलादिवद्धिरण्येन ते क्रीणानीति क्रयवाक्येन क्रेतव्यं. मन्त्रेण द्रव्यक्रययोः प्रकाशनात्॥

तपसस्तनूरसीति जपित्वाजया क्रीणाति। १२।

पूर्वेण व्याख्यातः. चरमेण पशुना क्रीणामीति मन्त्रवर्णात्॥

अवशिष्टानामेकैकेन। १३।

अवशिष्टानां ब्राह्मणोक्तानां धेनूषभानडुन्मिथुनवाससामेकैकेन द्रव्येण क्रीणाति। तेषु तु धेन्वा ते क्रीणानीत्यादीनि क्रयवाक्यानि

णः. द्रव्यक्रययोर्मन्त्रेणाप्रकाशनात्। तथापठदेव सत्याषाढः। धेन्वा सवत्सया क्रयः. स्तनंधयस्य मात्रनुवृत्तिस्वारस्यात्. इतरथा दश संपद्यन्त इत्यन्ते निगमनविरोधाच्च॥

**यद्वृषभेण क्रीणीयात्प्रजापतिना क्रीणीयात्। तत्स्थाने वत्सतरः साण्डः। १४।**

वृषभस्थाने साण्डो वत्सतरः शाखान्तरीयो विकल्प्यते। साण्डेनेत्येकेषामित्येव सत्याषाढः। स्तनोपरतो वत्सतरः॥

**मिथुनाभ्यामिति वत्सतरो वत्सतरी च। १५।**

ब्राह्मणे मिथुनाभ्यां क्रीणातीत्यत्रैतन्मिथुनमभिप्रेतमित्यर्थः॥

**ताभ्यां युगपत्क्रीत्वा वाससान्ततः संपादयति। १६।**

तयोर्नानाद्रव्यत्वे ऽपि मिथुनाभ्यां वत्सतरवत्सतरीभ्यां क्रीणातीति युगपत्क्रीत्वा वाससा गवादिद्रव्यसमुच्चितेनान्ततः क्रयं निर्वर्तयति। न तत्र भूयो वा अत इति प्रत्याह॥ सो ऽयं दशद्रव्यविधिरविशेषचोदनादसति वैशेषिकद्रव्यविधौ सर्वत्रैवोपतिष्ठत इति॥

इति पञ्चविंशी कण्डिका।

**दशभिर्द्वादशशतदक्षिणस्य। १।**

तत्र द्वादशशतदक्षिणस्य तावत्क्रतोर्दशभिरेव द्रव्यैः क्रय इत्यर्थः॥

**भूयसा वा। २।**

दशभ्यो भूयसा वा द्रव्येण॥

चतुर्भिर्वा गवा हिरण्येन वाससाजयेत्येकेषाम्। ३।

दशभिर्वा द्रव्यैश्चतुर्भिर्वेत्येकेषां शाखा। गवादिचतुष्टयमप्युपदिशति। तेनात्र दशभिर्द्रव्यैश्चतुष्टयमप्येवं विकल्प्यत इत्यर्थः। व्यक्तोक्तं चैतद्भारद्वाजसत्याषाढाभ्यां. यथा दशद्रव्यविध्यनन्तरमाहतुः*. चतुर्भिरेके समामनन्ति गवा हिरण्येनाजया वाससेत्यादि ॥

एकयैकविंशतिदक्षिणस्य। तिसृभिः षष्टिदक्षिणस्य। अपरिमिताभिरपरिमितदक्षिणस्य। ४।

गोभिरिति शेषः। सर्वत्राद्या सोमक्रयणी स्यात्। अतस्तिसृभिः क्रये तया यथोक्तं क्रीत्वा ततो द्वाभ्यां गोभ्यां ते क्रीणानीति क्रयः। एवमुत्तरत्रापि द्रष्टव्यम् ॥

चतुर्विंशत्या सहस्रे सर्ववेदसे वा। ५।

सहस्रदक्षिणे सर्वस्वदक्षिणे च क्रतावित्यर्थः ॥

त्रिंशता वा सहस्रदक्षिणस्य। ६।

तयोः सहस्रदक्षिणस्य त्रिंशदपि विकल्प्यते ॥

सप्तविंशतिर्गा† हिरण्यं छागा वास इति त्रिंशत्। ७।

त्रिंशत्पक्षे सप्तविंशतिर्गावो हिरण्यादीनि च त्रीण्येव त्रिंशत्संपत्तिः. न तु सर्वा गाव इत्यर्थः। छागा अजा ॥

---

* Corrected; the MSS. read ॰रमाह.

† Thus (गाः nom. plur.) all MSS.

शतेन वाजपेयस्य । द्वाभ्यां राजसूयस्य । ८ ।

द्वाभ्यामिति शताभ्यामिति शेषः ॥

सहस्रेणाश्वमेधस्य । ९ ।

गतः ॥

अस्मे चन्द्राणीति सोमविक्रयिणो हिरण्यमपादत्ते । १० ।

प्रत्तं हिरण्यं प्रत्यादत्ते ॥

अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति । तां स काले दशापवित्रस्य नाभिं कुरुते । ११ ।

ऊर्णास्तुका प्रागेव व्याख्याता ॥

शुक्लं बलज्याः पवित्रममोतं भवति । १२ ।

तद्दशापवित्रं बलज्याः शुक्लाया अवेरूर्णाभिः सूत्रीकृताभिरमोतं सहोतं भवति, तच्छुक्लं भवतीत्यर्थः । ऊर्णामिश्रतन्तुभिरुतमित्येके ॥

यं द्विष्यात्तस्य कृष्णां लोहिनीं च पवित्रे कुर्यात् । १३ ।

कृष्णाभिरेकं लोहिताभिश्चैकमित्यर्थः ॥

कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वेदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति । १४ ।

विध्यति तस्मिन्निपति ॥

स्वान भ्राजेति सोमक्रयणाननुदिश्य स्वजा असि स्वभूरस्यस्मै कर्मणे जात ऋतेन त्वा गृह्णाम्यृतेन मा पाहीति सोमविक्रयिणो राजानमपादत्ते । १५ ।

सोमक्रयणाननुदिश्येति स्वान भ्राजेति गन्धर्वगणः, तदर्थतया क्रयद्रव्याणि संकल्पयेदित्यर्थः । तदेकया क्रये ऽप्येषा वः सोमक्रयणीत्यूहति ॥

यदि कृच्छ्रायेतापैव हरेत । १६ ।

यदि तु सोमविक्रयी पुनर्लिप्सयादाने कृच्छ्रायेत क्लिश्येत बलाद्धरेतैव ॥

अच यजमानो ऽपोर्णुते । १७ ।

इति षड्विंशी कण्डिका ।

वयः सुपर्णा इति । १ ।

अपोर्णुते अपावृणोति अंसशिरसी । तत्राङ्गिरभ्युच्य कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छतीति बोधायनः ॥

दीक्षितदण्डं च मैत्रावरुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छाम्यवक्रो ऽविधुरो भूयासमिति । २ ।

गतः ॥

मित्रो न एहीति यजमानो राजानमादायेन्द्रस्योरुमाविशेति दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते। ३।

असंदेहार्थं पुनर्यजमानग्रहणम् ॥

अत्रादित्योपस्थानं दण्डप्रदानं सोमक्रयणानामनुदेशनमेके समामनन्ति। ४।

अयमपि सूर्यस्य चक्षुरारुहमित्यस्यैवोपस्थानस्य कालविकल्पः. न देव सूर्येत्यस्य. अन्यथा क्रेष्याम इति लिङ्गविरोधात् ॥

रुद्रस्त्वावर्तयत्विति प्रदक्षिणं सोमक्रयणीमावर्त्यान्यया गवा निष्क्रीय यजमानस्य गोष्ठे विसृजति। ५।

गतः ॥

यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वरत्राकाण्डेनावक्षायं नाशयेयुः। ६।

यदि नैनं दास्यामीति प्रतिविवदेत तदा बिन्दुमता चर्मरज्जुकाण्डेन ताडयित्वा परोक्षं गमयेयुः ॥

लकुटैर्घ्नन्तीत्येके। ७।

लकुटैः काष्ठखण्डैः घ्नन्ति प्रहरन्ति ॥

नित्यवदेके वधं समामनन्ति। ८।

वधः प्रहारः ॥

उदायुषा स्वायुषेति यजमानो राजानमादायोत्यायोर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति । ९ ।

उदायुषेत्युत्थानमन्त्रः तल्लिङ्गात् ॥

अदित्याः सदो ऽसीत्यध्वर्युः शकटनीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्यादित्याः सद आसीदेति तस्मिन्राजानमासाद्य वनेषु व्यन्तरिक्षं ततानेति वाससा पर्यानह्योदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ।१०।

नीडं उपरिदेशः। अदित्याः सद आसीदेति यजुषा अस्तभ्नाद्यामित्यृचा चासादयति. द्वयोरप्यासादनलिङ्गत्वात्. उत्तरस्यादिनेति च न्यायात् वारुण्यर्चासादयतीति श्रुतेश्च। वनेषु व्यन्तरिक्षं ततानेति वाससान्येन परितो नह्यति राजानं. कृष्णाजिनं पुरस्ताद्द्वारप्रदेशे बध्नाति. शकटद्वारं पिदधातीत्येव सत्याषाढः ॥

इति सप्तविंशी कण्डिका ।

इति नवमः पटलः ॥

अथ दर्शपूर्णमासवद्धुरावभिमृश्य वारुणमसीति शकटमाखिद्य वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्य वरुणस्य स्कम्भनमसीति शम्यां प्रतिमुच्योस्रावेतं धूर्षाहावित्यनड्वाहावु-

पाश्य वारुणमसीति योक्त्रपाशं परिहृत्य प्रत्यस्तो वरुणस्य पाश इत्यभिधानीं प्रत्यस्यति। १।

दर्शपूर्णमासवदिति मन्त्रातिदेशः। द्वयोर्धुरोरावृत्तिर्मन्त्रस्य। आखेदनं उद्यमनम्। उपस्तम्भनं काष्ठे ऽवस्थापनम्। शम्यायाः प्रतिमोचनं अभिनिहितयोक्त्रपाशे युगच्छिद्रे ऽवधानं. तद्वितीयस्याप्यावर्तते। उपाजनं प्रतिनयनं. तद्युगपत्क्रियते. द्विवचनलिङ्गत्वान्मन्त्रस्य। परिहरणं परितःकर्षणम्। अभिधानीप्रत्यसनं योक्त्रस्यैव युगे बन्धनं. अभिधान्यन्तराभावात्। शिरोबन्धनमप्यस्तीति केचित्॥

एवमुत्तरमनड्वाहं युनक्ति। २।

एवं परिहरणप्रत्यसनाभ्यामित्यर्थः॥

हरिणी शाखे बिभ्रत्सुब्रह्मण्यो ऽन्तरेषे व* सर्पति। पलाशशाखे शमीशाखे वा। ३।

हरिणी हरिते॥

अथाध्वर्युः शकटमन्वारभ्य संप्रेष्यति सोमाय राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति। ४।

गतः॥

---

* Thus all MSS. instead of इव; cf. ईषान्तरे Kâty. S'r. 7. 9. 14.

सर्वासु सुब्रह्मण्यासु सुब्रह्मण्यमन्वारभ्य यजमानो जपति सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः। सासि सुब्रह्मण्ये तस्यास्ते ऽन्तरिक्षं पादः। सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः। सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः। परोरजास्ते पञ्चमः पादः। सा न इषमूर्जं धुक्ष्व तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यमिति। ५।

सर्वासु कालभेदभिन्नासु॥

एवं चिराहूतामाहूताम्। ६।

एकैकस्यां सुब्रह्मण्यायां चिराहूयमानायामाहूतामाहूतां प्रति सकृत्सकृज्जपन्नेव त्रिर्जपतीत्यर्थः॥

प्रथमायां चिरनूक्तायाम्। ७।

इत्यष्टाविंशी कण्डिका।

---

प्रच्यवस्व भुवस्पत इति प्राञ्चो ऽभिप्रयाय प्रदक्षिणमावर्तन्ते। १।

अध्वर्युब्रह्मयजमाना इति शेषः॥

श्येनो भूत्वा परापतेत्यध्वर्यू राजानमभिमन्त्रयते। २।

गतः॥

अपि पन्थामगन्महीत्यध्वर्युर्यजमानश्च दक्षिणेनोत्त-रेण वा राजानमतिक्रामतः। ३।

आवृत्ते शकटे राजानमतीत्य गच्छतः॥

अजेनाग्नीषोमीयेण कर्णगृहीतेन यजमानो राजा-नमोह्यमानं प्रतीक्षते नमो मित्रस्येति। ४।

अजेन सह प्रतीक्षते। अजेन इत्थंभूतेन* वा॥

लोहस्तूपरो भवति। अप्यतूपरः। कृष्णसारङ्गो लोहितसारङ्गो वा। ५।

लोहः लोहितः। तूपरः अशृङ्गः। कृष्णसारङ्गः कृष्णश्वेतः॥

स्थूलः पीवा श्मश्रुणः। ६।

पीवा पीनाङ्गः। श्मश्रुणः श्मश्रुणा युक्तः॥

औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्न-पादा मौञ्जविवाना। तां सर्वे ऽध्वर्यवो ऽग्रेण प्राग्वंशं राजन्योह्यमान उद्गृह्णन्ति। ७।

शीर्षण्ये शिरस्ये फलके, अनूच्ये प्राच्यौ। तावरत्निमात्रे यस्याः सा अरत्निमात्रशीर्षण्यानूच्या। मौञ्जैस्तृणैर्विवानं यस्याः सा मौञ्जवि-वाना, मौञ्जीभी रज्जुभिः स्यूतेत्यर्थः॥

अग्नीन्प्रज्वलयन्ति। अग्निमग्नी वा। ८।

---

* I) इत्थंभूतो.

परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थं बहुवचनम् ॥

अग्रेण प्राग्वंशं प्रागीषमुदगीषं वा शकटमवस्थाप्य पूर्ववदाखिद्योपस्तभ्य वरुणस्य स्कम्भनमसीति शम्यामुद्वृह्य विचृत्तो वरुणस्य पाश इति योक्त्रपाशं विचृत्योन्मुक्तो वरुणस्य पाश इत्यभिधानीमुन्मुञ्चति । ९ ।

उद्वर्हणं उत्पाटनम् । विचर्तनं शिथिलीकरणम् ॥

एवमुत्तरमनड्वाहं विमुञ्चति । १० ।

गतः ॥

विमुक्तः सव्यो ऽविमुक्तो वा । ११ ।

इत्येकोनत्रिंशी कण्डिका ।

---

अथातिथ्यायास्तन्त्रं प्रक्रमयति । १ ।*

आतिथ्येति कर्मनाम. अग्नेरातिथ्यमसीत्यादिनिर्वापमन्त्रेषु अग्न्यादिभ्यो देवताभ्य आतिथ्यत्वेनानुकीर्तनात् । तन्त्रं अङ्गसमुदायः ॥

---

* The commentary to this kaṇḍikâ is missing in bg; both of these MSS. have only वासो ऽपादायेति पर्याणहनीयमिति शेषः (comm. to Sûtra 15). The commentary given in the identical MSS. ik is by far more extensive than that of h which has been chosen for printing, this one evidently being the more original composition; it seems, however, to contain some doubtful readings.

द्वाविंशतिदारुरिध्मः। २।

अनूयाजसमिदभावात्॥

आश्ववालः प्रस्तरः। ऐक्षवी विधृती। कार्ष्मर्यमयाः परिधयः। वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। ३।

गताः॥

यथार्थं पात्रप्रयोगः। ४।

स्फ्येन सह नव कपालानि प्रयुनक्ति॥

निर्वपणकाले पत्नीं शकटमन्वारम्भयित्वातिथ्यं निर्वपति। ५।

पात्र्या निर्वापे तस्या अन्वारम्भः॥

पत्न्या वा हस्तेन। ६।

यदि पत्न्या हस्तेन निर्वापस्तदा हस्तो ऽग्निहोत्रहवणीधर्मां लभते। अतो ऽग्निहोत्रहवणीशूर्पाभ्यां सह दक्षिणतः। शूर्पेण सह दक्षिणं हस्तं प्रयुनक्ति अग्निहोत्रहवणीं च प्रोक्षणार्थत्वेन। मानुषो ऽसि दक्षाय त्वेति हस्तादानम्॥

हस्ताद्वा। हस्तान्निर्वपन्हस्ते सर्वाञ्छकटमन्त्राञ्जपेत्। ७।

अत्र पात्रीधर्मा हस्ता भवन्ति। पुरतः पात्रीं च सादयति संज्ञापार्थम्॥

**अग्नेरातिथ्यमसीत्येतैः प्रतिमन्त्रम्। ८।**

निर्वपति ॥

**देवतादेशनस्य प्रत्याम्नायो भवति। ९।**

वैष्णवो नवकपाल इति वचनाद्विष्णव इत्येतस्य स्थाने अग्नेरातिथ्यमसीत्यादिभिः पञ्चभिर्निर्वापः ॥

**पञ्चसु सावित्रं जुष्टं चानुषजति। १०।**

त्रयाणां मन्त्रवतां पर्यायाणां विकाराः पञ्च। तूष्णीकविकारः षष्ठः। सप्तमो ऽन्वावापः* ॥

**नोत्तरयोरित्येके। ११।**

प्रकृतौ त्रयाणां निर्वापाणां मन्त्रवत्त्वात् उत्तरयोः चतुर्थपञ्चमयोः सावित्रजुष्टयोरभावः ॥

**वैष्णवो नवकपालः पुरोडाशो भवति। १२।**

गतः ॥

**विष्णुवद्देवात ऊर्ध्वं संस्काराः। १३।**

अत ऊर्ध्वं प्रोक्षणादयो विष्णवे वो जुष्टमिति निर्वापादूर्ध्वमित्येके ॥

**हविष्कृता वाचं विसृज्योत्तरमनड्वाहं विमुच्य। १४।**

यदि पूर्वं न विमुक्तः ॥

---

* from ik : पञ्चपर्यायान्तेषु देवस्य त्वेत्यादि हस्ताभ्यामित्यन्तस्य जुष्टपदस्यानुषङ्गः कार्यः ॥

वारुणमसीति वासो ऽपादाय वरुणो ऽसि धृतव्रत इति राजानमादायाच्छिद्रपत्रः प्रजा उपावरोहोशन्नु-शतीः स्योनः स्योनाः सोम राजन्विश्वास्त्वं प्रजा उपा-वरोह विश्वास्त्वां प्रजा उपावरोहन्त्वित्युपावहृत्योर्व-न्तरिक्षमन्विहीत्यभिप्रव्रजति। १५।

वासो ऽपादायेति पर्याणहनीयमिति शेषः॥

इति त्रिंशी कण्डिका।

आसन्दीमादाय प्रतिप्रस्थाता पूर्वः प्रतिपद्यते। १।

प्रतिपद्यते गच्छति॥

या ते धामानीति पूर्वया द्वारा प्राग्वंशं प्रविश्या-परेणाहवनीयं दक्षिणातिहृत्य वरुणस्यर्तसदन्यसीति दक्षिणेनाहवनीयं राजासन्दीं प्रतिष्ठापयति। २।

अतिहरणं व्रतप्रदाने व्याख्यातम्। अतिहृत्य राजानमन्यस्मै प्रदाया-ग्रेणाहवनीयं प्रतिप्रस्थात्राहृतामासन्दीं प्रतिष्ठापयति॥

तस्यां शकटवत्कृष्णाजिनास्तरणं राज्ञश्चासादनम्।३।

शकटवदिति वचनादृचापि यजुषर्चा चासादनम्। केचित्तु यजुषैवा-सादयन्ति। मन्त्रसमाम्नाये त्वत्रर्चो भावात् नासौ सूत्रकृतो भावः. शकटवदिति वचनात्. समाम्नाये ऽपि यजुषः प्रदर्शनार्थत्वोपपत्तेश्च। सत्याषाढस्तु पठदेव पृथगुभयत्रोभयमृग्यजुषम्॥

वरुणो ऽसि धृतव्रत इति राजानमभिमन्त्रयते । ४ ।

गतः ॥

वारुणमसीति वाससा पर्यानह्यति * । ५ ।

वारुणमसि शंयोरित्यादिना पुनः पर्यानह्यति ॥

एवावन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्। स नः शर्म त्रिवरूथं वियंसत्पातं मा द्यावापृथिवी उपस्थ इत्येतया सर्वत्र राजानमासीदेत् । ६ ।

वाचनिके राजोपसर्पणे ऽध्वर्योरयं मन्त्रो न यादृच्छिक इति द्रष्टव्यम् ॥

अग्निं राजानं चान्तरेण मा संचारिष्टेति संप्रेष्यति । ७ ।

संप्रैषवत्सर्वे कुर्वन्ति ॥

अवहननादि कर्म प्रतिपद्यते । ८ ।

गतः ॥

चतुर्गृहीतान्याज्यानि । ९ ।

अनूयाजाभावादुपभृत्यनूयाजार्थग्रहणनिवृत्त्यर्थं वचनं. पञ्चगृहीतनिरासार्थं च ॥

चतुर्होत्रातिथ्यमासाद्य संभारयजूंषि व्याचष्टे । १० ।

* Thus all MSS., not पर्यानह्यति.

व्याचष्टे जपति ॥

यजमानं वाचयतीत्येके। ११।

गतः ॥

पशुवन्निर्मन्थ्यः सामिधेन्यश्च। १२।

व्याख्यातं प्राक् ॥

पञ्च प्रयाजाः। १३।

निर्मन्थ्यवत्तु पशुचातुर्मास्येषु प्रयाजविवृद्धिदर्शनात् साऽपि मा भूदित्यारम्भः। अथवा यतः पञ्च प्रयाजा न चानूयाजाः तस्मात् चतुर्थे सर्वमौपभृतं समानयतीति योज्यम् ॥

चतुर्थे सर्वमौपभृतं समानयति। १४।

गतः ॥

इडान्ता संतिष्ठते। १५।

इडान्ता मार्जनान्ता ॥

धारयति ध्रौवमाज्यमाज्यम्। १६।

गतः ॥

इत्येकत्रिंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां दशमः पटलः।

इति दशमः प्रश्नः ॥

ओम् ॥

आतिथ्याया ध्रौवात्स्रुचि चमसे वा तानूनप्त्रं समवद्यति। चतुरवत्तं पञ्चावत्तं वा। आपतये त्वा गृह्णामीत्येतैः प्रतिमन्त्रम्। १।

तनूनपात्संबन्धात्तानूनप्त्रमित्याज्यसमाख्या येनर्त्विजः सख्यमुपगच्छन्ति। चतुरवत्तं पञ्चावत्तं वेति चतुरवत्तिनो ऽपि पञ्चावत्तप्राप्त्यर्थं. न त्वितरस्येतरार्थं. तस्य पञ्चावत्तं सर्वत्रेति नियमात्। व्यवस्थितविकल्पो वा स्यात्. उभयस्य व्यवस्थानुसारात् ॥

अनाधृष्टमसीति यजमानसप्तदशा ऋत्विजस्तानूनप्त्रं समवमृशन्ति। २।

सदस्यानित्यत्वादुक्तं सप्तदशा इति। तेन सदस्यवरणे सो ऽप्यवमृशत्येवार्थसाम्यात् ॥

अनु मे दीक्षामिति यजमानः। ३।

गतः ॥

यं कामयेत यज्ञयशसमृच्छेदिति तं प्रथमम्। यदि कामयेत सर्वानिति सर्वान्सहावमर्शयेत्। ४।

यज्ञनिमित्तं यशो यज्ञयशसम्। यज्ञे साधु कृतमनेनेति तद्यं प्राप्नु-

यादिति कामयेत यजमानस्तं प्रथममवमर्शयेत्। यदि पुनः कामयेत सर्वान्यज्ञयशसमृच्छेदिति तदा सहैव सर्वानवमर्शयेत् ॥

तस्माद्यः सतानूनप्त्रिणामित्युक्तम् । ५ ।

तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छतीत्युक्तम् । तस्मान्नान्योऽन्यस्मै द्रोग्धव्यमित्यर्थः ॥

प्रजापतौ त्वा मनसि जुहोमीति यजमानस्तानूनप्त्रं चिरवजिघ्रति । ६ ।

गतः ॥

अन्वहं वा व्रतेष्वपिनयति । ७ ।

तदा तु प्रतिव्रतमावृत्तिर्मन्त्रस्य ॥

अग्नीन्मदन्त्यापा इति पृच्छति । ८ ।

किमापो मदन्ति उष्णीभवन्तीति प्रश्नः । तत्रातिथ्येन सह मदन्तीरधिश्रयतीति बौधायनः ॥

मदन्ति देवीरमृता ऋतावृध इत्याग्नीध्रः प्रत्याह ।९।

गतः ॥

ताभिरेहीति संप्रेष्यति । १० ।

एहीति न ब्रवते . दूरादाह्वानाभावात् ॥

मदन्तीरुपस्पृश्य तानूनप्त्रिणो विस्रस्य राजानं सहिरण्यैः पाणिभिराप्याययन्त्यंशुरंशुस्ते देव सोमाप्यायतामिति । ११ ।

आप्यायनलिङ्गेन मन्त्रेणावमर्शनमेवाप्यायनम्। अद्भिः सेचनमित्यन्ये॥

अथ निह्नुवते। दक्षिणे वेद्यन्ते प्रस्तरं निधाय दक्षिणान्पाणीनुत्तानान्कृत्वा सव्यान्नीच एष्टा रायः प्रेषे भगायेति। १२।

सोमस्याप्यायितस्यान्तरिक्षदेवत्यत्वात्तच्छादनेन द्यावापृथिवीभ्यां नमस्काराञ्जलिकरणं निह्नवः. प्र वा एते ऽस्माल्लोकाच्च्यवन्त इत्यादि प्रकृत्य द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिंल्लोके प्रतितिष्ठन्तीति श्रवणात्. स्तवनात्प्रस्तरे निह्नवते द्यावापृथिवीभ्यामेव तन्नमस्कुर्वन्तीति बह्वृचश्रुतेः. नमो दिवे नमः पृथिव्या इति मन्त्रलिङ्गाच्च॥

अथ यजमानो ऽवान्तरदीक्षामुपैति। १३।

वर्तमानेष्वेव दीक्षाव्रतेषु व्रतान्तराणामधिकानामागमो ऽवान्तरदीक्षा॥

अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसीत्याहवनीयमुपतिष्ठते। १४।

गतः॥

एतेनैवास्मिन्समिधमादधातीति वाजसनेयकम्।१५।

उपस्थानसमिदाधानयोर्विकल्पः॥

इति प्रथमा कण्डिका।

संतरां मेखलां समायच्छते। संतरां मुष्टी कर्षते। १।

संतरां संहततराम् ॥

तप्तव्रतो भवति। २।

उष्णमेव पयो व्रतयति ॥

मदन्तीभिर्मार्जयते। ३।

दैवीं धियमित्युष्णाभिरेव हस्तौ मार्जयते। मदन्तीभिरुदकार्थां-स्कुरुत इति सत्याषाढः ॥

या ते अग्ने रुद्रिया तनूरित्येतेनैवात ऊर्ध्वं व्रत-यति। ४।

अत ऊर्ध्वं अस्याह्नः सायंव्रतप्रभृत्यौपसदव्रतान्येतेनैव व्रतयति। न पूर्वेण सद्याधिनिविष्टते इत्येवकारार्थः। यत्त्वद्यतनमहर्व्रतमवान्तरदी-क्षोपायनोत्तरकालभाव्यपि दैक्षव्रतत्वात्पूर्वेणैव स्वकाले भवति ॥

प्रवर्ग्येण प्रचर्योपसदा चरन्ति। एतद्वा विपरीतम्।५।

अथ प्रवर्ग्येण प्रचरन्ति. स च मन्त्रब्राह्मणयोरनारभ्याम्नात इति सूत्रकृतापि स्वतन्त्र एव व्याख्यास्यते ॥

न प्रथमयज्ञे प्रवृञ्ज्यात्। ६।

अग्निष्टोमे प्रवृणक्तीति नियमात् अतिरात्रे प्रथमयज्ञे प्रतिषेधः। अथवा शाखान्तराभिप्रायेणाग्निष्टोमे ऽपि निवृत्तिः. न प्रथमयज्ञ इति सामान्येन प्रतिषेधात् ॥

प्रवृञ्ज्याद्वा। ७।

गतः॥

प्रवृञ्ज्याद्दुर्ब्राह्मणस्य। ८।

दुर्ब्राह्मणस्य प्रथमयज्ञे ऽपि प्रवृञ्ज्यादेव। व्याख्यातो दुर्ब्राह्मणः॥

ब्रह्मवर्चसकामस्येत्येके। ९।

ब्रह्मवर्चसार्थिनो ऽपि काम्यतया तत्र प्रवृञ्जनमाम्नातमित्यर्थः॥

यो ऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यादिति बह्वृच-ब्राह्मणम्। १०।

व्याख्यातो ऽनूचानः। बह्वृचब्राह्मणवचनमादरार्थं न तु विकल्पार्थं. तस्य न प्रथमयज्ञ इत्यादिनैव सिद्धत्वात्। अतो ऽनूचानस्य प्रथम-यज्ञे ऽपि नियतः प्रवर्ग्यः॥

आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य च। तदेव प्रस्तरपरिधि। ११।

प्रस्तरस्य पृथग्ग्रहणमसंदेहार्थम्। आतिथ्याबर्हिरादीनामातिथ्यादि-त्रयार्थमुत्पत्तिः। अतस्तान्यादाय तूष्णीं संनह्य पुनःपुनः प्रयुञ्जीत॥

तत्स्तीर्णं बर्हिस्तत्परिधिताः परिधय इत्येके। १२।

अथवा तत्रातिथ्यायामेवोत्तरार्थमपि स्तीर्णं बर्हिः. परिधयश्च तत्रैव परिधिताः परिहिताः। न तु पुनःपुनरादाय प्रयुज्यन्त इत्यर्थः। अग्नीषोमीये तु देशभेदात्पुनःप्रयोगः॥

38

**उपसदस्तन्त्रं प्रक्रमयति। १३।**

परिस्तरणाच्छेदनादि कर्म प्रक्रमयति॥

**प्राकृत इध्मो दशदारुर्वा। १४।**

प्राकृत इत्यनेन प्रतिकृष्यमानासु प्रकृतिवदिति न्यायेन सामिधेनीकाष्ठानां पाञ्चदश्यमभिप्रेतं. न त्रिवृत्स्यैकविंशतिदारुत्वं. परिधीनां समिद्द्वयस्य चाभावेन षोडशभ्यो ऽनतिरेकात्। षोडशदारुमित्येव सत्याषाढः। तेन षोडशधेत्यूहः। दशधेति तु दशदारौ। तथा एकां समिधं यज्ञायुरनुसंचरामित्युभयत्र॥

**वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। यथार्थं पात्राणि प्रयुनक्ति। १५।**

गतः॥

**स्फ्यमग्निहोत्रहवणीं स्रुवं जुहूमुपभृतं ध्रुवां वेदमाज्यस्थालीमिति द्वन्द्वं प्रयुज्य पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति। १६।**

यथार्थमित्यनेनैव सिद्धेः पुनःस्फ्यादिवचनमसंदेहार्थम्। तथान्यदपि यावदुक्तमेवोपसदि क्रियते। पवित्रे कृत्वा यजमान वाचं यच्छेति वचनाददृष्टार्थत्वे ऽपि प्रणीता नेष्यन्ते। कात्यायनेन त्वत्र तासामुत्कृष्टानुद्धारसार्थी वा यत्नः॥

**वाग्यतः पात्राणि संमृश्य प्रोक्षणीः संस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्षति। १७।**

संमर्शनप्रोक्षणमन्त्रयोः पशुवदूहो ऽवगन्तव्यः. यथा संविग्नेतां दैव्यौ विप्रौ पात्रे इति. शुन्धेथां दैव्यायेति च। तत्र प्राक् प्रोक्षणाद्यद्यं युनक्ति यजमानः ॥

अथ वाचं विसृजते। १८।

गतः ॥

स्फ्यमादाय। १९।

इति द्वितीया कण्डिका।

लोमभ्यो ऽधि स्तम्बयजुर्हृत्वोत्तरं परिग्राहं परिगृह्य संप्रेष्यति प्रोक्षणीरासादयेध्ममुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीति। १।

मन्त्रेण स्फ्यादानं स्तम्बयजुरर्थत्वात्। लोमानि बर्हिः तस्योपरि दर्भं निधाय स्तम्बयजुर्हरति। तत्र वर्षतु ते द्यौरिति यजमानमेव प्रत्यवेक्षते. वेदेश्छन्नत्वादवेक्षितत्वाच्च। खनिप्रत्यवेक्षणं तु निवर्तते. खनेरभावात्। तत उत्तरपरिग्राह एव क्रियते। अस्तीर्णत्वे तु वेदेर्यथाप्रकृति सर्वमेव क्रियते। सूत्रकारस्तु स्तीर्णपक्षमेवानुसंधत्ते ॥

आज्यग्रहणकाले ध्रुवायामेव गृह्णाति। प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं च प्रोक्ष्य प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यैकामाघारसमिधमाधायान्तर्वेदि विधृती निधाय ध्रुवां स्रुवं च सादयति। एतावसदतामिति मन्त्रं संनमति। २।

यन्यो ऽयं गृहमेधीये व्याख्यातः। केचित्त्वत्र ध्रौवाज्यस्यासन्नाभिमर्श-नमिच्छन्ति। तदयुक्तं. आज्ये तदभावस्य याजमान एव दर्शित-त्वात्॥

वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते। ३।

पितृयज्ञे व्याख्यातः॥

नव सामिधेनीरन्वाह। ४।

तत्र प्राकृतेष्वपक्षे षट्सु प्रणवेषु द्वे द्वे काष्ठे आधाय परिधानीयायां त्रीणि सहादधाति। अथवा तृतीयषष्ठनवमेषु प्रणवेष्वेकैकमादधाति. इतरेषु षट्सु द्वे द्वे॥

तिस्र ऋचस्त्रिरनूक्ता भवन्ति। नव वा पराचीः। ५।

पराचीः अनावृत्ताः॥

नान्यामाहुतिं पुरस्ताज्जुहुयात्। स्रौवमेवाघार-येत्। ६।

याः प्रधानेज्यायाः पुरस्तादाहुतयः आघारादय आज्यभागान्ताः तासु स्रौवाघारादन्यामाहुतिं न जुहुयात्॥

समानमा प्रवरात्। ७।

गतः॥

नार्षेयं वृणीते न होतारम्। आश्राव्याह सीद होतरिति। एतावान्प्रवरः। ८।

पितृयज्ञे व्याख्यातः॥

ध्रौवादष्टौ जुह्वां गृह्णाति। चतुरुपभृति। ९।

अत्र पुरस्तादाज्यस्य पञ्चहोतारं वदेद्यजमानः। पञ्चावत्तिनस्तु दशकृत्वः पञ्चकृत्वश्च गृह्णाति॥

घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत्प्रचरति। १०।

घृतवतिशब्दो वाचनिकः। सकृदतिक्रान्त इति वचनं प्रतियागमनतिक्रमणार्थम्। उपांशुयाजवदिति वचनं तेषामेवोपांशुत्वार्थं. दब्धिरसीत्यनुमन्त्रणत्वात्। ननूपांशूपसत्स्विति साङ्गप्रधानस्योक्तमेवोपांशुत्वम्। सत्यमुक्तं. तदपि त्वसत्यस्मिन्प्रायणीयादिवत्प्रधानविषयमेव स्यात्। अतस्तदङ्गानामपि कथमुपांशुत्वं ब्रूयादित्यारम्भः॥

अर्धेन जौहवस्याग्निं यजति। अर्धेन सोमम्। ११।

गतः॥

औपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्ने ऽयाशया तनूरिति स्रुवेणोपसदं जुहोति। १२।

उपसदित्याहुतिसमाख्या। तामाज्यस्थाल्याज्येन जुहोति। नारिष्ठादि सर्वं तन्त्रं निवर्तते. अननुक्रमणात्. ब्राह्मणे च तिस्र एव सामिधेनीरनूच्येत्यादिना यावदुक्तेन परिसंख्यानाच्च। अत एव प्रायश्चित्तान्यप्यन्तरयादिनिमित्तानि निवर्तन्ते। तथा च बौधायनः. त्वरमाणा इवोपसद्भिः प्रचरेयुर्नाहृतमाद्रियेरन्निति॥

अग्नीन्मदन्त्यापा३ इत्येतदाद्या निह्नवात्कृत्वाग्नी-
द्देवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति। १३ ।

संप्रेष्यतीति शेषः ॥

अपरेण गार्हपत्यमाग्नीध्र उपविश्य देवपत्नीर्व्याचष्टे
सेनेन्द्रस्य धेनेति। उत्करे सुब्रह्मण्यामाह्वयति। पूर्वव-
देनां यजमानो ऽनुमन्त्रयते । १४ ।

गतः ॥

इति तृतीया कण्डिका ।

इति प्रथमः पटलः ॥

सुपूर्वाह्णे पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति ।
स्वपराह्ण आपराह्णिकीभ्याम् । १ ।

पूर्वाह्णापराह्णान्ते चरन्तीत्यर्थः ॥

सव्योत्तानैस्तु सायं निह्नवः । २ ।

आपराह्णिक्यामुपसदि सव्योत्तानैः पाणिभिर्निह्नवः ॥

एषा प्रथमा । ३ ।

प्रथमा उपसत्। औपसदमहर्व्याख्यातमित्यर्थः ॥

एवमुत्तराभ्यां चर्या । ४ ।

उत्तराभ्यामप्यहोभ्यामेवं चर्या । चरणमित्यर्थः ॥

रजाशयां द्वितीयायां जुहोति। हराशयां तृतीयायाम्। ५।

या ते अग्ने रजाशया तनूरिति द्वितीयायामुपसदि द्विकालमप्युपसदाहुतिं जुहोति। हराशया तनूरिति तृतीयायाम्॥

याः प्रातर्याज्या इत्युक्तम्। ६।

याः प्रातर्याज्या इत्यादि यदुक्तं ब्राह्मणे तदप्यनुसंधातव्यम्॥

तिस्र एव साह्नस्योपसदः। द्वादशाहीनस्य। ७।

एकाहः साह्नः। द्विरात्रादिः अहीनः॥

यदि संग्रामं पुरो वा युध्येयुरयः प्रथमायामवधाय जुहुयात्। रजतं द्वितीयायाम्। हरितमुत्तमायाम्। ८।

यदि क्षत्रियस्य यजमानस्यामित्राः संग्रामं कुर्युः पुराणि वाक्रामेयुः तदा प्रथमायामुपसदि उपसदाहुतिके ऽयः स्रुवे ऽवधाय जुहुयात्। एवं रजतहिरण्ये उत्तरयोरित्यर्थः। अरिजयकामस्य अहरेवं सायंप्रातराहुतय इत्ययश्चसंयुक्तः कल्प इति सत्याषाढः॥

आराग्रामिति स्तनकल्पः। ९।

आराग्रामित्यादिब्राह्मणे द्वौ स्तनकल्पावुक्तौ आराग्रा परोवरीयसी चेति। तत्रैकमग्रे ऽथ द्वावथ त्रीनथ चतुर इत्याराग्रा। परोवरीयसीं तु स्वयमेवानुक्रमिष्यति। तां चैव नित्यां मन्यते. तस्या एवानुक्रमणात्. अत्रैकस्तनं व्रतमिति तस्या एवानुवादाच्च॥

यद्दहः सोमं क्रीणीयुश्चतुरः सायं दुह्युस्त्रीन्प्रातर्द्वौ सायमेकमुत्तमे। सर्वान्सायमाशिरे। १०।

प्रथमायामुपसदि प्रातर्द्वैचव्रतं भवति। सायं चतुस्तनं दुह्युः. मध्यमायां प्रातस्त्रीन्. द्वौ सायं. उत्तमायां प्रातरेकम्। सायं तु सर्वानप्याशिरे सोमसंस्काराय दध्ने दुह्युः॥ आशिरे इति रेफान्तात्। तादर्थ्ये चतुर्थी॥

अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्वन्ति। ११।

मध्यमायामुपसदि पौर्वाह्णिकयोः कृतयोरित्यर्थः॥

प्राग्वंशस्य मध्यमाल्ललाटिकात्त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति। १२।

प्राग्वंशस्य पूर्वार्धेषु मध्यमाच्छङ्कोस्त्रिषु प्रक्रमेषु शङ्कुं निहन्ति। स वेदेः पश्चार्धशङ्कूनां मध्यमः॥

तस्मात्पञ्चदशसु दक्षिणतः। एवमुत्तरतः। ते श्रोणी॥ प्रथमनिहताच्छङ्कोः षट्त्रिंशतिः पुरस्तात्। तस्माद्द्वादशसु दक्षिणतः। एवमुत्तरतः। तावंसौ। १३।

त्रिंशत्पदानि प्रक्रमा वेति शुल्बवचनात् पदान्यपि वेद्यां प्रक्रमैर्विकल्प्यन्ते। तां शौल्बेन विधिना मीत्वा तत्रतत्र शङ्कुं निहन्ति॥

विमिमे त्वा पयस्वतीं देवानां धेनुं सुदुघामनपस्फुरन्तीम्। इन्द्रः सोमं पिबतु क्षेमो अस्तु न इति विमानः। १४।

पूर्वोक्तमाने ऽयं मन्त्रः। तं सकृदुक्त्वा सर्वां वेदिं मिमीते ॥

सर्वतः स्पन्द्यया पर्यातनोति। १५।

स्पन्द्या रज्जुः। तया सर्वतः परिवेष्टयति वेदिम् ॥

मध्ये पृष्ठ्याम्। १६।

तनोतीति शेषः ॥

इति चतुर्थी कण्डिका।

इमां नरः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येद्देवस्य सवितुः सव इति संप्रेष्यति। १।

गतः ॥

स्फ्येन विघनेन पर्श्वा परशुना च वेदिं कुर्वन्ति।२।

ऋत्विजः परिकर्मिणो वेति शेषः॥ स्फ्यो लौकिकस्त्याज्यत्वात्. तेन खनन्ति। विघनः मुद्गरः. तेन लोष्टानि घ्नन्ति। पर्शुः पश्वादेः पार्श्वास्थि. तेन परशुना च मूलानि छिन्दन्ति। स्फ्यादीनि प्रशातानि निदधाति. उत्तरत्रप्रतिपत्तिवचनात् ॥

दर्शपूर्णमासवत्संनमनवर्जं प्रागुत्तरात्परिग्राहात्कृत्वा चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य

मध्ये। तस्यां सुपर्णावधि यौ निविष्टौ तयोर्देवानामधिभागधेयमित्यभिमन्त्र्य । ३ ।

वेदिं करोतीति विपरिणामेन संबन्धः। वेदं कृत्वा स्फ्यादानादि आ उत्तरपरिग्रहात्कृत्वा चतुःशिखण्डेत्यभिमन्त्र्य चैवं वेदिं करोत्यध्वर्युरित्यर्थः ॥

चात्वालाद्द्वादशसु प्रक्रमेषु प्रत्यगुत्करः। तावत्येवाध्वन्युदग्यथा चात्वालः । ४ ।

चात्वालमध्यात्प्रत्यग्द्वादशसु प्रक्रमेषूदग्वेदेर्यावति चात्वालस्ताध्वन्युत्करः स्यात्। दार्शिकवेदिवदेव पुरस्ताद्वितीयदेश उदक्पदे स्तम्बयजुर्निवपतीत्युक्तं भवति। स्तम्बयजुरपादानदेशो ऽप्येव्याख्यातः. मध्यमस्य वेदितृतीयस्य पूर्वार्धादिति। तत्रोपरवस्तम्बयजुर्हरतीति कात्यायनबौधायनौ ॥

व्याख्यातश्चात्वाल उत्तरवेदिश्च । ५ ।

चात्वालोत्तरवेदी तु पशावेव व्याख्याते. दशपदां सोमे करोतीत्यादिना। ते तथैव कार्ये इत्यर्थः ॥

उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छन्ना वसति। । ६ ।

उत्तरवेदिरिति* शेषः। तथा उदुम्बरशाखाभिच्छन्नां परिवासयतीति सत्याषाढः ॥

* Corrected; the MSS. have उत्तरवेदिमिति.

श्वोभूत उत्तमे प्रवर्ग्योपसदौ प्रतिसमस्यति । ७ ।

प्रतिसमासमेव व्याकरोति ॥

पौर्वाह्णिकीभ्यां प्रचर्य तदानीमेवापराह्णिकीभ्याम् । ८ ।

प्रचरतीति विपरिणामेन संबन्धः। प्रचर्येत्येव वानुषङ्गोत्तरसूत्रेण सहैकग्रन्थो योजयितव्यः ॥

प्रवर्ग्यमुद्वास्य पशुबन्धवदग्निं प्रणयति । ९ ।

प्रणीयेष्वाधानाद्यतिमुक्तयन्तेन विधिना प्रणयति ॥

एष सोमस्याहवनीयः। यतः प्रणयति स गार्हपत्यः । १० ।

एतस्मिन्नेवातः परमाहवनीयकर्माणि क्रियन्ते. तद्योनौ तु शाला-मुखीये गार्हपत्यकर्माणि। सत्याषाढभारद्वाजयोस्तु मतात् आग्नीध्र-प्रणयनात्परत एव तत्र गार्हपत्यकर्माणीति द्रष्टव्यम् ॥

अग्निवत्युत्तरं परिग्राहं परिगृह्णाति । ११ ।

केषांचिदत्र सूत्रकृतां मतम्। अग्निं प्रणीयानन्तरमेवाग्निचायाः शाखाहरणमिति तन्निरासार्थमुक्तमग्निवतीति। वेदिदेशे ऽग्निवत्य-नन्तरमुत्तरपरिग्रहः. ततः शाखाहरणमित्यर्थः। विपरीतपरिग्रह-सूचनार्थं वा. वसवस्त्वेति परिग्रहस्य ते ऽग्निना प्राञ्चो ऽजयन्निति प्रागग्निना परिग्रहस्तवनात् ॥

अथ प्रतिप्रस्थाता शाखामाहृत्य मैत्रावरुण्याः पयस्याया वत्सानपाकरोति। १२।

उत्तरपरिग्रहाद्यनुवीक्षणान्ते कृते शाखाहरणादि गोमयालेपनान्तं कर्म प्रतिप्रस्थाता करोति। तत्र मित्रावरुणाभ्यां देवभागं. मित्रावरुणाभ्यां शरदो दुहाना इति विकारः प्रतिसंधातव्यः॥

इति पञ्चमी कण्डिका।

इति द्वितीयः पटलः॥

---

प्रोक्ष्य बर्हिस्त्रिर्वेदिं प्रोक्षति। १।

असंस्कृताभिरद्भिरुभयं त्रिः प्रोक्षति॥

नाप्रोक्षितामभिचरन्ति। २।

उत्तरपरिग्रहादूर्ध्वं प्राक् प्रोक्षणान्न वेद्यां चरन्ति जनाः। तथा न परिगृहीतामप्रोक्षितामित्येव सत्याषाढभारद्वाजौ॥

अथैनां बर्हिषा बहुलं प्राचीनं स्तीर्त्वा प्रयुक्तपूर्वे शकटे नद्धयुगे प्रतिहतशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान्ग्रन्थीन्विस्रस्य नवान्प्रज्ञातान्कृत्वाग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यवनयन्परिश्रिते सच्छदिषी अवस्थापयति। ३।

स्मरणं तूष्णीकं. आ घा ये अग्निमिन्धत इत्यैन्द्र्यर्चा वा. यथा

वक्ष्यति स्तरणीमेतामेके इति। बहुलं भूयिष्ठम्। प्राचीनं प्रागपवर्गम्। प्रयुक्तपूर्वे प्रागेव कार्येषूपयुक्ते। प्रतिहृतमग्न्ये प्रतिमुक्तमग्न्ये। अव्यवनयन् दक्षिणत उत्तरतश्च पृष्ठ्यामतीत्योभे अनयन्॥

अथैने पत्नी पदतृतीयेनाज्यमिश्रेणोपानक्ति। ४।

आज्यमिश्रेणेति वचनात् आज्यमप्यञ्जनसाधनम्। तेन पदनाशे ऽपि केवलेनाज्येनानक्ति। पत्न्यनेकत्वे ऽपि मुख्योपानक्ति. अङ्गसंस्कारत्वात्॥

आ नो वीरो जायतामिति द्विर्दक्षिणामक्षधुरं दक्षिणेन हस्तेनोत्तानेन प्राचीनम्। ५।

यत्र चक्रं प्रोतं भवति स प्रदेशो ऽक्षधुरा। दक्षिणस्य हविर्धानस्य दक्षिणामक्षधुरां द्विरुपानक्ति॥

न च हस्तमावर्तयति। ६।

प्राग्गतं हस्तं न प्रत्यगपकर्षति॥

एवमितराम्। ७।

उत्तरामप्यक्षधुरामेवमनक्ति॥

सकृद्वा। ८।

इतरामित्यन्वयः. आनन्तर्यात्. सकृत्सकृदित्यवचनाच्च॥

तथोत्तरस्य हविर्धानस्योपानक्ति। ९।

अक्षधुरामिति शेषः॥

युञ्जते मन इति सावित्रियचौत्तरवेदिके हुत्वा हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति संप्रेष्यति। प्रवर्त्यमानाभ्यामनुब्रूहीति वा । १० ।

मतान्तरनिरासार्थमौत्तरवेदिकग्रहणं. बौधायनकात्यायनाभ्यां शाला-मुखीये होमवचनात् ॥

प्रथमायां चिरनूक्तायां प्राची प्रेतमध्वरमित्युद्गृह्णन्तः प्रवर्तयन्ति । ११ ।

धुर्यवद्युगधुरौ हस्तेनोर्ध्वं गृह्णन्तः प्राङ्नयन्त्यनसी अध्वर्युप्रतिप्रस्था-त्रादयः ॥

स्याच्चेदक्षशब्दः सुवागित्यनुमन्त्रयेत । १२ ।

तमक्षशब्दमिति शेषः. अक्रन्ददग्निरित्यक्षशब्दमनुमन्त्रयत इत्यग्नौ दर्शनात् ॥

दक्षिणस्य हविर्धानस्य वर्त्मनि वर्त्मनोर्वा हिरण्यं निधायेदं विष्णुर्विचक्रम इत्यध्वर्युर्हिरण्ये जुहोति । १३ ।

दक्षिणस्य चक्रस्य वर्त्मन्युभयोश्चक्रयोर्वा वर्त्मनोर्जुहोति ॥

एवमुत्तरस्य प्रतिप्रस्थाता । १४ ।

इति षष्ठी कण्डिका ।

इरावती धेनुमती इति जुहोति। १।

उत्तरस्य वर्त्मनि वर्त्मनेर्वेति शेषः॥

अप जन्यं भयं नुदाप चक्राणि वर्तय। गृहं सोमस्य गच्छतमिति वितृतीयदेशे वेद्या अध्वर्युर्होता ब्रह्मा मैत्रावरुणो वा पदापनुदति। लोष्टं वा बहिर्वेदि निरस्यति। २।

वेद्याः पश्चिमादन्तादारभ्य द्वादशभ्यः प्रक्रमेभ्यः पूर्वस्मिन्देशे यत्किं-चित्पांस्वादि तत्तत्रैव पदा प्रेरयति। बहिर्वेदि वा लोष्टं निरस्यति॥

आहवनीयात्त्रीन्प्रतीचः प्रक्रमानुत्क्रम्याच रमेथा-मिति नभ्यस्थे स्थापयित्वा वैष्णवमसि विष्णुस्त्वोत्तभ्ना-त्वित्युपस्तभ्य दिवो वा विष्णवित्यध्वर्युर्दक्षिणस्य हवि-र्धानस्य दक्षिणं कर्णातर्दमनु मेथीं निहन्ति। तस्यामीषां निनह्यति। ३।

उत्तरवेदेः पश्चात्त्रिषु प्रक्रमेषु हविर्धानस्थानं. तत्र यथा नभ्यस्थे भवतः तथानसी स्थापयति। नभ्यं नाम चक्रस्य मध्यमं फलकं यत्र नाभिः क्रियते. मध्ये नभ्यमिति लिङ्गात्। तेन भूमिष्ठे न स्थिते भवत इत्यर्थः। कर्णातर्दः कीलं. तदनु तत्समीपे मेथीं अवष्टम्भ-नस्तम्भं दिवो वा विष्णवित्याग्नीःपदयर्चा* निहत्य तस्यामीषां बध्नाति॥

* Thus b; c आग्नीध्र्यदयर्चा, hik आग्नीधेदयर्चा; Taitt. S. 6. 2. 9. 4 and Taitt. Prâtiś. 5, 10 आग्नीपदयर्चा.

एवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नुकमित्युत्तरं कर्णातर्दमनु। ४।

मेथीं निहन्तीत्यादेरनुषङ्गः। एवमुपस्तम्भनादि बन्धनान्तं करोतीत्यर्थः। स्थापनं तूभयोर्युगपदध्वर्युरेव करोति. रमेथामिति द्विवचनात्। अथवोपरवमन्त्रवत्समुदायापेक्षयापि द्विवचनोपपत्तेः स्थापनमप्युभयोरुभौ कुरुतः। तथा अत्र रमेथामिति स्थापयत इत्येव सत्याषाढभारद्वाजौ॥

ऊर्ध्वाः शम्या उद्वृह्योपरिष्टात्परिवेष्टयन्ति। ५।

ऊर्ध्वा उत्पाद्य अधःकुम्बाः प्रतिमुच्य रज्ज्वादिभिरुपरिष्टात्परिवेष्टयन्ति यथा न पतन्ति॥

उत्ताना हि देवगवा वहन्तीति विज्ञायते। ६।

शम्यानां विपरीतप्रतिमोकस्तुतिरियमादरार्था॥

मद्दो वा विष्णविति सर्वतः स्थूणाः परिमिनोति। ७।

मद्दो वा विष्णवित्यादिना चक्रप्रेषेण समन्ततः स्थूणा निखनन्ति। अर्थलक्षणौ तु हविर्धानस्यायामव्यासौ। अरत्निविस्तारस्य नवायामस्य छदिस्त्रयस्य विधानादधोदेशप्रमाणमपि तेनैव व्याख्यातमित्यपरम्॥

पुरस्ताद्यान्तः खरायावकाशं शिष्ट्वा। ८।

पुरस्ताद्भागीयाः स्थूणास्त्वन्ततः खरायावकाशमुच्छ्रिय्य ततो बहिर्मिनोतीत्यर्थः॥

उदञ्चौ वंशावत्याद्दधाति पश्चात्पुरस्ताच्च । ९ ।

पाश्चात्यासु पौरस्त्यासु च स्थूणासु द्वौ वंशावधिनिदधाति ॥

समानं सांकाशिनं शालामुखीयहोत्रीयौत्तरवेदिकानाम् । १० ।

सर्वतो दर्शनं सांकाशिनं, तदेषां समानं भवति । यथैकस्थः सर्वानपि पश्येत्तथार्जवेनैषां द्वारावकाशः कार्य इत्यर्थः ॥

इति सप्तमी कण्डिका ।

विष्णो रराटमसीति पुरस्ताद्रराट्यां तिर्यञ्चं वंशं धारयन्विष्णोः स्यूरसीति स्यूत्वा विष्णोर्ध्रुवमसीति प्रज्ञातं ग्रन्थिं कृत्वा प्राचो वंशानत्याधाय विष्णोः पृष्ठमसीति तेषु मध्यमं छदिरध्यूहति त्र्यरत्निविस्तारं नवायामम् । १ ।

रराटीं तावद्व्याचष्टे सत्याषाढः, तेजनी रराट्यैषीकी प्राच्यणूकाण्डा मध्ये विष्यूता तां वंशे निबध्नीतेति । तेजनी यष्टिः, यथोक्तं बाह्वृच्ये, तेजन्या उभयतो ऽन्तयोरिति, चतुःसंधिर्ह्येषुरनीकं शल्यस्तेजनं पर्णानीति च, सोमः शल्यो विष्णुस्तेजनमिति च । ऐषीकी काशमयी । प्राची प्रागायता न तूदीची । अणूकाण्डा दीर्घस्कान्दमः, अणुकाण्डा अस्थूलपर्वेति यावत् । मध्ये विष्यूता मध्ये सुषिरं कृत्वा सूत्रे प्रोता एवंभूता तेजनी रराटी तोरणस्थानीयया: पूर्वद्वारस्थूणयो-

उपरि वंशे निबध्नीतेत्यर्थः॥ एवं पुरस्तात्तया रराट्या उपरि तोरण-स्योपरि फलकस्थानीयं वंशं तोरणस्थूणयोरेव बद्धं धारयन् तं स्यूत्वा ग्रन्थिं करोति। एवमेवं तूपरिष्टाद्व्याख्यास्यते। तत उदीचोर्वंशयोः प्राचो वंशानत्याधाय तेषु मध्यमं छदिस्त्वरत्निविस्तारं नवायामं चाध्यूहति॥

तूष्णीमितरे छदिषी अध्यूह्य कटांस्तेजनीरिति छद्य-न्तरालेषु प्रवर्तमुपास्यति। २।

इतरे अपि तथापरिमाणे एवाध्यूह्यान्तरालेषु कटांश्च तेजनीश्च प्रवर्तं प्रवृत्यप्रवृत्य क्षिपति। तेजन्यो यष्टयः. पूर्ववत्काभिश्चिद्यष्टिभिः सह कटान्बद्ध्वा तत्रतत्र छिद्रे ऽवदधातीत्यर्थः। तेजन्यस्तृणविशेषाः पूर्ववद्बद्धाः कटैः सह क्षियन्त इत्यन्ये॥

ते ऽन्तर्वर्ता भवन्ति। ३।

य इमे कटतेजनीबद्धा उपात्तास्त एव अन्तर्वर्तान्करोति व्यावृत्त्या इति ब्राह्मणे ऽन्तर्वर्ता इत्युक्ता इत्यर्थः॥

परि त्वा गिर्वणो गिर इति सर्वतः परिश्रित्य विष्णोः श्नप्त्रे स्थ इति रराट्या अंतौ व्यस्यति। संमृशतीत्येके।४।

व्यस्यति विसारयति॥

विष्णोः स्यूरसीत्यध्वर्युर्दक्षिणां द्वार्बाहुं स्यूत्वा विष्णो-र्ध्रुवमसीति प्रज्ञातं ग्रन्थिं करोति। ५।

द्वार्बाहुः द्वारस्थूणा। एवमेवं तु बौधायनो व्याचष्टे. अथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिग्रह्य दर्भणं प्रवयति दर्भणे स्यन्द्यां विष्णोः

स्यूरसि विष्णोर्ध्रुवमसीति ग्रन्थिं करोतीति। दर्भेणं सूचीप्रोतया रज्ज्वा कूर्चवत्कुशानुपचारयन् आग्रादेष्टयित्वाग्रे ग्रथ्नातीत्यर्थः॥

ग्रन्थिकरणमेके पूर्वं समामनन्ति। ६।

अथवा मूल एव मन्त्रेण ग्रथितया रज्ज्वा वेष्टयित्वा तूष्णीमग्रे ऽग्रमुपगूहतीत्यर्थः॥

यं प्रथमं ग्रन्थिं ग्रथ्नीयादित्युक्तम्। ७।

यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रंसयेदमेहेनाध्वर्युः प्रमीयेतेत्युक्तं ब्राह्मणे। तस्माद्यत्र प्रथमे ग्रन्थयस्तत्र ग्रथितास्ते सर्वे प्रज्ञाताः कार्याः पश्चाद्विस्रंसनीयास्वेति भावः॥

एवमुत्तरां प्रतिप्रस्थाता। ८।

सीव्यतीति शेषः॥

एवमपरे सीव्यतः। ९।

अपरे अपरस्य द्वारस्य द्वार्ये॥

पुरस्तादुन्नतं पश्चान्निनतं हविर्धानम्। १०।

गतः॥

वैष्णवमसि विष्णवे त्वेति संमितमभिमृशति। ११।

संमितं निर्मितम्॥

इत्यष्टमी कण्डिका।

इति तृतीयः पटलः॥

प्र तद्विष्णु स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेति संमितात्प्राङ् यजमानो निष्क्रम्याहवनीयात्त्रीन्प्राचः प्रक्रमान्प्रक्रामति यस्योरुष्विति। १।

प्र तद्विष्णुरित्यृचा हविर्धानान्निष्क्रम्य पुनर्यस्योरुष्वित्यर्धर्चेनाहवनीयावधींस्त्रीन्प्रक्रमान्प्रक्रामति। प्रक्रम्यत इति प्रक्रमः पदं. यस्योरुषु त्रिषु विक्रमणेष्विति मन्त्रवर्णात्. त्रिः प्रक्रामतीति विज्ञायत इति भारद्वाजेन व्यक्तवचनाच्च॥

नाध्वर्युः प्राङ् हविर्धाने अतीयात्। २।

अपरया द्वारा प्रविष्टो ऽतीत्य हविर्धाने प्राङ् न गच्छेत्। तथा नाध्वर्युः पूर्वेण द्वारेण हविर्धाने प्रविश्यापरेण निष्क्रामेदिति सत्याषाढः॥

अतीयाच्चेद्वैष्णव्यर्चा संचरेत्। ३।

प्रमादाद्गच्छन्निदं विष्णुरिति वैष्णव्या गच्छेत्॥

षट्सु प्रक्रमेषूत्करात्प्रत्यगाग्नीध्रं मिनोति। अर्धमन्तर्वेद्यर्धं बहिर्वेदि। प्राचीनवंशं चतुःस्थूणं सर्वतः परिश्रितं दक्षिणतऽउपचारम्। ४।

उत्करात्प्रत्यक् षट्सु प्रक्रमेषु वेदेर्मध्यं भवति। स पूर्वावधिराग्नीध्रागारस्य। तस्य चार्थलक्षणावायामव्यासौ। दक्षिणतऽउपचारं दक्षिणाद्वारम्॥

अपरस्माद्वेद्यन्तात्त्रिषु पुरस्तात्प्रक्रमेषु तिर्यक् सदो मिनोति। ५।

तिर्यक् उदगायतम्॥

अच्छाया द्वेष्यस्य। ६।

न तथा कार्यमिति भावः॥

नवारत्निविस्तारं सप्तविंशतिरुदगायतम्। अपरिमितं वा। ७।

नवारत्निप्राग्विस्तीर्णं भवति। उदगायामस्तु सप्तविंशतिररत्नयः. ततोऽपि वाधिकः। तथार्वागष्टादशापि लभ्यन्ते. अष्टादशेत्येकेषामिति शुल्बे वचनात्॥

यावदृत्विग्भ्यो धिष्णियेभ्यः प्रसर्पकेभ्य आप्तं मन्येतेत्यपरम्। ८।

अर्थलक्षणावायामव्यासावित्यर्थः॥

दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मध्ये सदसो मिनोति। ९।

आयामतो विस्तारतश्च मध्ये मिनोति॥

दक्षिणा सदः प्रति कर्षेद्यथा सांकाशिनस्याविरोधं स्यात्। १०।

दक्षिणतः प्रक्रमे पृष्ठ्याया यथा सदोमध्यं भवति तथा पृष्ठ्याया दक्षिणांशो विवृद्धः स्यात्। किमर्थमिति चेत्. शालामुखीयादीनां

र्थांकाग्निनस्याविरोधो यथा स्यादिति। इतरथा ह्यौदुम्बर्या तिरो-
धीयत इति भावः। अविरोधमित्यर्थाभावे ऽव्ययीभावः॥

यूपवदौदुम्बर्या अवटसंस्कारः शकलवर्जम्। ११।

अभ्यादानादिरवस्तरणान्तो विधिः समानो यूपेन॥

अग्रेणावटं प्राचीं निधाय तूष्णीं प्रक्षाल्याथैनां यव-
मतीभिः प्रोक्षति। दिवे त्वेत्यग्रम्। अन्तरिक्षाय त्वेति
मध्यम्। पृथिव्यै त्वेति मूलम्। १२।

तूष्णीं प्रक्षालनं परस्तादर्वाच्याः प्रोक्षणं च विशेषः॥

उद्दिवं स्तभानान्तरिक्षं पृणेति प्राचीनकर्णां सह्रे-
ह्राचोच्छ्रयति। उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषेति
वा। १३।

कर्णः क्षुद्रशाखामूलं. स यथा प्राग्भागगतो भवति तथोत्थापयति॥

इति नवमी कण्डिका।

द्युतानस्त्वा मारुतो मिनोत्विति प्राचीनकर्णां सह्रे-
ह्राचा मिनोति। १।

पुनः प्राचीनकर्णत्ववचनं स्थापने ऽपि तथात्वनियमार्थम्॥

ऊर्ध्वं निखाताद्यजमानसंमिता। २।

यजमानेन संमितौदुम्बरी भवतीति ब्राह्मणमेवं व्याख्येयमिति भावः॥

पर्यूहणपरिहंहणपरिषेचनानि यूपवत् । ३ ।

गतः ॥

तस्या विशाखे हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण हिरण्ये जुहुदान्तमौदुम्बरीमन्ववस्रावयति । ४ ।

तस्याः कर्णे हिरण्यं निधाय तस्मिन्भूयिष्ठामाहुतिं जुहुयात्तथा भूमिं प्राप्नुयात्तथौदुम्बरीमन्वाज्यमवस्रावयति*। भूमिं प्राप्ते स्वाहाकरोतीति कात्यायनः ॥

एषा सदसः स्थूणानां वर्षिष्ठा । ५ ।

वर्षिष्ठा स्थविष्ठा ॥

नाभिदघ्न्यः पर्यन्तीयाः । ६ ।

पर्यन्तेषुभवाः पर्यन्तीयाः. ता नाभिदघ्न्यः। मध्यमास्त्वौदुम्बरीसमानारोहा एव ॥

नीचैः सदो मिनुयादृष्टिकामस्य । उच्चैरवृष्टिकामस्येत्येके । ७ ।

सदसो नीचैस्त्वोच्चैस्त्वे त्वौदुम्बर्या एव नीचोच्चत्वाभ्यामिति द्रष्टव्यम् ॥

उदञ्चः प्राचश्च वंशानत्याधायैन्द्रमसीति तेषु मध्यमानि त्रीणि छदींष्यध्यूहति । ८ ।

---

* Corrected; all MSS. have ०स्रावति.

उदञ्चः उदीचः। त्रिषु मन्त्रस्यावृत्तिः. एकवचनात्। तथा ऐन्द्रमसीत्येकैकं मध्यमानि छदींषीत्येव भारद्वाजः॥

**विश्वजनस्य छायेति त्रीणि दक्षिणानि। इन्द्रस्य सदोऽसीति त्रीण्युत्तराणि। ९।**

पूर्वेण व्याख्यातौ॥

**दक्षिणान्युत्तराणि चौदुम्बरीमभ्यग्राणि भवन्ति। १०।**

दक्षिणान्युदगग्राणि. उत्तराणि दक्षिणाग्राणीत्यर्थः॥

**दक्षिणान्युत्तराणि करोतीति विज्ञायते। ११।**

उत्तराणि सर्वेषामुपरिश्रयाणि॥

**नवच्छदीति काम्यानि। १२।**

काम्यानि च नवच्छदि तेजस्कामस्येत्यादिब्राह्मण एवानुसंधातव्यानि। नवच्छदिःपक्षस्तु नित्यः काम्यश्च। काम्यानामपि छदिषां पूर्ववदेव त्रेधा विभागोऽवगन्तव्यः॥

**नवाग्निष्टोमे। पञ्चदशोक्थ्ये। षोडश षोडशिनि। सप्तदश वाजपेयेऽतिरात्रे च। एकविंशतिः सत्राहीनानाम्। १३।**

एतान्येतेषां नियतानि। प्राकृतसंख्यैव त्वन्येषां सोमानाम्॥

**अन्तर्वर्ताः परिश्रयणं सांकाशिनं द्वाराविति हविर्धानवत्। १४।**

गतः॥

इन्द्रस्य स्यूरसीति सीव्यति। इन्द्रस्य ध्रुवमसीति प्रज्ञातं ग्रन्थिं कृत्वैन्द्रमसीन्द्राय त्वेति संमितमभिमृशति।१५।

तत्र विष्णोः स्थान इन्द्रस्यादेशनमित्येतावान्विशेषः॥

नाध्वर्युः प्रत्यङ् सदो ऽतीयात्। धिष्णियान्होतारं वा।१६।

नाध्वर्युः पूर्वेण द्वारेण सदः प्रविश्यापरेण निष्क्रामेत्। तथा नापरेण द्वारेण सदः प्रविश्य पूर्वेण निष्क्रामेदिति च सत्याषाढः। सदस्यपि धिष्णियानतीत्य न गच्छेत्। तत्र तु होतारं वेत्यस्मिन्कल्पे धिष्णियातिगमने ऽपि न दोषः॥

यद्यतीयादैन्द्रियर्चा संचरेत्॥ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखेति स्तरणीमेतामेके समामनन्ति।१७।

यत्र स्तृणाति पूर्वत्रोत्तरत्र वा तत्रायं मन्त्रः स्यात्॥

क्षैत्रपत्या वा संचरेत्।१८।

क्षेत्रस्य पतिना वयमिति क्षैत्रपत्या॥

उपरवकर्मैके पूर्वं समामनन्ति। सदःकर्मैके।१९।

गतः॥

इति दशमी कण्डिका।

इति चतुर्थः पटलः॥

दक्षिणस्य हविर्धानस्याधस्तात्पुरोऽक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशमुखान्प्रादेशान्तरालान्करोति ।१।

पुरोऽक्षं पुरस्तादक्षस्य । प्रादेशान्तरालं उपरवादुपरवस्यान्तरालपरिमाणमपि प्रादेश इत्यर्थः ॥

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादाय परिलिखितं रक्षः परिलिखिता अरातय इति त्रिर्दक्षिणपूर्वं परिलिखति ।२।

सावित्रेणाभ्रिलिङ्गेनादानम् ॥

एवमितरान्प्रदक्षिणमुत्तरापवर्गम् ।३।

परिलिखतीति शेषः । तत्र सत्याषाढादिभिः कैश्चित्क्रमान्तरस्येष्टत्वात् तन्निरासार्थं प्रदक्षिणवचनम् । उत्तरापवर्गं उत्तरपूर्वापवर्गम् ॥

एवमनुपूर्वाण्येवैषत ऊर्ध्वं कर्माणि क्रियन्ते ।४।

गतः ॥

अधस्तात्संतृण्णा भवन्ति। उपरिष्टादसंभिन्नाः ।५।

अधस्तादेकीभूता भवन्ति. उपरिष्टादसंकीर्णाः ॥

तूष्णीं बाहुमात्रान्खात्वा रक्षोहणो वलगहनो वैष्णवान्खनामीति खनति ।६।

तूष्णीं सर्वान्खात्वा ततो दक्षिणपूर्वं मन्त्रेण खनति ॥

एकवदुपरवमन्त्रानेके समामनन्ति । ७ ।

यथा रक्षोहणं वलगहनं वैष्णवमिति संनम्य इममिति च ॥

विराडसीति बाहुमुपावहृत्येदमहं तं वलगमुद्वपामीत्युद्युप्योपरवन्यन्ते ऽवबाधते गायत्रेण छन्दसावबाढो वलग इति । ८ ।

उद्दुप्य पांसूनुद्धृत्य न्यन्ते ऽवबाधते बिलसमीपदेशं हस्तेनावपीडयति ॥

हरामि वैष्णवानिति हरति । अवबाढा दुरस्युरित्यग्रेणोपस्तम्भनं निवपति । ९ ।

गतौ ॥

एवं सर्वान्करोति । १० ।

एवं खननादिनिवपनान्तेन विधिना अन्यानपि करोति ॥

एतावन्नाना । पूर्वेणपूर्वेण मन्त्रेण बाहुमुपावहृत्योत्तरेणोत्तरेण छन्दसावबाधते । ११ ।

पूर्वेणपूर्वेणेति सम्राडसीत्यादेरुत्तरोत्तरस्यैव मन्त्रस्य वक्ष्यमाणच्छन्दोऽपेक्षया पूर्वत्वाभिधानम् । सम्राडसीत्यादिनोत्तरोत्तरेण पूर्वं बाहुमुपावहृत्य ततस्त्रैष्टुभेन जागतेनेत्यवबाधनमन्त्रादिभूतेनोत्तरोत्तरेण छन्दसावबाधत इत्यर्थः ॥

गायत्रं त्रैष्टुभं जागतमानुष्टुभं पाङ्क्तमित्याम्नातानि भवन्ति । १२ ।

छन्दांसीति शेषः । पाङ्क्तं चानुष्टुभेन विकल्पते ॥

इत्येकादशी कण्डिका ।

प्रथमं वा सर्वेषु । १ ।

प्रथममेव वा छन्दः सर्वेषूपरवेषु भवेद्यत्स्वशाखायामाम्नातम् ॥

विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणां हन्तेति बाहू उपावहरतोऽध्वर्युर्यजमानश्च । २ ।

युगपदुभावेकैकस्मिन्बाहू क्षिपतः ॥

संमृश इमानायुषे वर्चसे च देवानां निधिरसि द्वेषोयवनः । युयोध्यस्मद्द्वेषांसि यानि कानि च* चकृम ॥ देवानामिदं निहितं यदस्त्यथाभाहि प्रदिशश्चतस्रः । कृण्वानो अन्याँ अधरान्सपत्नानित्युपरवान्संमृश्य दक्षिणपूर्वं यजमानोऽवमृशति । उत्तरापरमध्वर्युः । ३ ।

एवं तत्रतत्र बाहू उपावहृत्य तंतं संमृश्य च ततः पृथगेनानवमृशतः ॥

अथ यजमानः पृच्छत्यध्वर्यो किमत्रेति । भद्रमितीतरः प्रत्याह । तन्नौ सहेत्युक्त्वोत्तरपूर्वं यजमानोऽवमृशति । दक्षिणापरमध्वर्युः । तथैव प्रश्नः प्रतिवचनं च । तन्म इत्याह यजमानः । ४ ।

गतः ॥

---

* च is missing in the MSS. See Maitr. Saṃh. I. 2, 10.

रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति यवमतीभिरुपरवान्प्रोक्ष्योत्तरैर्मन्त्रैरवनयामीति प्रोक्षणीशेषमवटे ऽवनीय यवो ऽसीति यवमवास्यावस्तृणामीति बर्हिषावस्तीर्याभिजुहोमीत्याज्येनाभिजुहोति। ५।

अवस्तरणं अवटोदरस्तरणम्॥

एवं सर्वान्करोति। ६।

एवं प्रोक्षणाद्यभिहोमान्तेन विधिना दण्डकलितवदभ्यस्तेन सर्वानेकैकं संस्करोति॥

रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी इत्यधिषवणफलके प्रोक्षति। ७।

इति द्वादशी कण्डिका।

औदुम्बरे कार्ष्मर्यमये पालाशे वा शुष्के तष्टे प्रधिमुखे पुरस्तात्समाविकर्ते पश्चात्। १।

ययोरुपरि सोमः सूयते ते अधिषवणफलके। प्रधिः चक्रस्य पार्श्वं फलकं. तस्येव मुखं ययोस्ते प्रधिमुखे। अविकर्तच्छेदनं सम ऋजु ययोर्न तु प्रधिमुखवद्वक्रस्ते समाविकर्ते॥

न संतृणत्त्येकाहे। तत ऊर्ध्वं संतृद्ये। २।

संतर्दनं कपाटवत्कीलेनोपश्लेषणम्। तत ऊर्ध्वं सत्राहीनेषु॥

उक्थ्यादिषु वा संतृणत्ति । ३ ।

अथो खलु दीर्घसोमे संतृद्ये धृत्या इति श्रुतिः । उक्थ्यादिसंस्थोत्कर्षनिमित्तं द्राघिमाणमपि गृह्णात्येवेति भावः ॥

अथैने उपरवेषूपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति । ४ ।

युगपदुभे उपदधाति ॥

द्वौ दक्षिणेनापिदधाति । द्वावुत्तरेण । ५ ।

द्वावुपरवौ ॥

संहिते पुरस्ताद्द्व्यङ्गुलेन पश्चादसंहिते भवतः । ६ ।

पुरस्तात्संहिते भवतः । पश्चात्तु फलकान्तयोर्द्व्यङ्गुलमात्रमन्तरालं स्यात् ॥

अथैने उत्तरैर्मन्त्रैः पर्यूहामीति प्रदक्षिणमुपरवपांसुभिः पर्युह्य परिस्तृणामीति बर्हिषा परिस्तीर्योत्तमेनाभिमन्त्रयते । ७ ।

गतः ॥

एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमुपरवपांसुभिश्चतुरश्रं खरं करोति सोमपात्रेभ्य आसनम् । ८ ।

सोमपात्रासादनार्थमुपरवपांसुभिरुन्नतां वेदिं करोति ॥

पुरस्तात्संचरं शिनष्टि । ९ ।

खरस्य पुरस्ताद्धविर्धान एव शिनष्टि ॥

अन्तरा चात्वालोत्करावाग्नीध्रचात्वालौ वाध्वर्युहृ-शीकवश्च संचरेयुः। १०।

हृशीकवः द्रष्टारः. ते नित्यमनेन पथा संचरेयुः निष्क्रमणप्रवेशने कुर्युः ॥

सर्वतः प्रसुते हृशीकवः संचरेयुरित्येके। ११।

अथवा प्रसुते सोमे सुत्ये ऽहनि हृशीकवो यथाकामं संचरेयुः। सर्वत इति वचनात् अन्तराग्निगमने ऽपि तेषामदोष इति केचित् ॥

इति त्रयोदशी कण्डिका।

इति पञ्चमः पटलः।

चात्वालाद्धिष्णियानुपवपति। १।

उक्तं शुल्बे पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते. चतुरश्राः परिमण्डला वा धिष्णिया इति। पिशीलमिति बाह्वोरन्तरालमाचक्षते। तान्यथाशुल्बं मीत्वा चात्वालात्पांसूनाहृत्योपवपति ॥

अन्तराग्नीध्र आग्नीध्रीयमुत्तरे वेद्यन्त उत्तरतः संचरं शिष्ट्वा। २।

आग्नीध्रागारस्यान्तः प्रागायामस्य मध्य उत्तरवेद्यन्ते आग्नीध्रीयमुपवपति। तस्य चोत्तरतो ऽन्तर्वेद्येव संचरं शिनष्टि ॥

सदसीतरान्पूर्वार्धे पुरस्तात्संचरं शिष्ट्वा। ३।

सदसः पूर्वार्ध इतरानुपवपति। तेषां च पुरस्तादन्तः सदस्येव संचरः शिष्यते॥

पृष्ठ्यायां होत्रीयम्। तं दक्षिणेन प्रशास्त्रीयम्। ४।

यथा पृष्ठ्यामध्ये भवति तथा होत्रीयमुपवपति। दक्षिणतोऽस्य प्रशास्त्रीयम्॥

उत्तरेण होत्रीयमितरानुदीच आयातयति। ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्येति। ५।

इतरान्धिष्णियान्यथोक्तेन क्रमेण गमयति॥

बहिः सदसो मार्जालीयं दक्षिणे वेद्यन्ते दक्षिणतः संचरं शिष्ट्वा सममाग्नीध्रीयेण। ६।

सममाग्नीध्रीयेणेति वेद्यायामस्य यावत्यध्वन्याग्नीध्रीयस्तावतीत्यर्थः॥

विभूरसीत्यष्टाभिः प्रतिमन्त्रम्। ७।

उपवपतीति शेषः॥

एतानेवोपस्थानान्व्याघारणांश्चैके समामनन्ति। ८।

एतैर्मन्त्रैरुपोप्य पुनरेतैरेवास्मिन्काल उपस्थानं व्याघारणकाले व्याघारणं चैकेऽधीयते॥

अनुदिशतीतरानध्वनामध्वपते नमस्ते अस्तु मा मा हिंसीरिति तंतमभिक्रामम्। ९।

इतरान् वक्ष्यमाणान् धिष्णियाननेन मन्त्रेणाभिक्रम्याभिक्रम्यानुदिशति। वक्ष्यमाणैर्मन्त्रैरनुमन्त्रणमेवानुदेशनम्। तत्र ब्रह्मादीनामपि धिष्णियव्यपदेशः तत्साहचर्यात् न्यन्ये धिष्णिया उप्यन्ते नान्य इति ब्राह्मणानुसाराच्च द्रष्टव्यः॥

सम्राडसि कृशानुरित्याहवनीयम्। परिषद्यो ऽसि पवमान इति बहिष्पवमानास्तावम्। प्रतक्वासि नभस्वानिति चात्वालम्। असंमृष्टो ऽसि हव्यसूद इति शामित्रम्। समूह्यो ऽसि विश्वभरा इत्युत्करम्। ऋतधामासि सुवर्ज्योतिरित्यौदुम्बरीम्। १०।

इति चतुर्दशी कण्डिका।

ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्माणम्। सदस्यो ऽसि मलिम्लुच इति सदस्यम्। समुद्रो ऽसि विश्वभरा इति सदः। अजो ऽस्येकपादिति शालामुखीयम्। अहिरसि बुध्निय इति प्राजहितम्। कव्यो ऽसि कव्यवाहन इति दक्षिणाग्निम्। आयुर्बृहत्तदशीय तन्मावतु तस्य नाम्ना वृश्चामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः। विश्वायुर्वामदेव्यं तदशीय तन्मावतु तस्य नाम्ना वृश्चामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः। आयुःपति रथंतरं तदशीय तन्मावतु तस्य नाम्ना वृश्चामि यो ऽस्मान्द्वेष्टि

यं च वयं द्विष्म इत्येतैश्च प्रतिमन्त्रं हविर्धानाग्नीध्र-सदांसीति । १ ।

यत्र देशे बहिष्पवमानः स्तोष्यते स बहिष्पवमानास्तावः. यत्र आमिक्षो निधास्यते स आमिक्षः ॥

रौद्रेणानीकेनेति सर्वत्रानुषजति । २ ।

सर्वत्र उपोप्तेष्वनुद्दिष्टेषु च ॥

स्तृणीत बर्हिः प्र व्रतं यच्छतेति संप्रेष्यति । ३ ।

स्तृणीत बर्हिरिति संप्रैषात् स्तीर्ण एव बर्हिषि पुनः स्तृणाति. यथोक्तं ब्राह्मणे उत्तरं बर्हिष उत्तरबर्हिः स्तृणातीति ॥

पूर्वस्मिन्वा स्तरण एतं संप्रैषं ब्रूयात् । ४ ।

अग्नेर्वा बर्हिषा बहुलमिति यत्पूर्वमुक्तं स्तरणं तत्र वा स्तृणीत बर्हिरित्येतं संप्रैषांशं ब्रूयात् अत्र त्वसंप्रेषित एव स्तृणातीत्यर्थः । एवं च स्तरणमुभयत्र नित्यं संप्रैषस्त्वन्यतरत्रैवेत्युक्तं भवति । अथापरा व्याख्या । संप्रैषमपि पूर्वत्रैव स्तरणे ब्रूयात्. नात्र संप्रैषो न च स्तरणमिति । एतदुक्तं भवति. पूर्वं स्तरणं नित्यं उत्तरं तु वैकल्पिकं. संप्रैषस्तु सत्युत्तरे तत्रैव भवति असति पूर्वत्रेति । तदा तूत्तरं बर्हिष उत्तरबर्हिः स्तृणातीति श्रुतिरग्नीषोमीयबर्हिरभिप्राया द्रष्टव्या ॥

अथ स्तरणमुत्तरवेदिश्रोपरवधिष्ण्ययाम्नाभिस्तृणी-यात् । ५ ।

अथ तृणमिति द्वितीये स्तरण इत्यर्थः। व्याख्यानान्तरे तथापि स्तरणपक्ष इत्यर्थः॥

**अथैकस्तनं व्रतं यजमानाय प्रयच्छति। ६।**

दक्षिणेनोत्तरवेदिकमासीनाय प्रयच्छति॥

**अर्धव्रतमत्र वाजसनेयिनः समामनन्ति। अर्धमन्तरेणोत्तमे प्रवर्ग्योपसदौ। ७।**

विभज्य वैकस्तनमेवमर्धमर्धं व्रतयेत्॥

इति पञ्चदशी कण्डिका।

इति षष्ठः पटलः॥

**अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति। १।**

शाखाहरणादि तन्त्रं प्रक्रमयति॥

**तस्य निरूढपशुबन्धवत्कल्पः। २।**

निरूढपशुबन्धो निरूढपशुबन्धानां प्रकृतिरैन्द्राग्नः. तेनास्य कल्पो व्याख्यातः। नन्वग्नीषोमीय एव सर्वपशूनां प्रकृतिः तत्र धर्माणामाम्नानात्. तत्कथमुक्तं ऐन्द्राग्नः प्रकृतिरिति। नैवं. उभयोः प्रकृतित्वात्। यथैव ह्यग्नीषोमीयः प्रकृतिः तत्राध्वर्यवाणां धर्माणामाम्नानात्. तथैन्द्राग्नो ऽपि प्रकृतिरेव होतृधर्माणां तत्राम्नानात्॥

अत एवाग्नीषोमीयमधिकृत्याम्नाता अपि धर्मास्तत्र निबद्धाः सूत्रकृता। तत्र त्वयं विवेकः. क्रत्वन्तःपातिनामग्नीषोमीयः प्रकृतिः, इतरेषामैन्द्राग्न इति। वक्ष्यति च स सवनीयस्येत्यादि। भारद्वाजस्त्वाह. ऐन्द्राग्नः काम्यानां पशूनां प्रकृतिः. अग्नीषोमीय इतरेषामिति॥

षड्ढोता पश्विष्टिश्चाङ्गभूतेषु न विद्यते। ३।

ये ऽन्तस्तन्त्रवर्तिनो ऽङ्गपशवः समानदेशकालाश्रयश्राद्धिनो ऽग्नीषोमीयाद्यानूबन्ध्यान्ताः तेषु षड्ढोता न भवति. आरम्भार्थत्वात्. प्रधानारम्भेणैव तेषामारम्भसिद्धेश्च। तथा पश्विष्टिरपि देवतापरिग्रहार्थत्वान्निवर्तते दीक्षणीययैव तु कृतार्थत्वात्॥ ये तु बहिस्तन्त्रवर्तिनो भिन्नदेशकालाश्रयश्राद्धिनो वायव्यपशुपशुमोचामणादयः तेषां सत्यपि कथंचिदङ्गभावे भवत्येव षड्ढोता पश्विष्टिश्च॥

आतिथ्याबर्हिस्तूष्णीमुपसंनह्यति। ४।

अविस्रस्ते शुल्बे तेनैव संनह्यति। विस्रस्ते त्वन्यत्करोति॥

तांश्च परिधीन्पाशुक इध्मे। ५।

तूष्णीमुपसंनह्यतीति शेषः। अतः संभरणमन्त्रे त्रीन्परिधीनिति लोपो विंशतिधेत्यूहः संचरा इति संनामश्च॥

पात्रसंसादनकाले प्रचरणीं स्रुचं सप्तमीं प्रयुनक्ति। ६।

सप्तमात्मा पात्रसंसादनात्। तत्सादनकाले तु ध्रुवाया अनन्तरं प्रचरणीं प्रयुनक्ति संमार्ष्टि च॥

**तस्या जुहूवत्कल्पः । ७ ।**

संमार्जनादिषु जुहूवदस्याः कल्पः । पर्णमयी चेष्यते । अत एव च लिङ्गाद्व्यापृतायां जुह्वामनया ह्रयन्ते मौमिक्य आहुतयः । तदुक्तं भारद्वाजेन . व्यापृतायां स्रुवेण प्रचरण्या सोम इति ॥

**आज्यग्रहणकाले प्रचरण्यामादितस्तूष्णीं चतुर्गृहीतं गृहीत्वा पाशुकान्याज्यानि गृह्णाति । ८ ।**

समानमाज्यग्रहणात् । उत्तरपरिग्राहेध्माबर्हिरुपसादने तु न भवतः . कृतकरिष्यमाणत्वात्तयोः । तत्र वेद्याः पश्चार्धे द्वादश प्रक्रमान्हित्वा रुपयस्य वर्त्मन्याज्यानि गृह्णाति ॥ अथैकेषाम् । प्राग्वंश इति पक्षेऽपि तत्र सादितमेवाज्यं प्राग्वंशे प्रत्याहृत्य गृह्णाति । तथा च सत्याषाढः . यत्प्रागाज्यग्रहणात्कृत्वा प्रत्याहृत्य गार्हपत्ये पाशुकान्याज्यानि गृह्णातीति ॥

**प्रैतु ब्रह्मणस्पत्नीति प्रतिप्रस्थाता पत्नीमुदानयति ।९।**

प्राग्वंशसमीपादुत्थाप्यानयति ॥

**अथाहमनुकामिनीति पत्नीशालामुखीयमुपोपविश्य सुप्रजसस्त्वा वयमिति जपति । १० ।**

शालामुखीयमुप शालामुखीयसमीपे पत्यतः परमास्ते ॥

**उपस्थे ब्रह्मा राजानं कुरुते । ११ ।**

ब्रह्मत्वोक्तस्य विधेरवमरख्यापनार्थं वचनम् ॥

समपिव्रतान्ह्वयध्वमिति संप्रेष्यति । १२ ।

अपि व्रतं संभोजनं येषां ज्ञातीनां तान्संह्वयध्वं आह्वयतेति परिकर्मिणः संप्रेष्यति ॥

यजमानस्यामात्यान्संह्वयन्ति । १३ ।

गतः ॥

अध्वर्युं यजमानो ऽन्वारभते । यजमानं पत्नी । पत्नीमितरे पुत्रभ्रातरः । १४ ।

पत्नीमेवेतरे पुत्रभ्रात्रादयो ऽमात्या अन्वारभन्ते. नान्योऽन्यम् ॥

अहतेन वाससामात्यान्संप्रच्छाद्य वाससो ऽन्ते स्रुग्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहोति ।१५।

अमात्यान्संप्रच्छाद्येति वचनान्नाध्वर्युर्ज्ञातिः संछाद्यते ॥

त्वं सोम तनूकृद्भ्यो जुषाण इत्येताभ्यामर्धं गार्हपत्ये । १६ ।

जुहोतीति शेषः ॥

आ सोमं ददते । १७ ।

इति षोडशी कण्डिका ।

---

आ ग्राव्ण आ वायव्यान्या द्रोणकलशम् । उत्पत्नीमानयन्ति । अन्वनांसि प्रवर्तयन्ति यायावरस्य यान्व-

परस्मिन्गार्हपत्ये भवन्ति। अजमनुनयन्ति। इध्मा-बर्हिराज्यानि प्रोक्षणीरित्यनुहरन्ति। १।

अथ सोमादीनामेकैककर्तृकाणामपि कर्तृसमुदायापेक्षया बहुवचनम्। अग्न्यालोकेन विधिना ब्रह्मा सोममादत्ते। परिकर्मिण्यो ब्राह्मणः। अपरः सौमिकान्यूर्ध्वपात्राणि। अन्यः कलशम्। इतरः पत्नीं नयति॥ पत्नीनयनवचनमादरार्थं. अन्वारम्भेणैव सिद्धत्वात्॥ तथा यानि पुराणगार्हपत्ये पूर्वमवस्थितानि यज्ञार्थद्रव्यवाहीनि शकटानि तान्यप्यद्यतनं गार्हपत्यं शालामुखीयमनुप्रवर्तयन्ति। तत्तु यायावरस्य यजमानस्यैव। शालीनानां तु तत्रैवावस्थितानि भवन्ति। तथाग्नीषोमीयमजमनुनयन्ति। तथेध्माबर्हिरप्यनुहरन्ति। तस्य लिदा-नीमनुहरणवचनात् प्रागनुपसादितमत्रैवास्ते। आज्यानि च प्राग्वंशे गृहीतानि ततो ऽनुहरन्ति। हस्यस्य वर्त्मगृहीतानि तु ततः प्राग्वमेवाध्वानमनुहरेयुः. अन्तर्वेदिगृहीतस्य प्राचीनहरणप्रतिषेधात्। प्रोक्षणीस्तु प्रत्याहृत्यानुहरन्ति॥

शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुप-यम्याग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति। प्रणीयमानाभ्यामनुब्रूहीति वा। २।

आदीपनेनोद्धरणं लक्ष्यते. पृथगुद्धरणस्यावचनात्। अत आदी-प्योद्धृत्योपयम्य संप्रेष्यति॥

प्रथमायां त्रिरनूक्तायामयं नो अग्निर्वरिवः कृणोत्वि-त्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चो ऽभिप्रव्रजन्ति। ३।

तत्राध्वर्युब्रह्मयजमानानां मन्त्रः। अत्राह बौधायनः. संप्रच्छन्नास्त्वेव गच्छेयुराहवनीयादिति॥

आग्नीध्रीये ऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्धमाज्यशेषस्य जुहोति। ४।

समन्वारब्धेष्वेव जुहोति॥

ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उपवासयति। ५।

उपवासयति स्थापयति॥

उत्तरेणाग्नीध्रीयमाहवनीयं गत्वोरु विष्णो विक्रमस्वेति सर्वमाज्यशेषं जुहोति। ६।

गतः॥

हुते ऽमात्याः प्रदक्षिणमावृत्य यथेतमुपावर्तन्ते। ७।

प्रतिगच्छन्त्यमात्याः. इतरे तु धारयन्त्येवेध्माबर्हिरादीन्योपसादनात् निदधति वा क्वचिदनुगुप्तानि॥

सोमो जिगाति गातुविदित्यपरया द्वारा हविर्धानं राजानं प्रपादयति। पूर्वया गतश्रियः। ८।

ब्रह्मणा सह प्रपाद्य ततस्तस्य हस्तादादत्ते॥

पूर्वया यजमानः प्रपद्यते। ९।

गतः॥

दक्षिणस्य हविर्धानस्य नीडे पूर्ववत्कृष्णाजिनास्तरणं राज्ञश्चासादनम्। १०।

पूर्ववत् शकटवत्। तेनात्राप्यग्रयजुषेणैव राज्ञः सादनमित्युक्तं भवति। व्याख्यातं चैतदामन्त्र्यासादने॥

इति सप्तदशी कण्डिका।

अथैनं यजमानो देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोम इति। १।

संप्रयच्छति रक्षणार्थं परिददाति॥

एतत्त्वं सोम देवो देवानुपागा इत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्य नमो देवेभ्य इति प्राचीनमञ्जलिं कृत्वा स्वधा पितृभ्य इति दक्षिणेदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्यमिति प्राङ् प्रेक्षते। सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते। वैश्वानरं ज्योतिरित्याहवनीयम्। २।

आध्वर्यवाण्येतानि कर्माणि, परस्ताद्यजमानग्रहणात्, ब्राह्मणे च यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यादिति यजमानस्य परोक्षवन्निर्देशात्, व्यक्तवचनाच्च बौधायनेन। यद्यपि सत्याषाढभारद्वाजाभ्यां याजमानत्वमेव व्यक्तोक्तं तथापि नायं सूत्रकृतोऽभिप्राय इत्याध्वर्यवाण्येव स्युः॥

अथ यजमानोऽवान्तरदीक्षां विसृजते। ३।

गतः॥

अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसीत्याहवनी-
यमुपतिष्ठते। एतेनैवास्मिन्त्समिधमादधातीति वाज-
सनेयकम्। ४।

व्याख्यातः प्राक्॥

वितरां मेखलां विस्रंसते। वितरां मुष्टी कर्षते। ५।

शिथिलयति॥

अथ दण्डप्रदानमेके समामनन्ति। ६।

एतावन्तं कालं धारयित्वात्र वा प्रयच्छेत्॥

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्यां स्वाहो-
रोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति मुष्टी विसृ-
जते। ७।

गतः॥

स्वाहा वा विवाते विसृज इति वाचम्। ८।

या नित्यं संध्ययोर्नियम्यते वाक्तामतः परं विसृजते॥

निवर्तते व्रतम्। ९।

व्रतमप्यतः परं निवर्तते औपसदं दैक्षं च। दैक्षो ऽत ऊर्ध्वं व्रत-
कल्प इति तु सत्याषाढः। न तदिष्टं सूत्रकृतः, निवर्तते व्रतमित्य-

विशेषवचनात्. सर्वाग्न्यायमाग्निर इत्याग्निरे विनियोगाच्च तस्य। वक्ष्यति च या यजमानस्य व्रतधुक्तस्या आग्निरं कुरुतेति॥

सोमान्हविःशेषानिति सुत्ये ऽहनि भक्षयति।१०।

गतः॥

उत्तरेणाहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति। दक्षिणमिध्ममुत्तरं बर्हिः।११।

वचनादत्रोपसादनस्योत्कर्षः॥

इत्यष्टादशी कण्डिका।

---

प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते।१।

प्रोक्षणादयः संस्कारा बर्हिषो ऽप्यविकृताः. तदर्थत्वादुपसादनस्य। तथा बर्हिः प्रोक्षतीत्येव कल्पान्तरकाराः॥

स्तरणकाले ऽपरेणोत्तरवेदिं बर्हिः स्तृणाति।२।

गतः॥

स्तरणमन्त्रो ऽभ्यावर्तते।३।

देशपृथक्त्वादिति भावः॥

आज्यानां सादनादि पाशुकं कर्म प्रतिपद्यते समानमा प्रवरात्।४।

गतः॥

दैवं च मानुषं च होतारौ वृत्वाश्रावमाश्रावमृतु-प्रैषादिभिः सौमिकानृत्विजो वृणीते। ५।

अग्निर्दैवो होतेति दैवं असौ मानुष इति मानुषं च होतारौ वृत्वा ततः पाशुकं मैत्रावरुणं च वृत्वा तत ऋतुप्रैषादिभिः ऋतु-प्रैषाणां प्रतीकैः सौमिकानृत्विजो वृणीते॥

इन्द्रं होत्रात्सजूर्दिव आ पृथिव्या इति होतारम् । ६ ।

गतः॥

अपिसृज्य तृणमस्फ्य उत्तरान्। ७।

होतारं वृत्वा वेद्यां तृणमपिसृजति स्फ्यं च सह संनहनैस्तत उत्त-रान्वृणीते॥

अग्निमाग्नीध्रादित्याग्नीध्रम्। अश्विनाध्वर्यू* आध्व-र्यवादित्यध्वर्यू। मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति मैत्रावरुणम्। इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छं-सिनम्। मरुतः पोत्रादिति पोतारम्। ग्रावो नेष्ट्रा-दिति नेष्टारम्। अग्निर्दैवीनां विशां पुरएतायं यज-मानो मनुष्याणां तयोर्नावस्थूरि गार्हपत्यं दीदयच्छतं हिमा द्वा यू राधांसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति यजमानम्। ८।

* Thus all MSS. like Káty. S'rauta S. 9, 8, 9.

ऋतुयाजार्थमेतद्वरणं. तद्ग्रहणमेव वरणात्. तत्रैवसंयोगात्॥

अयं सुन्वन्यजमानो मनुष्याणामिति वा। ९।

यजमानशब्दात्पूर्वं सुन्वच्छब्दावापमात्रेण विशेषः॥

सवनीये वरणमेके समामनन्ति। तत्र सुन्वन्निति ब्रूयात्। १०।

सवनीयवरणपक्ष एवायं पाठो व्यवतिष्ठते। अन्यथा लिङ्गविरोधादिति भावः॥

सर्वत्रोपांशु नामग्रहणम्। मानुष इत्युच्चैः। ११।

सर्वेषु वरणेषु तस्यतस्य नाम प्रथमया विभक्त्योपांशु गृहीत्वा मानुष इत्युच्चैर्वदति। तत्रामू मानुषाविति नामग्रहणमध्वर्य्वोः॥

इत्येकोनविंशी कण्डिका।

इति सप्तमः पटलः॥

---

प्रहृतःप्रहृतः प्रहृतहोमौ जुहोति जुष्टो वाचो भूयासमृचा स्तोमं समर्धयेत्येताभ्याम्। १।

आत्मवरणानन्तरमध्वर्यू जुहुतः। तथा यजमानः। तथा च हुत्वाध्वर्युरुत्तरान्वृणीत इति सत्याषाढः॥

दिवा प्रयाजैः प्रचर्यास्तंयन्तमनूयाजैरुपासते। २।

अस्ति तावदग्नीषोमीयमधिकृत्य विधिः. तस्मादभिनीयैवाह्नः पशुमालभेत. तेनाभिनीयैव रात्रेः प्रचरेदिति। तेन तावदहोरात्राभ्यां

पशुः संस्थापनीय इति स्थिते भवत्यपेक्षा कियदह्नि प्रयोक्तव्यं कियच्च रात्राविति। तत्र नाना मतं दृश्यते सूत्रकृताम्। भारद्वाजस्तावदाह. तं दिवोपाकृत्य नक्तं संस्थापयतीति। सत्याषाढस्तावदाह. अस्तमिते संवादप्रभृतिना पशुतन्त्रेण प्रतिपद्यत इति॥ मतद्वैधं चाचार्यस्य भवति। यथा रात्रौ प्रचरणश्रुतेर्वपापुरोडाशाङ्गप्रचाराणामपि प्रधानत्वाच्च त्रयो ऽपि रात्रावेव भवेयुः. दिवा तु प्रयाजान्तमेव कार्यमित्येकः कल्पः। तदुक्तं दिवा प्रयाजैः प्रचर्येति। प्रयाजैः प्रचर्यैव दिवा कार्याः. शेषं वपाप्रचारादि नक्तमित्यर्थः। यद्यपि स्यातामाज्यभागौ तद्यपि रात्रावेव स्यातां प्रधानस्यानुरोधात्. तथास्मिन्कल्पे वसतीवरीग्रहणमप्यस्तमित एव बोढं भवति॥ अथ श्रुत्यन्तराभिप्रायादस्या एवं श्रुतेरभिप्रायभेदाद्वा अनूयाजान्तं दिवेति द्वितीयः कल्पः। तदुक्तं अस्तंयन्तमनूयाजैरुपासत इति। अस्तमयसमय एवानूयाजाः स्युः. ततः परं रात्राववेत्यर्थः॥ अथापरा व्याख्या। प्रयाजग्रहणं प्रदर्शनार्थं. दिवैव प्रयाजादिभिश्चरिलानूयाजैरप्यस्तंयत्यादित्ये चरन्ति. ततः परं रात्रावेवेति। दिवा प्रयाजैः प्रचर्येत्यनुवादस्तु रात्रौ प्रचरणश्रुतेः प्रयाजप्रभृत्येवाङ्गं प्रधानं वा प्रचरणात्मकं सर्वं रात्राविति व्यामोहव्यपोहार्थम्। सर्वथाप्यनूयाजेभ्यः परं अस्तमित एवेति सिद्धं भवति॥

**हुतायां वपायां मार्जयित्वा सुब्रह्मण्य पितापुत्रीयां सुब्रह्मण्यामाह्वयेति संप्रेष्यति । ३ ।**

समानमा वपायाः। तत्र यर्हि पशुमाप्रीतमुदञ्चं नयन्तीत्युक्तमिति

यदुक्तं प्राक् तन्नात्र विस्मर्तव्यम्। तत्र चाग्नीध्रः प्राजहितादग्निमुद्धृत्य पूर्वया द्वारा निर्हृत्योत्तरेणाग्नीध्रीयं पशुसमीपं नीत्वा पशोः पुरस्तादेति। दक्षिणया द्वारा निर्हृत्य दक्षिणेन मार्जालीयमिति केचित्। तदयुक्तं प्रदक्षिणत्वविरोधात् उत्तरतउपचारत्वविरोधाच्च। ततस्तमग्निं शामित्रस्थाने निधाय वपायाः पुरस्तात्तदेकदेशं नीत्वा पुनस्तत्रैव प्रत्यपिसृजति। प्राजहित इत्यपरम्। केचिदाहवनीयादप्युल्मुकमादाय पशुवपयोः पुरस्तान्नीत्वा पुनस्तत्रैव प्रत्यपिसृजन्ति। तत्तु न मृष्यते. निरूढे शामित्रस्यैवानयनदर्शनात्॥ पितरः पुत्राश्च यस्यां कीर्त्यन्ते सा पितापुत्रीया॥

पितापुत्रीयैवात ऊर्ध्वं सुब्रह्मण्या भवति। ४।

गतः॥

आहृतायां वसतीवरीः कुम्भेन गिरिभिदां वहन्तीनां प्रत्यङ्तिष्ठन्गृह्णाति। ५।

सोमोपसर्गार्था आपो वसतीवर्यः। गिरिभिदां वहन्तीनां या गिरिं भित्त्वा निर्गता वहन्ति नद्यः तासामपो गृह्णाति॥

नान्तमा वहन्तीरतीयात्। ६।

अन्तमाः समीपगताः। ता अगिरिभिदो ऽपि नातीयात्॥

छायायै चातपतश्च संधौ गृह्णाति। ७।

अभ्रच्छायायास्तातपस्य च संधौ गृह्णाति॥

यद्यभिच्छायां न विन्देदात्मनो वृक्षस्य कूलस्य वा छायायाम्। ८।

यद्यभ्रच्छायां नाभिविन्देदात्मादिच्छायायाः संधौ गृह्णाति॥

प्रतीपमुपमारयन्हविष्मतीरिमा आप इति गृह्णाति। ९।

प्रतीपमुपमारयन् प्रतिस्रोतः कुम्भमुपमज्जयन्॥

यस्यागृहीता अभिनिम्रोचेत्सुवर्न घर्मः स्वाहेति पञ्चार्काहुतीर्हुत्वा वरे दत्त उल्कामुपरिष्टाद्धारयमाणो गृह्णीयात्। हिरण्यं वावधाय। १०।

वरदानान्तं नित्यं. उल्काहिरण्ययोर्विकल्पः। उल्कां दीप्ताग्रां स्फुलिङ्गां उपरि कुम्भस्य धारयन्गृह्णीयात्. हिरण्यं वा कुम्भे ऽवधाय॥

यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्। ११।

अस्मिंस्तु कल्पे ऽर्काहुत्यादिरुल्काहिरण्यान्तः सर्वः पूर्वो विधिर्निवर्तते॥

सोमयाजी बहुयाजी भवतीति विज्ञायते। १२।

सोमयाज्येव बहुयाजीत्युच्यते. तथा च श्रुतेः. स हि गृहीतवसतीवरीक इति लिङ्गाच्च॥

अग्नेर्वो ऽपन्नगृहस्य सदसि सादयामीत्यपरेण शाला-मुखीयमुपसादयति। सुम्नाय सुम्निनीः सुम्ने मा धत्तेति

सर्वेषु वसतीवरीणां सादनेषु यजमानो जपति। अग्नीषोमीयस्य पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते। १३।

गता ॥

न यजमानो ऽग्नीषोमीयस्याश्नाति। अश्नीयाद्वा ।१४।

अग्नीषोमीयसंबन्धि मांसं पुरोडाशं च नाश्नीयात्. अश्नीयाद्वा. तस्मात्तस्य नाश्यं तस्मादाश्यमित्युभयश्रुतेरिति भावः ॥

न स्वरुं जुहोति। न हृदयशूलमुद्वासयति। एवं सवनीये। १५।

अग्नीषोमीयसवनीयानूबन्ध्यानां समाने स्वरुशूले। तेन ते अनूबन्ध्यायामेव प्रतिपाद्ये। यदा त्वनूबन्ध्यायाः स्थाने आमिक्षां करिष्यन्स्यात् तदा सवनीय एवेति द्रष्टव्यम् ॥

पत्नीसंयाजान्तो ऽग्नीषोमीयः संतिष्ठते। १६।

पुनरग्नीषोमीयग्रहणात्स एव पत्नीसंयाजान्तः. न तु तद्विकारः सवनीयादिः। तथा पत्नीसंयाजेभ्यः पराण्यङ्गानि सवनीये ऽनुवदिष्यति. यथा स्तीर्णे वेद इति। केचित्त्वाहुः. अग्नीषोमीयसवनीययोः साधारणमुत्तरं तन्त्रमिष्यते. संस्थावचनं त्वत्र विरमणमात्राभिप्रायं. यथा होमेषु पत्नीसंयाजान्तमहः संतिष्ठत इति ॥

इति विंशी कण्डिका।

निशायां वसतीवरीः परिहरत्यन्तर्वेद्यासीने यजमाने पत्न्यां च। १।

निशायां द्वितीययामे परिहरति परितो वेदिं हरति॥

नादीक्षितमभिपरिहरेत्। २।

ये ऽन्ये यजमानपत्नीभ्यां ते बहिरपक्रामन्ति॥

सव्ये ऽंसे ऽत्याधायापरेण प्राजहितं परिक्रम्य पूर्वया द्वारोपनिष्क्रम्य दक्षिणेन वेदिं गत्वा दक्षिणेन मार्जालीयं धिष्णियं परीत्य दक्षिणस्यामुत्तरवेदिश्रोण्यां सादयतीन्द्राग्नियोर्भागधेयी स्थेति। ३।

सव्ये ऽंसे दक्षिणे ऽंस इति तत्रतत्र यत्नविशेषस्त्वात्मनो ऽप्यनति-परिहारार्थं इत्यवगन्तव्यम्॥

दक्षिणे ऽंसे ऽत्याधाय यथेतं गत्वा पूर्वया द्वारोपनिष्क्रम्योत्तरेण वेदिं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्योत्तरस्यामुत्तरवेदिश्रोण्यां सादयति मित्रावरुणयोर्भागधेयी स्थेति। ४।

यथेतं गत्वा तेनैव मार्गेण यावच्चात्वालमुखीयं गत्वेत्यर्थः॥

सव्ये ऽंसे ऽत्याधाय यथेतं गत्वापरेणाग्नीध्रीयं धिष्णियमुपसादयति विश्वेषां देवानां भागधेयी स्थेति। ५।

नाम यावच्छालामुखीयं गच्छति. पूर्वया द्वारा निर्हृत्येत्यवचनात्। अतो यावदाग्नीध्रीयं यथेतं गत्वा तत्रोपसादयति ॥

यन्ते जाग्रतेति सन्ना अभिमन्त्रयते। ६।

आग्नीध्रीये सन्नानामेवेदमनुमन्त्रणं. आनन्तर्यात्. सन्नाःसन्ना इत्यवचनाच्च ॥

अथ प्रतिप्रस्थाता पयस्यार्थं सायंदोहं दोहयति। ।७।

तत्र मित्रावरुणौ रमयतां. मित्रावरुणाभ्यां देवभागमित्युभयोर्विकाराः प्रतिसंधातव्याः ॥

अध्वर्युः संप्रेष्यति या यजमानस्य व्रतधुक्तस्या आशिरं कुरुत या पत्निये तस्यै दधिग्रहाय या घर्मधुक्तस्यै दधिघर्माय तप्तमनातक्तं मैत्रावरुणाय शृतातङ्कं दधि कुरुतादित्यग्रहाय सुब्रह्मण्य सुब्रह्मण्यामाह्वय न सदस्युपवस्तवा इति। ८।

शृतातङ्क्यं दधि कुरुतेत्यस्य दधिग्रहायेत्यादिष्वनुषङ्गः। तत्राशृतेनाप्यातञ्चनेन दध्नः शक्यकरणत्वात् अतथाकरणार्थं शृतातङ्क्यविशेषणम्। न सदस्युपवस्तवै सदसि केनचिन्न वस्तव्यम् ॥

संप्रैषवत्कुर्वन्ति। ९।

तूष्णीं यथोक्तानि दधीनि कुर्वन्त्यृत्विजः ॥

**अथ सवनीयस्य सवनीयानामितीध्माबर्हिः संनह्यति । १० ।**

अथ अवसरे । इध्माबर्हिर्वचनात् सवनीयस्य पशोर्द्वैकालता नियम्यते । तत्र पशोरेवाङ्गानि सवनीयानामप्युपकरिष्यन्तीति प्रसङ्गाभिप्रायादुक्तं वेदितव्यं. सवनीयस्य सवनीयानामिति लिङ्गात् । तन्त्राभिप्रायमेव वा स्यात्. उत्कर्षेदित्यपरमिति वचनात् । तच्च तत्रैव दर्शयिष्यामः ॥

**न वा बर्हिः । प्रस्तरमेव । ११ ।**

संनह्यतीति शेषः । प्राकृतसंस्काररहितमपि महावेदिकमेव बर्हिषोऽर्थं समर्थं साधयितुमिति नान्यदाहार्यं. प्रस्तरस्तु परार्थोऽपि नास्तीति स आह्रियेतेति भावः । केचिदाहुः. अग्नीषोमीयबर्हिषोऽप्रहृतत्वात् तदेव सवनीयस्यापि बर्हिरिति । तदयुक्तं. आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य चेति नियमात्. अपवृक्ते* कर्मणि निरिष्टिकस्यानुपयोज्यत्वाच्च ॥ तत्र शाखामाहृत्य असिदादानादिविधिना निधनसंभरणवर्जं प्रस्तरमाहृत्य निधाय ततो वेदिदोहवर्जं परिस्तरणान्तो विधिः समानो दर्शेन । न त्वारण्याशनमिष्टं. सोमे पर्युदासात् । व्रतनिवृत्तिस्तु उक्तैव निवर्तते व्रतमिति ॥

**आग्नीध्रे हविर्धाने वा यजमानं जागरयन्ति । प्राग्वंशे पत्नीम् । १२ ।**

---

* Corrected ; all MSS. read अपवृत्ते.

आग्नीध्रे हविर्धाने वासीनं यजमानमार्याः पुण्यसंकथादिभिर्विनोदै-र्जागरयन्ति । तथा प्राग्वंशे पत्नीम् ॥

**आग्नीध्र एतां रात्रिमृत्विजो वसन्ति । १३ ।**

गतः ॥

**यजमानो राजानं गोपयति गोपयति । १४ ।**

गोपयति रक्षति दस्युभ्यः श्वापदादिभ्यश्च ॥

इत्येकविंशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिका-यामष्टमः पटलः ।

इत्येकादशः प्रश्नः ॥

ओम् ॥

महारात्रे बुद्ध्वाग्ने नयेत्याग्नीध्रमभिमृशति । १ ।

महती रात्रिः महारात्रिः । रात्रिशब्देन रात्रित्रिभागो लक्ष्यते । महती रात्रिः त्रिभाग इत्यर्थः ॥ किमत्र महत्त्वस्य नियामकमिति चेत्. वक्ष्यति अत्रानुदित उपांशुं जुहुयात् उदिते ऽन्तर्याममिति । तेनैवं जानीमः. यावता कालेनोपांश्वपर्यन्तं कर्मानुदिते ऽपवर्जिष्यते तावति बोद्धव्यमिति । तथा बुद्ध्वाचान्तो ऽग्ने नयेत्याग्नीध्रमभिमृशति ॥

इदं विष्णुर्विचक्रम इति हविर्धानम् । अग्न आयूंषि पवस इति स्रुचः । आ वायो भूष शुचिपा इति वायव्यानि । आ घा ये अग्निमिन्धत इति सदः । २ ।

सर्वत्राभिमृशतीत्यन्वयः । वायव्यानीति वचनात् न चमसानभिमृशति. यद्वायव्यं वा चमसं वेति लिङ्गात् । स्थालीस्त्वभिमृशत्येव. कास्मात्तस्याः स्थालीर्वायव्या सोमग्रहणीरिति लिङ्गात् ॥

प्रजापतिर्मनसान्धो ऽच्छेत इति त्रयस्त्रिंशतमाग्नीध्रे यज्ञतनूर्जुहोति । प्रथमेन मन्त्रेण हुत्वा पूर्वंपूर्वमनुद्रुत्योत्तरेणोत्तरेण जुहोति । ३ ।

गतौ ॥

प्रादेशमात्राण्यूर्ध्वसानून्युपरिष्टादासेचनवन्ति मध्ये संनतानि वायव्यानि भवन्ति । ४ ।

ऊर्ध्वसानूनि उच्छ्रितशिरांसि । आसेचनं बिलम् । उलूखलाकृतीनीत्युक्तं भवति ॥

तेषां यान्यनादिष्टवृक्षाणि वैकङ्कतानि स्युः । यो वा यज्ञियो वृक्षः फलग्रहिः । ५ ।

विकङ्कतस्याभावे वृक्षान्तरमपि यद्यज्ञार्हं तन्मयानि स्युः । व्याख्यातः फलग्रहिः ॥

को वो युनक्ति स वो युनक्त्विति खरे पात्राणि प्रयुनक्ति यान्यनाम्नातमन्त्राणि भवन्ति । ६ ।

खरादन्यत्र नायं मन्त्रः. यथैकधनादीनाम् ॥

अग्निर्देवतेति दक्षिणेंऽस उपांशुपात्रम् । ७ ।

प्रयुनक्तीति शेषः ॥

सोमो देवतेत्युत्तरमन्तर्यामस्य । ८ ।

तत उत्तरमन्तर्यामस्य पात्रं प्रयुनक्ति ॥

वृषन्नसीति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम् । ९ ।

उपांशुः सूयते येन स उपांशुसवनः । तस्य मुखं येन प्रदेशेनाहन्यते सोमः ॥

तमपरेण प्रत्यञ्चि द्विदेवत्यपात्राणि । १० ।

प्रत्यञ्चि प्रत्यगपवर्गाणि ॥

इन्द्रो देवतेति परिस्रगैन्द्रवायवस्य । बृहस्पतिर्देवतेत्यजगावं मैत्रावरुणस्य । अश्विनौ देवतेति द्विस्रक्त्याश्विनस्य । ११ ।

परिस्रक् परितोराम्नावत् । अजगावं अजस्तनचिह्नमित्याहुः । द्विस्रक्ति द्विकोणम् ॥

तान्यपरेण प्रबाहुक्शुक्रामन्थिनोः पात्रे । सूर्यो देवतेति दक्षिणं बैल्वं शुक्रस्य । चन्द्रमा देवतेत्युत्तरं वैकङ्कतं मन्थिनः । १२ ।

प्रबाहुक् समम् । सामान्यवचनेनैव सिद्धेः पुनर्वैकङ्कतवचनं यज्ञियवृक्षान्तरनिवृत्त्यर्थम् ॥

ते अपरेण प्रबाहुगृतुपात्रे आश्वत्थे अश्वशफबुध्ने उभयतोमुखे। दक्षिणमध्वर्योः। उत्तरं प्रतिप्रस्थातुः।१३।

अश्वशफ इव मूलं यस्य तदश्वशफबुध्नम् । मुखं प्रणाली येन होमभक्षणार्थमवनीयते सोमः तदनयोरुभयतो भवति । अत एव वचनात् पात्रान्तराण्येकतोमुखानि भवन्ति । को वो युनक्तीत्यनयोरावृत्तिः ॥

विश्वे देवा देवतेति दक्षिणस्यां श्रोण्यामाग्रयणस्थालीम्। इन्द्रो देवतेत्युत्तरस्यामुक्थ्यस्थालीम्। उक्थ्यपात्रं च तस्या उत्तरम्। १४।

उक्थ्यपात्रे ऽपि मन्त्रस्यावृत्तिः ॥

स्थाल्यावन्तरेण त्रीण्युदञ्च्यतिग्राह्यपात्राणि। आग्नेयमैन्द्रं सौर्यमिति। १५।

स्थाल्योरनयोर्मध्ये उदगपवर्गाणि प्रयुनक्ति ॥

इति प्रथमा कण्डिका।

उत्तरे ऽंसे दधिग्रहपात्रमौदुम्बरं चतुःस्रक्ति। १।

गतः ॥

एवंरूपमेवांश्वदाभ्ययोः। २।

द्वयोरनयोरर्थे पात्रमेकं प्रयुनक्ति ॥

यदि सोमग्रहं गृह्णीयादेतदेव विभवेत्। ३।

दधिग्रहस्थाने यदि सोमग्रहं गृह्णीयात् एतत्सोमग्रहणपात्रमेवांश्वदाभ्ययोरपि ग्रहणाय प्रभवेत्. समानद्रव्यत्वात्. अव्यापृतत्वाच्च ॥

एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमादित्यस्थालीम्। आदित्यपात्रं च तस्या उत्तरम्। ४।

उपस्तम्भनं मेथीस्तम्भः। को वो युनक्तीत्यावृत्तिः ॥

**पृथिवी देवतेत्युत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीम्। ५।**

अनुपोप्त इति सिद्धानुवादो ब्राह्मणानुकरणार्थः ॥

**खरे षोडशिपात्रं खादिरं चतुःस्रक्ति यदि षोडशी। ६।**

गतः ॥

**मध्ये परिप्लवां यथा स्रुगदण्डैवम्। ७।**

यथा स्रुगदण्डा एवमाकारा परिप्लवा। तां खरस्य मध्ये प्रयुनक्ति॥

**यथावकाशं दश चमसान्नैय्यग्रोधान्वैौहीतकान्वा त्सरुमतोऽत्सरुकान्वा। ८।**

सदस्यस्यानित्यत्वात् चमसानां दशत्ववचनम्। सति तु तस्मिन्नेकादश भवन्ति। त्सरुः दण्डः. स वैकल्पिकः ॥

**दशैव चमसाध्वर्यवः। ९।**

पूर्ववदेव दशत्ववचनम्। एवकारोऽसमासार्थः। मा चौषीदेक एव द्वाभ्यां हस्ताभ्यां द्वौ चमसाविति ॥

**युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्याधस्तात्पश्चादक्षं द्रोणकलशं सदशापवित्रम्। १०।**

पश्चादक्षं अक्षस्य पश्चात्। द्रोणाकृतिः कलशो द्रोणकलशः॥

तस्य वायव्यैर्वृक्षनियोगः। ११।

तस्य वृक्षविधिर्वायव्यैरेव कृतः. तैः समानवृक्ष इति यावत्॥

युनज्मि वायुमन्तरिक्षेण ते सहेत्युत्तरस्य हविर्धानस्योपरिष्टान्नीड आधवनीयम्। युनज्मि वाचं सह सूर्येण त इति प्रधुरे पूतभृतम्। १२।

शकटोपस्थः नीडम्। धुरो मुखं प्रधुरम्। अपूतः सोमो यस्मिन्संभ्रियते स आधवनीयः। पूतं यो बिभर्ति स पूतभृत्। तौ च मन्मयौ। यथोक्तं बाहृच्ये. पूतभृतमाधवनीयं च स्थालीमिति॥

एतस्यैव हविर्धानस्याधस्तात्पश्चादक्षं चीनेकधनान्घटान्। पञ्च सप्त नवैकादश वा।१३।

सोमवर्धनार्था आपः एकधनाः। तद्धरणार्थाश्च घटाः पुंलिङ्गेनैकधनशब्देनोच्यन्ते। तांस्तूष्णीं प्रयुनक्ति। घटसंख्याविकल्पानां संस्थावशाद्विनिवेशः॥

यस्मिन्मिमीते तस्याधिषवणचर्म खरं परिकृत्तं चतुष्पुटमुपरिष्टादासेचनवत्।१४।

यस्मिंश्चर्मणि सोमो मितः तस्यैकदेशेनाधिषवणचर्म क्रियते। तच्च खरं भवति न मृदूकृतम्। परिकृत्तं परितश्छिन्नम्। परिकृप्तमिति पाठेऽप्ययमेवार्थः। चतुष्पुटं च भवति येषु पुटेषु ग्रावाणः साद्यन्ते॥

रक्षोहणो वलगहनः प्रोक्षामि वैष्णवमित्यधिषवणचर्म प्रोक्ष्य रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवानिति ग्राव्णो रक्षोहा त्वा वलगहा वैष्णवमास्तृणामीत्यधिषवणफलकयोरुत्तरलोमास्तीर्य रक्षोघ्नो वो वलगघ्नः संसादयामि वैष्णवानिति तस्मिंश्चतुरो ग्राव्णः प्रादेशमाचानूर्ध्वसानूनाहननप्रकारानश्मनः संसादयति। उपरं प्रथिष्ठं मध्ये पञ्चमम्। १५।

आहननप्रकारान् आहननयोग्यमुखान्। यस्मिन्निधायाहन्यते सोमः स उपरः। सर्वान्युगपत्सादयति, रक्षोघ्नो वो वलगघ्न इति लिङ्गात्॥

तमभिसंमुखा भवन्ति। १६।

इतरे ग्रावाणस्तमुपरमभिमुखा भवन्ति॥

इति द्वितीया कण्डिका।

स्थवीयांसि मुखानि। १।

स्थूलतराण्येषां मुखानि भवन्ति॥

अपां क्षया ऋतस्य गर्भा भुवनस्य गोपाः श्येना अतिथयः पर्वतानां ककुभः प्रयुतो न पातारः। वग्नु-

नेन्द्रं स्तुयत घोषेणामीवांश्चातयत। युक्ता स्थ वहत स्वर्गं लोकं यजमानमभिवहतेति सन्नानभिमन्त्र्याग्नी- षोमीयवत्सवनीयपात्राणि प्रयुनक्ति। अग्नीषोमीय- वदाज्यानि गृह्णाति। २।

ग्राव्णो ऽभिमन्त्र्य कर्मणे वामित्याद्युत्तरपरिग्राहवर्जमाज्यग्रहणान्तं कृत्वा स्फ्यस्य वर्त्मन्याज्यानि गृह्णाति. अग्नीषोमीयवत्प्रचरणमादितो गृह्णाति॥

अथैकेषाम्। प्राग्वंशे ऽग्नीषोमीयस्याज्यानि गृह्णाति। आग्नीध्रे सवनीयस्य। उत्तरवेद्यामनूबन्ध्यायाः। ३।

यदाग्नीषोमीयस्य स्फ्यस्य वर्त्मनि गृह्णाति तदा सवनीयस्यापि तत्रैव ग्रहणम्। यदा तु प्राग्वंशे तदाग्नीध्रे सवनीयस्य. तत्र च विधिर- ग्नीषोमीय एव दर्शितः॥

अपरेणोत्तरवेदिं सवनीयस्यानूबन्ध्यायाश्चाज्यानि गृह्णातीत्येके। ४।

अस्मिंस्तु पक्षे ऽग्नीषोमीयस्य स्फ्यस्य वर्त्मन्येव॥

यानि काष्ठानि तदहरभ्याधास्यन्स्यात्तानि सहेध्मेन प्रोक्षेत्। ५।

इध्मप्रोक्षणकाले तान्युपनिधाय सह प्रोक्षेत्॥

समानमा स्रुचां सादनात्। ६।

गतः ॥

युनज्मि तिस्रो विपृचः सूर्यस्य त इति स्रुचः सन्ना अभिमन्त्रयते। ७।

एता असदन्नित्यैष्टिकेनास्य समुच्चयः ॥

अच सौमिकानां पात्राणां संसादनमेके समामनन्ति। ८।

अत्र स्रुचामभिमन्त्रणानन्तरमग्निर्देवतेत्याद्यपां चया इत्यभिमन्त्रणान्तं विधिमन्ये शाखिनो ऽधीयते ॥

आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयात्। ९।

गतः ॥

पञ्चहोतारं चाग्नीध्रे स्वर्गकामस्य। १०।

जुहुयादित्यनुषङ्गः ॥

नित्यवदेके समामनन्ति। ११।

पञ्चहोतारमित्यनुषङ्गः ॥

मध्ये ऽग्नेराज्याहुतीः पश्वाहुतीः पुरोडाशाहुतीरिति जुहोति। अभितः सोमाहुतीः। १२।

याः सोमाङ्गभूता आज्यपशुपुरोडाशानां प्रधानाहुतयः ता मध्ये ऽग्नेर्जुहोति । तदङ्गभूतास्त्वनूयाजाज्यभागस्विष्टकृदाज्याहुतीर्यथा-प्रकृत्येव । यास्तु सोमाहुतयः ता अभितो जुहोति । यत्रयत्र दिशि याया आहुतिरुक्ता तत्रतत्र पार्श्वतो ऽग्नेर्जुहोति. न मध्ये इत्यर्थः ॥

अथ राजानमन्तरेषे ग्रावसूपावहरति हृदे त्वा सोम राजन्नित्येताभ्याम् । १३ ।

ईषयोर्मध्येन नीत्वा ग्रावसूपसादयति ॥

पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनु-वाकमुपाकरोति । १४ ।

पुरा मनुष्याणां वाचः । प्रवदितोः प्रवदनात् । पुरा वा वयसां प्रवदनात् प्रातरनुवाकमारम्भयति ॥

प्रातर्यावभ्यो देवेभ्यो ऽनुब्रूहि ब्रह्मन्वाचं यच्छ प्रति-प्रस्थातः सवनीयान्निर्वप सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति । १५ ।

गतः ॥

सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेत्येके समामनन्ति । १६ ।

एतमेव संप्रैषमेके ऽधीयत इत्यर्थः । तेनान्यत्र सुब्रह्मण्यासंप्रैषेषु नार्थं पाठविकल्पः ॥

मनसा ते वाचं प्रतिगृणामीत्यध्वर्युर्होतारमाह ।१७।

इत्युक्त्वा मनसानुसंधत्ते ऽध्वर्युः ॥

अथ प्रतिप्रस्थाता सवनीयानां पाणिप्रक्षालनादि कर्म प्रतिपद्यते । १८ ।

पाणिप्रक्षालनादि क्रियते, प्रतिप्रस्थातुः पाण्योरप्रक्षालितत्वात्। नोत्त-पराजी स्तीर्यते कृतत्वात् ॥

यथार्थं पात्राणि प्रयुनक्ति । १९ ।

यानि पश्वर्थमप्रयुक्तान्यर्थवन्ति च तानि प्रयुनक्ति ॥

इति तृतीया कण्डिका ।

द्वे भर्जनार्थे कपाले अष्टौ पुरोडाशकपालानि। एका-दश माध्यंदिने। द्वादश तृतीयसवने । १ ।

भर्जनार्थे कृत्ती भवतः ॥

सर्वानैन्द्रानेकादशकपालाननुसवनमेके समामनन्ति । २ ।

ऐन्द्रानिति नित्यानुवादः, अष्टाकपालादेरप्यैन्द्रत्वाविशेषात् ॥

प्रातर्दोहपात्राणीति । ३ ।

इतिः प्रकारवचनः। अन्यान्यपि वाजिनपात्रादीन्यर्थवन्त्युपसंगृह्णाति।

**प्राग्वंशे प्रतिप्रस्थाता सवनीयान्निर्वपति। ४।**

समानमा निर्वपणात्। तत्र प्रणीताविकल्पः प्रकृतावेव दर्शितो ऽन्या वा यजुषोत्पूयेत्यत्र। केचित्तु प्रणीतासु मार्जनमिति प्रतिपत्त्यनुवादात् नित्यमत्र प्रणीताप्रणयनमिति मन्यन्ते। तदयुक्तं. पशुप्राशानामपि तदुपपत्तेः। अतो यजुरुत्पूता अपि लभ्यन्ते। तथा यजुरुत्पूताभिः पुरोडाशं श्रपयतीति भारद्वाजः। बौधायनस्तु पशुपुरोडाशे स्थित्वाह प्रोक्षणीशेषेण पिष्टानि संयौति यावदर्थं सवनीयानामिति॥

**सर्वे यवा भवन्ति लाजार्थान्परिहाप्य। ५।**

लाजार्थास्तु व्रीहयो भवन्ति॥

**इन्द्राय हरिवते धाना इन्द्राय पूषण्वते करम्भं सरस्वत्यै भारत्यै परिवापमिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्यामिति। ६।**

निर्वपतीत्यन्वयः। तत्र व्रीहियवयोर्नानाबीजधर्माः प्रत्येतव्याः॥

**निरुप्तेष्वन्वोप्येदं देवानामित्येतदादि कर्म प्रतिपद्यते। ७।**

निरुप्तेष्वन्वोप्येदं देवानामिति निरुप्तानभिमृशतीत्यादि यदुक्तं प्रकृतौ तदन्वावापादि प्रतिपद्यत इत्यर्थः॥

अवहननकाले लाजार्थान्परिहाप्येतरानवहन्ति ।८।

गतः ॥

कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण धानार्थं लाजार्थं च कपाले अधिश्रयति ।९।

पेषणकाले पुरोडाशार्थान्विभज्य पिनष्टि। उत्पवनकाले व्रीहीनप्युत्पुनाति। कपालोपधानकाले ऽधिश्रयति. उपदधातीत्यर्थः। तयोः भृगूणामङ्गिरसां तपसा तप्यस्वेत्यूहः। कपालान्युपधाय प्रातर्दोहः पयस्यायाः ॥

अधिश्रयणकाले ऽधिश्रयणमन्त्रेण तण्डुलानोप्य धानाः करोति। व्रीहीनोप्य लाजान्करोति।१०।

धानास्वधिश्रयणमन्त्रस्य बहुवदूहः. घर्मा स्थ विश्वायुष इति। तथा च दर्शितं पितृयज्ञे। लाजेषु तु नोहः. भारत्यै परिवाप इति तेषामेकवदेव चोदनात्। धानालाजानां प्रथनमसंभवान्निवृत्तं. तथा प्रतितपनादि हविःश्यामत्वप्रसङ्गात् ॥

पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोति।११।

पुरोडाशाधिश्रयणानन्तरं तप्ते प्रातर्दोह इत्यादिविधिना पयस्यां करोति। आमिक्षावदिति यो वैश्वदेव्यामामिक्षायां विधिरुक्तः स एव पयस्यायामपि। पयस्यामिक्षाशब्दयोः पर्यायत्वादिति भावः। तथा चामिक्षां करोतीत्युक्त्वा परस्तादाहतुः सत्याषाढभारद्वाजौ. पयस्यां मैत्रावरुणस्य पात्रे ऽवदधातीति। तस्मान्न द्रव्यभेदः॥

उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति । अर्धाः पिष्टानामावृता सक्तून्करोति । १२ ।

समानमोद्वासनात् । तत्र जघनेन गार्हपत्यमाग्नेय्यो निर्मीयेति बौधायनः ॥ प्राश्रित्रहरणसंमार्गः पशुपुरोडाशे व्याख्यातः । धानालाजेभ्यो नाङ्गारापोहनं. अध्यूहनाभावात् । धानास्वभिमन्त्रणादिमन्त्राणामूहः पितृयज्ञ एव दर्शितः । तूष्णीमभिघारणं लाजेभ्यो ऽन्येषामौषधानामैन्द्राग्नविकारत्वात् । मदनकरणमन्त्रस्य धानार्थस्यैवोहः. न करम्भार्थस्य. तस्यैकवदेव चोदनात् । उद्वासने तूह एव. तदानीमविभागात्. धाना उद्वास्येति वचनाच्च । धानास्तूद्वास्य यथाभागं व्यावर्तयामिति विभज्य या इन्द्रस्य हरिवतः ता आज्येन मिश्रयित्वा पात्र्यां प्रतिष्ठापयति तूष्णीं. यवमयत्वात् । यास्त्विन्द्रस्य पूषण्वतः ताः कृष्णाजिनादानादिविधिना पिष्ट्वाज्येन च संयुत्य प्रतिष्ठापयति. मन्थं संयुतमिति वचनात् ॥

मन्थं संयुतं करम्भ इत्याचक्षते । लाजान्परिवाप इति । १३ ।

सक्तवो मन्थः । ते त्वद्भिराज्यादिना वा संयुताः करम्भ इत्याख्यायन्ते. लाजाः* परिवाप इति ॥

नखैर्लाजेभ्यस्तुषान्संहरति । १४ ।

---

* Corrected; the MSS. read लाजान्.

अनूहेन तु लाजोद्वासनं. आद्यस्य तु पदस्य लोपः आद्ययोर्वा । तच्च दर्शितं पितृयज्ञे । संहरति उपोद्धरति ॥

नखेषूलूखलधर्मान्मुसलधर्मांश्च करोति । १५ ।

तुषविमोकार्थे आग्नीध्रस्य नखेषूलूखलधर्मान्करोति । तेषां संमर्शन-प्रोक्षणे अपि काले कृते भवतः । ततो लाजेषूद्वासितेषु कृष्णा-जिनादानादि प्रागधिवर्तनात्स्वलाधिषवणानि स्थ मानुषाणि प्रति व इति स्वनखानि निधाय तेषु प्रकृतिवदोप्य अद्रय स्थ मानुषास्त इदं देवेभ्यो हव्यं सुशमि शमीद्धमिति जपित्वा अव रक्षो दिव इति तुषानुत्करे ऽवनीय वर्षवृद्धा स्थेत्यभिमन्त्रयते । उद्वपनपरा-वपनमन्त्रौ जपित्वा प्रविद्धमिति तुषानभिमन्त्रयते । तथा च भार-द्वाजः. तत्रात्तपनमन्त्रो ऽवहननमन्त्र उद्वपनमन्त्रौ निष्पवनमन्त्र इति क्रियते. पाण्योरुलूखलमुसलधर्माः क्रियेरन्निति । ततो हस्तेन तुषा-नुपवपति. कपालानामुपहितत्वात् । ततस्तस्मिन्मोदेति पात्र्यां प्रतिष्ठाप्य पुरोडाशोद्वासनादि प्रागलंकरणात्प्रकृतिवत् ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

यच्चाभिजानात्यभूद्दुषा रुशत्पशुरिति तत्प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं म इति । १ ।

अभिज्ञानं चिह्नतया ज्ञानम् ॥

अपरं चतुर्गृहीतं गृहीत्वा संप्रेष्यत्यप इष्य होत-र्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्वेति । २ ।

इष्यतिर्गतिकर्मा । होतरप इष्य होतरपः स्तोतुं मनसा गच्छ । मैत्रावरुणस्य चमसाध्वर्यवाद्रव स्वेन चमसेन सहागच्छ । तथैक-धनिनः एकधनघटवाहिनः स्वैर्घटैराद्रवतेत्यर्थः ॥

प्रेह्युदेहीति नेष्टा पत्नीमुदानयति । एह्युदेहीति वा । पान्नेजनीं स्थालीं धारयमाणाम् । ३ ।

एह्युदेहीति प्रशब्दराहित्यं विशेषः । पत्न्या ऊरुप्रक्षालनार्था आपः पान्नेजन्यः. तासामाहरणार्था स्थाली पान्नेजनी । पन्नेजनं च पत्नी-संस्कारः । तेन पत्न्यनेकत्वे सर्वाः पर्यायेणोदानयति ॥

तीर्थेनाभिप्रव्रजन्ति । ४ ।

चात्वालोत्करयोरन्तरालं तीर्थम् । तेन सर्वे गच्छन्ति ॥

यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयुस्तदपो ऽध्वर्युर्वहन्तीनां गृह्णाति । ५ ।

यावत्यध्वनि प्रातरनुवाकस्य शब्दः श्रूयते तावत्येव वहन्तीनामपो गृह्णाति ॥

यदि न शृणोति बधिरो ह भवति वाचो ह छिद्यते । ६ ।

वाचो ह छिद्यते मूको भवति। ननु यदि तावति देशे वहन्त्यो न स्युः किमसौ कुर्यात्. अत आह॥

यदि दूरे स्युः प्रत्युदूह्य गृह्णीयात्।७।

प्रत्युदूह्य वहन्तीभ्यः आनीय तत्र स्थापयित्वा गृह्णीयात्॥

देवीराप इति तृणमन्तर्धायाभिजुहोति।८।

याभ्यो गृह्णीष्यति तासु जुहुयात्॥

यदि वा पुरा तृणं स्यात्तस्मिञ्जुहुयात्।९।

गतः॥

कार्षिरसीति दर्भैराहुतिमपप्लाव्य समुद्रस्य वोऽक्षित्या उन्नय इत्यभिहुतानां मैत्रावरुणचमसेन गृह्णाति।१०।

अपप्लाव्य अपोह्य आहुतिमनाज्यलिप्तां गृह्णाति। तथा अपप्लाव्याघृतप्लुतानामित्येव सत्याषाढभारद्वाजौ॥

सोमस्य त्वा मूजवतो रसं गृह्णामीत्येकधनाः।११।

ता एकधनघटैर्गृह्णाति॥

पत्नी पन्नेजनीर्गृह्णाति प्रत्यङ्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति।१२।

पत्न्यनेकत्वे सर्वा गृह्णन्ति। यज्ञाय वः पन्नेजनीर्गृह्णामीति मन्त्रान्तः। तथैव पेठतुर्बौधायनभारद्वाजौ॥

प्रेह्युदेहीति नेष्टा पत्नीमुदानयति। एह्युदेहीति वा।१३।

गतः। चमसाध्वर्य्यादयो ऽपि मैत्रावरुणचमसादीनपां पूर्णान्पुनर्देवयजनं नयन्ति॥

अपरेण नेष्ट्रीयं पत्नी पन्नेजनीः सादयति प्रत्यङ्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति।१४।

अत्र पन्नेजनीः सादयामीति संनामः॥

ता एवमेवाच्छावाकं सीदन्तमनूपसादयति।१५।

उपवेशयत्यच्छावाके ऽपि नेष्ट्रोपनीता पत्न्यपरेण नेष्ट्रीयमेवं सादयति॥

इति पञ्चमी कण्डिका।

होतृचमसेन वसतीवरीभ्यो निषिच्योपरि चात्वाले होतृचमसं मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति।१।

निषिच्य स्रावयित्वा व्यानयति अन्योऽन्यस्मिन्नानयति॥

समन्या यन्तीत्यभिज्ञाय होतृचमसान्मैत्रावरुणचमस आनयति। मैत्रावरुणचमसाद्धोतृचमसे। एतद्वा विपरीतम्।२।

गतः॥

उपरि चात्वाले धार्यमाणा उभयीः प्रचरण्या सम-नक्ति सं वो ऽनक्तु वरुणः समिन्द्रः सं पूषा सं धाता सं बृहस्पतिः। त्वष्टा विष्णुः प्रजया संरराणो यज-मानाय द्रविणं दधात्विति। यथायथं धुरो धुर्भिः कल्पन्तामिति। ३।

सं वो ऽनक्तित्यृचा यथायथमिति यजुषा चोभयचमसस्था अपो ऽनक्ति ॥

अध्वर्यो ऽवेरपा इति होताध्वर्युं पृच्छति। ४।

अध्वर्यो किमसि लब्धवानप इति प्रश्नार्थः ॥

उतेमनन्नमुरिति प्रत्युक्ता प्रचरणीप्रैषात्क्रतुकरणं जुहोति यमग्ने पृत्सु मर्त्यमिति। ५।

प्रतिवचनार्थो ब्राह्मण एव व्याख्यातः. उतेमाः पश्येति वावैतदाहेति। केचित्तु उतेमाः पश्येत्येवमन्तं मन्त्रमिच्छन्ति। तदयुक्तं. तथा सति तस्याव्याख्यार्थत्वेनेति वावैतदाहेति विवरणप्रवादविरोधात्. व्यक्तार्थ-त्वाच्च वाक्यस्य. यथा उतेमनन्नमुरित्यध्वर्युः प्रत्याहोतेमाः पश्येत्येव तदाहेति॥ क्रतुव्यावृत्तिः क्रियते ऽनेनेति क्रतुकरणम्। समाख्या संव्यवहारार्था. यथा सदःक्रतुकरणमित्यादि ॥

तदभावे चतुर्गृहीतेन। ६।

तदभावे प्रैषनाशादौ ॥

यद्यग्निष्टोमो जुहोतीत्युक्तम्।७।

यद्यग्निष्टोम इत्यादि यथाब्राह्मणमनुसंधातव्यम्। उक्तं ब्राह्मणे. यद्य-ग्निष्टोमः प्रचरणीशेषं जुहोति. यद्युक्थ्यः परिधौ निमार्ष्टि तं शेषं तेनैव मन्त्रेण. यद्यतिरात्रस्तं क्रतुकरणमन्त्रं वदन्हविर्धानमेव प्रपद्यत इति। संस्थान्तराणां त्वग्निष्टोमविकारत्वात् होम एव भवति। अप्तो-र्यामस्यातिरात्रवद्विधिः. तद्विकारत्वात्॥

अथैकेषाम्। यद्यग्निष्टोमो जुहोति। यद्युक्थ्यः परिधौ निमार्ष्टि। यदि षोडशी हुत्वा परिधौ लेपं निमृज्य द्रोणकलशं रराटीं चोपस्पृशति। न जुहोति नोपस्पृशति वाजपेये ऽतिरात्रे च। एतद्यजुर्वदन्समुद्यैव प्रपद्यते।८।

अस्मिन्नपि कल्पे ऽग्निष्टोमोक्थ्ययोर्न पूर्वकल्पाद्विशेषः। षोडशिनि तु क्रतुकरणं हुत्वा लेपं परिधौ निमृज्य द्रोणकलशरराट्यौ प्रच-रण्याभिमृशति। वाजपेयातिरात्रयोः पुनरुतेमनन्नमुरिति संवादा-नन्तरमेव क्रतुकरणमन्त्रं वदन्हविर्धानमेव प्रतिपद्यते॥

अपरया द्वारा हविर्धानमपः प्रपादयति। पूर्वया गतश्रियः।९।

तस्यतस्य हस्तादादायाध्वर्युरेवापः प्रवेशयति॥

पूर्वया यजमानः प्रपद्यते।१०।

गतश्रीरगतश्रीश्च यजमानः पूर्वयैव प्रपद्यते ॥

दक्षिणस्य हविर्धानस्य प्रधुरे प्रचरणीं सादयति।११।

धुरो मुखं प्रधुरम्॥

इति षष्ठी कण्डिका।

यं कामयेत पण्डकः स्यादिति तं प्रचरण्योपस्पृशेत् ।१।

पण्डकः क्लीबः ॥

एतस्यैव हविर्धानस्याधस्तात्पुरोऽक्षं मैत्रावरुणचमसम्। उत्तरस्यां वर्तन्यां पुरश्चक्रं होतृचमसम्। उत्तरस्य हविर्धानस्याधस्तात्पुरोऽक्षं वसतीवरीः। पश्चादक्षमेकधनाः।२।

उत्तरस्यां वर्तन्यां उत्तरस्य चक्रस्य वर्त्मनि पुरस्ताच्चक्रस्य। एवं पुरोऽक्षं पश्चादक्षमिति॥

एतद्वा विपरीतम्।३।

गतः॥

अपो यजमानो ऽनुप्रपद्यते। यश एवैनमृच्छतीति विज्ञायते।४।

अप्सु प्रपादितासु पश्चात्पूर्वया द्वारा यजमानः प्रपद्यते। तस्यैव प्रशंसा यश एवैनमृच्छतीति॥

अथ दधिग्रहेण चरति। ५।

गतः॥

औदुम्बरेण गृह्णाति। ६।

विस्पष्टार्थं पुनरौदुम्बरवचनम्॥

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति दधि गृहीत्वापेन्द्र द्विषतो मन इति हरति। प्राणाय त्वापानाय त्वेति जुहोति। ७।

यत्प्रागुक्तं दधि या पत्निये तस्मै दधिग्रहायेति तद्गृहीत्वा दर्विहोमं जुहोति। हुत्वा चैतत्पात्रमत्रैवानुप्रहरेदिति बौधायनः॥

दधिग्रहो नित्यः काम्यश्च। काम्याावितरौ। ८।

वक्ष्यमाणेषु त्रिषु ग्रहेषु दधिग्रहो दर्शपूर्णमासवन्नित्य एव सन्काम्योऽपि भवति. प्राजापत्यं दधिग्रहं गृह्णीयादिति नित्यवदाम्नाय ततः कामस्याप्युपबन्धनात्।' काम्यावेवेतरौ. सकामयोरेवाम्नानात्। तेन दधिग्रह एव विकृतिं गच्छति. नेतरौ॥

आज्यग्रहं गृह्णीयात्तेजस्कामस्येत्युक्तम्। ९।

आज्यग्रहं गृह्णीयात्तेजस्कामस्य. दधिग्रहं गृह्णीयात्पशुकामस्य. सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येति त्रयोऽमी काम्याः कल्पा उक्ता ब्राह्मणे। ते यथाकाममनुसर्तव्या इत्यर्थः॥

यदि सोमग्रहं गृह्णीयादेकग्रहायामं राजानमुपरे

न्युप्य वसतीवरीभिरुपसृज्यावीदृधं वो मनसा सुजाता इत्यभिमन्त्र्य तिस्रो यह्वस्य समिधः परिज्मनो देवा अकृण्वन्नुशिजो अमर्त्यवे। तासामेकामदधुर्मर्त्ये भुजं लोकमिद्व उप जामी ईयतुरिति सोमकरण्याभिषुणोति। १०।

आज्यग्रहे लौकिकमाज्यं गृह्णीयात्। समानो विधिरस्य दधिग्रहेण। आप्तं पर्याप्तम्। उपसृज्य संसृज्य। सोमकरणीत्यृचः समाख्या॥

आ मास्कानिति प्रथमप्लुतमंशुमभिमन्त्रयते। द्रप्सश्चस्कन्देति विप्रुषः। ११।

प्रथमप्लुतं ग्रावाभिघातात्प्रथमस्कन्नं. आ मास्कानिति मन्त्रलिङ्गात्. अभिषूयमाणस्य प्रथमो ऽंशुः स्कन्दतीति ब्राह्मणाच्च॥

हिरण्यपाणिरभिषुणोति गृह्णाति जुहोतीत्यत्यन्तप्रदेशः*। १२।

प्रदेशनं विधानं प्रदेशः। अत्यन्ताय प्रदेशः अत्यन्तप्रदेशः। सोमाभिषवादौ हिरण्यपाणिः करोतीति सार्वत्रिको विधिरित्यर्थः। अथवा सर्वप्रदेशविषयो ऽयं विधिर्न क्वाचित्क इत्यर्थः॥

तिस्रो यह्वस्येत्येतदर्जं च। १३।

---

* Corrected according to the commentary; the MSS. of the text read जुहोतीत्यन्तप्रदेशः।

यो ऽप्यत्राभिषवे विधिरुक्तः सो ऽपि सोमकरणीवर्जं सर्वाभिषवेषु समान इत्यर्थः ॥

तं हुत्वा सदसि प्रत्यङ्मुखो भक्षयति भक्षेहीति यथालिङ्गम् । १४ ।

तं दधिग्रहविधिना हुत्वा सदसि पुरस्ताद्धिष्णियानां प्रत्यङ्मुखासीनो भक्षेहीति भक्षमाह्रियमाणं प्रतीक्ष्येत्यादिना वक्ष्यमाणेन विधिना शेषं भक्षयति । न तूपहव इष्यते. समानप्रायत्वाद्युपहवनिमित्ताभावात् । यथालिङ्गमिति वचनात् प्रजापतिपीतस्येति संनामः । पात्रं त्ववभृथे प्रतिपाद्यं सोमलिप्तत्वात् ॥

अनधिकृतो वा सोमधर्मैर्दधिग्रहविकारत्वात् । १५ ।

न वायं ग्रहः सोमधर्मानधिकुरुते दधिग्रहविकारत्वात् । नित्यस्य ह्यसौ दधिग्रहस्य विकारः काम्यत्वात् । तत्कथं सोमधर्मानधिकुर्यात् । ननु के नाम ते सोमधर्माः यानसौ नाधिकुरुते । अत आह ॥

यदन्यत्सोमकरण्यास्ते सोमधर्माः । १६ ।

सोमग्रहविधौ वसतीवरीभिरुपसृज्येत्यादि यदन्यत्सोमकरण्या उक्तं ते सर्वे सोमधर्माः. ते ऽत्र निवर्तन्ते । केवलं सोमकरण्याभिषुत्य दधिग्रहवज्जुहोति ॥

अंशुमदाभ्यं वा प्रथमं गृह्णाति । १७ ।

गतः ॥

शुक्रं ते शुक्रेण गृह्णामीति दध्नः पयसो निग्राभ्याणां वा। १८।

अंश्वदाभ्ययोः पात्रेण लौकिकाद्दध्नः पयसो वसतीवरीभ्यो वादाभ्यं गृह्णाति॥

उपनद्धस्य राज्ञस्त्रीनंशून्प्रवृहति। १९।

इति सप्तमी कण्डिका।

---

वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम्। १।

प्रवृहति अपकर्षति॥

तैरेनं चतुराधूनोति। पञ्चकृत्वः सप्तकृत्वो वा। मान्दासु त इत्येतान्प्रतिविभज्य। २।

तैरंशुभिरेनं ग्रहं चतुराधूनोति. लोडयतीत्यन्ये। यदा चतुस्तदा त्रिभिस्त्रिभिर्मन्त्रैः. यदा पञ्चकृत्वस्तदा द्वाभ्यांद्वाभ्यामाधूय चतुर्भिः पञ्चमे. यदा सप्तकृत्वस्तदा द्वाभ्यांद्वाभ्यामाधूयैकैकेन षष्ठसप्तमयोः॥

आस्मिन्नुग्रा अचुच्यवुरित्यादाय ककुहं रूपमिति हरति। यत्ते सोमादाभ्यं नाम जागृवीति जुहोति। ३।

दर्विहोमाद्धोमो न च भक्षणं. ग्रहणाभिषवाभावात्॥

आधवनानंशून्प्रस्थातान्निधायोशिक्कं देव सोम गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपिसृजति । ४ ।

यैराधूतो ग्रहस्त आधवना उक्ताः । तानात्तक्रमेणानुसवनमपिसृजति. आदानापिसर्गयोर्मन्त्रलिङ्गात् ॥

अंशुं गृह्णन्नेकग्रहायामं राजानमुपरे न्युप्य सकृदभिषुत्य वामदेव्यं मनसा गायमानोऽनवानं गृह्णाति । वामदेव्यस्य वर्चा कया नश्चित्र आभुवदिति । ५ ।

सोमग्रहोक्तैः सोमधर्मैस्तूष्णीं सकृत्प्रहृत्य वामदेव्येन साम्नोपयामान्तेनानुच्छ्वसन्गृह्णाति । तस्य योन्या वा कया न इत्यृचोपयामान्तया ॥

पराचीनेन ग्राह्यः प्राणतापानता वा प्राण्यापान्य व्यनता वा । ६ ।

पराचीनेन परावृत्तमुखेन प्राणता बहिर्गमितवायुना अपानता प्रत्याहृतवायुना व्यनता मध्ये धारयता ॥

यदि व्यवानेदा नः प्राण एतु परावत इति शतमानं हिरण्यमभिव्यनेयातामध्वर्युर्यजमानश्च । ७ ।

अभिव्यननं उपर्युच्छ्वासः ॥

अथैनौ प्रतिप्रस्थाता हिरण्येन संस्पर्शयत्यद्भिश्च प्रत्युक्षति । ८ ।

इदमपि व्यञ्जनप्रायश्चित्तार्थं. एनावित्यन्वादेशात्॥

इन्द्राग्नी मे वर्चः कृणुतामित्यध्वर्युरप उपस्पृश्य दधन्वे वा यदीमन्वित्यनिरुक्तयाप्राजापत्यया प्राण्यापान्य व्यनञ्जुहोति। ९।

इन्द्राग्नी म इत्यादिस्तु विधिर्नित्य एव। अनिरुक्तया प्रजापतिलिङ्गरहितया कृत्वा ग्रहं पूर्ववत्सदसि भक्षयित्वा पात्रं सादयति॥

यदि न शक्नुयाद्ग्रहीतुं होतुं वा वरे दत्ते गृह्णीयाज्जुहुयाद्वा। १०।

अनवानग्रहणाद्यशक्तौ पूर्वेण प्रायश्चित्तेन वरदानस्य समुच्चयः॥

अंशौ द्वादश प्रथमगर्भाः पष्ठौहोर्ददाति कृष्णधीवासं च। एवमदाभ्ये। ११।

पष्ठौहो गर्भिण्यो. पञ्चवर्षेत्येके। कृष्णधीवासः प्रच्छादनार्थं चर्म॥

भ्रातृव्यवतादाभ्यो ग्रहीतव्यः। बुभूषतांशुः। १२।

यत्र कामावेतौ ग्रहौ व्यवस्थाप्येते तत्रैवंकामस्य भवतः। नित्ययोरेव तत्र कामाविति केचित्॥

तौ न सर्वत्र ग्रहीतव्यौ। वाजपेये राजसूये सत्त्रे सर्ववेदसे वा। १३।

तौ न सर्वासु प्रकृतिविकृतिषु ग्रहीतव्यौ. किं तु वाजपेयादिष्वेव. विकृतिषु ग्रहीतव्यौ॥

यो ऽस्य सुप्रियः सुविचित इव स्यात्तस्य ग्रही-
तव्यौ। १४।

सुविचितः सुपरीचितः. सुविचितं विचित्यादेव* प्रश्नेभ्य इति दर्श-
नात्। यो ऽस्याध्वर्योः सुप्रीतः सुपरीचितश्च स्याद्यजमानः कल्याण-
गुणो यदि तस्य सर्वास्वेव प्रकृतिविकृतिषु विनापि कामेन ग्रहीतव्यौ॥

इत्यष्टमी कण्डिका।

इति द्वितीयः पटलः॥

उत्तरस्यां वर्तन्यां होतृचमसं वसतीवरीभिरभिपूर्य
निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत
इति। १।

उत्तरस्यां वर्तन्यामित्यनुवादः तत्रस्थस्यैवाभिपूरणं यथा स्यादिति।
निग्राभ्यासु निमित्तभूतासु वाचयति. ता निग्राभ्याः कर्तुमित्यर्थः।
तथा च वक्ष्यति. वसतीवरीभ्यो निषिच्य निग्राभ्याः करोतीति।
निग्राभ्या स्थेति यजमानेनानुमन्त्रिता निग्राभ्या भवन्तीति भावः॥

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमुपांशुसवन-
मादाय ग्रावास्यध्वरकृदित्यभिमन्त्रयते। तमाददानो
वाचं यत्वाग्रयणं गृहीत्वा विसृजते। २।

गतौ॥

अथैनमुपरे निधायांशुभिरभिमिमीते क्रयवत्। ३।

क्रयवत् हिरण्यपाणिरङ्गुष्ठेनेत्यादिना विधिनोपांशुसवनस्योपरि मिमीते ॥

एतावन्नाना। इन्द्राय त्वा वृत्रघ्न इत्येतैः प्रतिमन्त्रम्। ४।

गतः ॥

पञ्चकृत्वो यजुषा मिमीते। पञ्चकृत्वस्तूष्णीम्। ५।

क्रये द्विस्त्रिरपरिमितकृत्वो वा मितस्याप्यत्र दशकृत्व एव मानं यथा स्यादिति पुनर्वचनम्॥

नांशूनुपसमूहति। ६।

दशस्वेव मानेषु निःशेषमंशून्क्षिपतीत्यर्थः ॥

भूयांसं प्रातःसवनाय राजानं प्रकल्पयति। अल्पीयांसं माध्यंदिनाय। ७।

मितं राजानं विभज्य प्रकल्पयति ॥

उपनह्य प्रत्यारोप्यैकग्रहायामं राजानमुपरे न्युप्य होतृचमसेऽंशूनवधाय तस्मिन्ग्रावाणमुपांशुसवनमुपरि धारयन्त्रिः प्रदक्षिणं परिप्लावयन्निग्राभमुपैति प्रागपागुदगधरागिति। ८।

उभयविधमेमं प्रकल्पितं पृथग्वाससोपनह्य हविर्धानं प्रत्यारोप्य

प्रातःसवनार्थादेकग्रहाय पर्याप्तमपादत्ते। होतृचमसे ग्रावाणमुपर्यंशूनां कृत्वा तेनापस्त्विः प्रदक्षिणमालोडयति। तदेव निग्राभोपायनमभिधीयते। तथा च सत्याषाढः. त्रिः प्रदक्षिणमनुपरिप्लावयति स निग्राभो भवतीति। आधावन्त्विति मन्त्रान्तः॥

यां भार्यां कामयेत तां मनसा ध्यायेदम्ब निष्वरेति। सा हैनं कामयते। ९।

अम्ब निष्वरेति याजमानं. कामानां कामनमिति। यां भार्यां कामयेत यस्यां भार्यायां संभोगं काङ्क्षति तां मनसा ध्यायेत्. सा पुनः स्वयमेवैनं कामयमाना संभोगाय कल्पयिष्यते। कल्पान्तरकारमतात्तु निग्राभोपायन एवाम्ब निष्वरान्तः. न च भवति कामसंयोगः॥

श्वात्रा स्थ वृत्रतुर इति तासामेकदेशेनोपसृज्योपसृष्टस्य राज्ञः षडंशूनार्द्रान्संश्लिष्टानादाय चर्मणि निधाय यत्ते सोम दिवि ज्योतिरिति राजानमभिमन्त्रयते। १०।

तासां परिप्लावितानामपामुपसृज्य उपरस्थं राजानं संसृज्य। आर्द्रान् उपसर्जनेन क्लिन्नान्। संश्लिष्टान् अन्योऽन्यम्॥

इति नवमी कण्डिका।

धिषणे वीडू इत्यधिषवणफलके। १।

अभिमन्त्रयत इत्यन्वयः॥

अवीरुधं वो मनसा सुजाता इति राजानमेवाभिमन्त्र्य मा भेर्मा संविक्था इति ग्रावाणमुद्यम्यानागसस्त्वा वयमिन्द्रेण प्रेषिता उप वायुष्टे अस्त्वंशभूर्मित्रस्ते अस्त्वंशभूर्वरुणस्ते अस्त्वंशभूरहतः सोमो राजेति तृणमन्तर्धायाभिषुणोति। २।

अवीरुधं व इति पुनर्वचनं क्रमार्थम्. भवन्त्येवान्ये ऽपि सोमधर्माः॥

यदि वा पुरा तृणं काष्ठं मूलं वा स्यात्तस्मिन्प्रहरेत्। ३।

गतः॥

अष्टौकृत्वो ऽग्रे ऽभिषुणोति। ४।

अग्र इति वचनं द्वितीयतृतीयपर्याययोर्वक्ष्यमाणविकल्पापेक्षया॥

अथ प्रतिप्रस्थातोपांशुपात्रं धारयन्नपात्तानामुपरि द्वावंशू अन्तर्दधाति। ५।

अपात्तानां चर्मणि च निहितानामंशूनां मध्ये द्वावंशू पात्रस्योपरि करोति॥

तस्मिन्नभिषुतमध्वर्युरञ्जलिना गृह्णाति वाचस्पतये पवस्व वाजिन्निति। ६।

गतः॥

पवित्रमुपयामः सादनं च न विद्यते। ७।

पवित्रसादनयोः पवित्रवितानोत्तरकालमुपदेशात् ततः पूर्वभाविषु ग्रहेष्वप्राप्तयोरपि ग्रहधर्मत्वेन प्राप्तिशङ्कानिरासार्थं प्रतिषेधः॥

एष प्रथमः पर्यायः। एवं विहितो द्वितीयस्तृतीयश्च। ८।

निग्राभोपायनादिग्रहणान्तः पर्यायः। तत्र द्वितीयतृतीययोर्नांश्वपादानं कार्यं. सर्वार्थं युगपदपात्तत्वात्॥

अपि वैकादशकृत्वो द्वितीयमभिषुणोति। द्वादशकृत्वस्तृतीयम्। ९।

अष्टावष्टौकृत्वो ऽभिषुत्यमिति ब्राह्मणानुसारेण सर्वेषु पर्यायेष्वष्टकृत्वो ऽभिषव उक्तः। तस्यायं विकल्पो ऽपि वेति॥

द्विरादितो ऽन्ततो वा निग्राभोपायनमुपसर्गश्च। १०।

आदितः आद्ये पर्याये। तथा अन्तत इति॥

होतृचमसीयानंशूनुत्तमे पर्याये ऽभिषुणोति। ११।

गतः॥

अवशिष्टानां प्रतिप्रस्थाता द्वौद्वावंशू अन्तर्दधाति। १२।

अवशिष्टानां अपात्तेषु षट्स्वंशुष्विति शेषः॥

स्वांकृतो ऽसीत्यध्वर्युर्ग्रहमादायोर्वन्तरिक्षमन्विहीति दक्षिणेन होतारमतिक्रामति। १३।

गतः॥

येन वा होता प्रतिपादयेत्। १४।

येन पथा होता प्रतिपादयेत् गमयेत् अनेन पथा गच्छति तेन वातिक्रामति ॥

मनस्त्वाष्टिति दक्षिणतोऽवस्थाय दक्षिणं परिधि-संधिमन्ववहृत्य। १५।

इति दशमी कण्डिका।

स्वाहा त्वा सुभवः सूर्यायेति दक्षिणतः प्राञ्चमृजुं संततं दीर्घं हुत्वा देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमे परिधौ लेपं निमार्ष्टि। १।

दक्षिणतोऽवस्थायेति वचनात् दर्विहोमत्वेऽपि दक्षिणतस्तिष्ठञ्जुहोति दक्षिणे भागेऽग्नेः प्राञ्चम्। पुरस्तात्स्वाहाकारत्वेऽपि मन्त्रस्यान्ते स्वाहाकारेण होमः. यथा चैतदेवं तथा दर्शितं परिभाषायां ॥

यं द्विष्यात्तस्य प्रह्वो जुहुयात्। २।

प्रह्वो न जुहुयादिति भावः ॥

यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यभ्यन्तरं पात्र-स्यावमृज्याभ्यन्तरं परिधेर्नीचा हस्तेन निमृज्यात्। ३।

अभ्यन्तरं पात्रस्य यो लेपस्तमवाचीनहस्तेन मृष्ट्वा परिधेरभ्यन्तरदेशे न्युब्जेन हस्तेन निमृज्यात् ॥

यदि कामयेतावर्षुकः* स्यादिति बाह्यतःपात्रस्योर्ध्वमुन्मृज्य बाह्यतः परिधेरुत्तानेन हस्तेनोर्ध्वमुन्मृज्यात् । ४ ।

पूर्वेण व्याख्यातः ॥

सर्वमाग्रयणस्थाल्यां संपातमवनीयैष ते योनिः प्राणाय त्वेति रिक्तं पात्रमायतने सादयित्वा तस्मिन्नंशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात् । ५ ।

सर्वस्य संपातस्यावनयनवचनात् न भक्षः ॥

अथैतान्यभिचरतः । ६ ।

विधानानि वक्ष्यन्त इति शेषः ॥

उपांशुं गृहीत्वामुष्य त्वा प्राणे सादयामीति सादयित्वा देवस्य त्वा सवितुः प्रसव इत्यादायामुष्य त्वा प्राणमपिदधामीति हस्तेनापिधायामुं जह्यथ त्वा होष्यामीति ब्रूयात् । ७ ।

स्वांशुतो ऽसीत्यादाय ग्रहं देवदत्तस्य त्वा प्राणे सादयामीत्यायतने सादयित्वा सावित्रेणादाय दक्षिणतोऽवस्थानाक्ते हते देवदत्तस्य त्वा प्राणमित्यादिना ग्रहमपिधाय देवदत्तं जहीत्यादि सोमं प्रति ब्रूयात् ॥

यदि दूरे स्यादा तमितोस्तिष्ठेत् । ८ ।

* Corrected according to Taitt. Saṃh. 6. 4. 5. 6; all MSS. read कामयेत वर्षुकः ।

यद्यभिचार्यो दूरे स्थितः स्यात् तदामुं जहीत्याद्युक्त्वा तत आ तमितोः आ तान्तेः अनुच्छ्वसन्तिष्ठेत। ततो जुहुयात् ॥

प्रहर्षिणो मदिरस्य मदे मृषासावस्त्विति जिह्मस्तिष्ठन्हुत्वामुष्य त्वा प्राणे सादयामीति सादयेत्। ९।

मृषा देवदत्तो ऽस्त्विति मन्त्रान्तः। तेन मन्त्रेण हुत्वा लेपनिमार्जनादि समानमा सादनात्। अमुष्य त्वेति तु सादनमन्त्रः ॥

यो वस्त्रे बाहावुरसि वांशुराश्लिष्टस्तमभिचरतो जुहोतीत्येके देवांशो यस्मै त्वेडे. तत्सत्यमपरिप्लुता भङ्गेन हतो ऽसौ फडिति। १०।

अथवा यो ऽभिषवदशायामभिहतो ऽंशुरुत्प्लुत्याभिषुण्वतो ऽस्य वस्त्रादिषु श्लिष्टः स्यात् तं हुते ग्रहे सादिते च पात्रे ऽनेन मन्त्रेण हतो देवदत्तः फडित्यन्तेन जुहुयात्। फट्कारः स्वाहाकारप्रत्याम्नायः ॥

यत्ते सोमादाभ्यं नाम जागृवीत्युपांशुपावनानामनुसवनं द्वौद्वावंशू महाभिषवेष्वपिसृजति। ११।

यैरंशुभिरुपांशुः पावितः त उपांशुपावनाः। तान्पावनक्रमेण द्वौद्वौ क्षिपति ॥

इत्येकादशी कण्डिका।

इति तृतीयः पटलः ॥

अदाभ्यांशुमुपांशुपावनौ चापिसृज्य सर्वे ऽध्वर्यवो दिग्भ्यो महाभिषवमभिषुण्वन्ति। १।

दिग्भ्य इति ल्यब्लोपे पञ्चमी। दिश आस्थायेत्यर्थः॥

पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थाता पश्चान्नेष्टोत्तरत उन्नेता। पश्चादध्वर्युः पुरस्तान्नेष्टेत्येके। २।

गतः॥

उपरे राजानं न्युप्य होतृचमसे ऽंशूनवधायेत्येतदाद्योपसर्गादुपांशुसवनवर्जम्। तूष्णीमितरैर्ग्रावभिरभिषुण्वन्ति। ३।

निग्राभोपायनं भवत्येव. उपांशुसवनाभिषव एव तस्य प्रतिषेधात्। तथा सोमधर्मास्त्र प्रत्येतव्याः होतृचमसे ऽंशूनित्याद्योपसर्गात्कृत्वा अवीवृधं व इत्यभिमन्त्र्याभिषुण्वन्ति दक्षिणैर्हस्तैः. दक्षिणं प्रतीयादनादेश इति न्यायात्. नरो यत्ते दुदुहुर्दक्षिणेनेति लिङ्गाच्च। तथा दक्षिणैः पाणिभिरभिषुण्वन्तीत्येव सत्याषाढः॥

एवं द्वितीयं तृतीयं चोपसृज्याभिषुण्वन्ति। ४।

होतृचमसे ऽंशूनामवधानं प्रथम एव पर्याये. न पुनःपुनः। तांस्तु नवमे ऽभिषवे ऽभिषुण्वन्ति। निग्राभोपायनमुपसर्गश्च द्वितीयादितो ऽन्ततो वा भवतः पूर्ववत्॥

अभिषुतमध्वर्युरञ्जलिना संसिञ्चति। ५।

एवं त्रिरभिषुतमञ्जलिना उदचने संसिञ्चति गृह्णाति॥

तमुन्नेतान्तरेणेषेणोद्धृत्योत्तरत आधवनीये ऽवनयति ।६।

अन्तरेषे यः पन्थास्तेनोद्धृत्योदञ्चनमुत्तरत आधवनीयस्य गत्वा तस्मिन्नवनयति ॥

एष एवापां सोमस्य च पन्थाः ।७।

उपसर्गार्थानां वसतीवरीणामभिषुतस्य च सोमस्यैष पन्थाः ॥

एष प्रथमः पर्यायः ।८।

एवं त्रिभिः पर्यायैरेको ऽयमभिषवपर्यायः ॥

एवं विहितो द्वितीयस्तृतीयश्च ।९।

गतः ॥

त्रिपर्यायः ।१०।

सर्वत्र महाभिषवः स्यात् ॥

संभृत्य राजानमुपरे ग्राव्णः संमुखान्कृत्वा प्रपीड्य ऋजीषं मुखेषूपोहति। घासमेभ्यः प्रयच्छतीति विज्ञायते ।११।

संभृत्य राजानमाधवनीये ग्राव्णश्चोपरे संमुखान्कृत्वा पूर्ववदुपरं प्रत्येवाभिमुखान्कृत्वेति यावत्। प्रपीड्यर्जीषमुदचने रसमाधवनीय ऋजीषं ग्राव्णां मुखेषु क्षिपति। घासः भक्षः ॥

तेषूद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनदशं पवित्रं वितन्वन्ति ।१२।

तेषु ग्रावसु द्रोणकलशं प्रतिष्ठाप्य तस्मिन्वितन्वन्ति तस्योपरि विस्तार्य कोणान्धारयन्ति यथाधस्ताद्बुध्ना गृह्णीरन्॥

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशतेति *वितत्यमानमभिमन्त्रयते यजमानः ।१३।

वितत्यमानमिति विततशब्दात्तत्करोतीति णिचं कृत्वा यक् द्रष्टव्यः। वितन्यमानमिति वा पाठः॥

इति द्वादशी कण्डिका।

पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन्होतृचमसेन धारां स्रावयति। १।

पुनर्यजमानग्रहणमसंदेहार्थम्। नाभिमूर्णास्तुकया करोतीति याव-त्सनाभिवत् धारास्रावकत्वात्। पवित्रमध्यगतत्वाच्च नाभित्वोपचारः॥

उदचनेनोन्नेताधवनीयाद्धोतृचमस आनयति।२।

उदचनं नाम सोमग्रहणार्थं चमसम्। तथा च †उदचनं चमसमिति बह्वृचाः॥

---

* Thus all MSS. † Thus the MSS.; but Ait. Br. 7. 32, the passage alluded to, has उदचनं चमसम्।

संतता धारा स्रावयितव्या। कामो ह्यस्य समर्धुको भवतीति विज्ञायते।३।

यथा सा संतता स्रवति तथोन्नेत्रा नेतव्यम्। अस्य यजमानस्य कामाः समृध्येरन्निति फलार्थवादः॥

यं द्विष्यात्तस्य विच्छिन्द्यात्।४।

अवश्यमेव संततया भवितव्यमिति भावः॥

धाराया अन्तर्यामं गृह्णाति। सर्वांश्चातो ग्रहाना ध्रुवात्।५।

गतः॥

समानब्राह्मणावुपांश्वन्तर्यामौ साभिचरणिकौ।६।

यः कश्चोपांशोरुक्तो विधिः स सर्वो ऽपि समानो ऽन्तर्यामस्य. समानविधानत्वादुभयोर्ब्राह्मणे। यो ऽप्याभिचारिको विधिरुक्तः सो ऽपि समान एव द्वयोः॥ उपयामस्त्वत्र वचनाद्भवति। स्वहस्तगतस्यापि ग्रहस्यादानमन्त्रो न लुप्यते. मन्त्रसमाम्नाये पुनःपाठात्॥

एतावन्नाना। उपयामगृहीतो ऽस्यन्तर्यच्छेति गृहीत्वोत्तरेण होतारमतिक्रामति। येन वा होता प्रतिपादयेदुत्तरतो ऽवस्थायोत्तरं परिधिसंधिमन्ववहृत्योत्तरार्धे जुहोति।७।

गतः॥

विपरीतौ देशावेके समामनन्ति। ८।

गमनादा होमान्तस्य तस्य देशविपर्ययः॥

असर्वमाग्रयणस्थाल्यां संपातमवनीयैष ते योनिरपानाय त्वेत्यरिक्तं पात्रमायतने सादयित्वा व्यानाय त्वेति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम्। ९।

सादयतीति शेषः। अरिक्तमिति वचनात् भवनिवृत्तिः। न चाग्निरपांश्वोरपासनं. उपांशुं कृत्वोपांशुपात्रे ऽंशुमवास्येति विविच्यैव चोदनात्. सूत्रकृतापि यश्चोपांशुपात्रे ऽंशुरिति तस्यैवानुवादाच्च॥

यं कामयेत प्रमायुकः स्यादित्यसंस्पृष्टौ तस्येत्युक्तम् । १०।

एवं निन्दश्रुतेः उपांशुसवनेन संस्पृष्टे एव पात्रे सादयेदिति भावः॥

नानुदिते सूर्य उपांश्वन्तर्यामौ जुहुयात्। ११।

गतः॥

यदि त्वरेतानुदित उपांशुं जुहुयादुदिते ऽन्तर्यामम् । १२।

त्वरमाणेनाप्युदित एवान्तर्यामो होतव्यः॥

उभावनुदिते होतव्यावित्येके। १३।

अथवा त्वरमाणेनोभावनुदित एव होतव्यौ॥

इति त्रयोदशी कण्डिका।

इति चतुर्थः पटलः॥

यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयात्। यदि बृहत्सामा शुक्राग्रान्। यदि जगत्सामाग्रयणाग्रान्। १।

यस्य रथंतरं होतुः पृष्ठं भवति स रथंतरसामा। तस्य यथासमाम्नातमैन्द्रवायवाग्रा एव ग्रहा ग्रहीतव्याः। बृहत्साम्नः शुक्रमग्रे गृहीत्वा तत ऐन्द्रवायवादयो ग्राह्याः। एवं जगत्साम्न आग्रयणं. तस्य तु प्रकृतावसंभवाद्विकृत्यर्थमुपदेशः॥

यद्युभयसामा याथाकामी। २।

यद्युभयपृष्ठस्तदा याथाकाम्यम्। ऐन्द्रवायवाग्राः शुक्राग्रा वेत्यर्थः॥

अपि वैन्द्रवायवाग्रानेव। ३।

उभयपृष्ठत्वे ऽपि श्रुतौ रथंतरस्यैव मुख्यत्वादिति भावः॥

ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति। काम्यानि ग्रहाग्राणि। ४।

यो ऽयमेकादशगात्रब्राह्मणे ऽनुवाक आम्नातः ऐन्द्रवायवाग्रान्गृह्णीयादित्यादिः तत्र काम्यानि नैमित्तिकानि च ग्रहाग्राण्युक्तानि. तान्यपि प्रत्येतव्यानीत्यर्थः। अन्तं मनुष्यः श्रियै गत्वा निवर्तते ऽस्मादेवान्तमारभते न ततः पापीयान्भवतीति वाक्यशेषात्। यस्य पिता पितामहः पुण्यः स्यादथ तन्न प्राप्नुयादिति. यस्य पितृपितामहौ वसीयांसौ स्यातां स्वयं तु तद्वसीयस्त्वं न प्राप्नुयादित्यर्थः। सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं उक्थ्यग्रहणाय॥

यान्प्राचीनमाग्रयणादित्युक्तम् । ५ ।

यान्प्राचीनमाग्रयणाद्‌ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमत इत्यप्युक्तं ब्राह्मणे. तदप्यनुसंधातव्यमित्यर्थः। तत्र अशब्दं उपांशु सशब्दं उपब्दिमदिति शेषः। आग्रयणस्याप्युपांशुत्वमेव युक्तं यजुर्वेदस्वरत्वात्। तथा आग्रयणादिति काललक्षणार्थत्वे ऽप्युपांशुत्वमेवैन्द्रवायवादीनामिष्यते ॥

यं काम्यमैन्द्रवायवात्पूर्वं गृह्णीयान्न सादयेत् । ६ ।

काम्यं नैमित्तिकं वा यं ग्रहं पूर्वमैन्द्रवायवाद्‌ग्रहाद्‌गृह्णीयात्तदानीमेव न सादयेत्। किं त्वन्यस्य हस्ते दत्त्वा धारयेदिति भावः। कदा तर्हि स साद्यते ॥

ऐन्द्रवायवस्य सादनमनु साद्यते । ७ ।

सादनमनु कृते सादने ॥

ऐन्द्रवायवं गृह्णाति । ८ ।

गतः ॥

आ वायो भूष शुचिपा इत्यनुद्रुत्योपयामगृहीतो ऽसि वायवे त्वेति गृहीत्वापयम्येन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्रवायुभ्यां त्वेति गृहीत्वा पवित्रदशाभिः परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति सादयति । ९ ।

प्रथमेनोपयामेन वायव्यं गृहीत्वा अपगृह्य धारायाः पात्रमपनीय पुनर्द्वितीयमैन्द्रवायवं गृह्णाति। तथा च ब्राह्मणं. तस्मात्सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायव इति॥

सर्वान्ग्रहान्पवित्रदशाभिः परिमृज्यैष ते योनिरिति यथादेवतं यथायतनं सादयति। १०।

ये उत ऊर्ध्वं ग्रहा गृह्यन्ते तेषां नित्यः संमार्गः. सादनं चासत्यपवादे॥

एतदर्थं वा द्वितीयं पवित्रं दशावत्स्यात्। ११।

सोमपावनार्थादन्यद्वा दशापवित्रं ग्रहसंमार्गार्थं स्यात्॥

अयं वां मित्रावरुणेति मैत्रावरुणं गृहीत्वा राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः। तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमिति शृतशीतेन पयसा श्रीत्वैष ते योनिर्ऋतायुभ्यां त्वेति सादयति। १२।

शृतशीतेन अनातञ्चेन पयसा श्रीत्वा मिश्रयित्वा॥

अयं वेनश्चोदयदिति शुक्रं गृहीत्वा हिरण्येन श्रीत्वैष ते योनिर्वीरतां पाहीति सादयति। १३।

गतः॥

शण्डाय त्वेति होष्यस्य। १४।

उपयामगृहीतो ऽसि शण्डाय त्वेति ग्रहणे ऽयेष ते योनिः शण्डाय त्वेति न सादनीयमिति भावः ॥

तं प्रत्नथेति मन्थिनं गृहीत्वा मनो न येषु हवनेषु जुह्वद्विपः शच्या वनुथो द्रवन्ता। आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्ताविति* सक्तुभिः श्रीणात्यनभिध्वंसयन्नात्मानम्। इतरांश्च ग्रहान्। १५।

सक्तवो यवमयाः. तद्यवं प्राविशदिति लिङ्गात्। अनभिध्वंसयन् सक्तुभिरविकिरन् ॥

एष ते योनिः प्रजाः पाहीति सादयति। १६।

गतः ॥

इति चतुर्दशी कण्डिका।

मर्काय त्वेति द्वेष्यस्य। १।

पूर्वतमेन व्याख्यातः ॥

यदि कामयेत यो ग्रामे तं ग्रामान्निरूहेयं यो बहिर्ग्रामात्तं ग्रामे कुर्यामितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उदूहामीति शुक्रमुदूह्येदमह-

* Corrected; the MSS. have गभस्तादिति. Cf. Vâjas. Saṃh. 7. 17 = Ṛigveda 10. 61. 3.

ममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति तस्मिन्मन्थिनं सादयेत्। २।

यो ग्रामे शत्रुस्तं ग्रामान्निर्वासयेयं. यो बहिर्ग्रामात्सुहृत्तं तु तस्य स्थाने कुर्यामिति यदि यजमानः कामयेत तदा शुक्रं सादितमन्यत्रापनीय तत्रैव मन्थिनं सादयेत्। तत्र आमुष्यायणस्येति गोत्रनिर्देशः. अमुष्या इति ग्रामस्य॥ तदयं प्रयोगात्मा। इदमहं विष्णुगुप्तं वैन्यं चित्रसेनस्य पुत्रं मथुराया विश उदूहामीत्यादि॥

ये देवा दिवीत्युपरिष्टादुपयामया पुरस्तादुपयामेन वा यजुषा द्वाभ्यां धाराभ्यां स्थाल्याग्रयणं गृह्णाति। ३।

ये देवा दिवीत्यृचोपयामशिरस्कया वा ग्रहणं. उपयामादिना वा यजुषेति. इन्द्रियेणेत्यन्तेन॥

य आग्रयणस्थाल्यां सोमस्तमन्यस्मिन्पात्र आनीय तां द्वितीयां धारां करोति। ४।

गतः॥

त्रिंशत्त्रयश्चेति रुग्णवत्यर्चा भ्रातृव्यवतोऽभिचरतो वा गृह्णीयात्। ५।

रुग्णवती रुजिधातुमती। पुरस्तादुपयामेन यजुषाप्येके गृह्णन्ति. तस्याप्येतस्मिन्ननुवाके पुनःपाठात्॥

विदद्यती सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः।

अग्रं नयत्सुपद्यक्षराणामच्छा एवं प्रथमा जानती गादिति वाभिचरतः। ६।

अभिचरत इति पुनर्वचनात् नायं मन्त्रो भ्रातृव्यतः॥

आग्रयणं गृहीत्वा चिर्हिङ्कृत्य वाचं विसृजते। ७।

तमाददानो वाचं यत्वाग्रयणं गृहीत्वा विसृजत इति यदुक्तं तदेतस्मिन्काल एव कर्तव्यमित्यर्थः॥

सोमः पवते सोमः पवते सोमः पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ऽस्मै ब्रह्मणे पवते ऽस्मै क्षत्राय पवते ऽस्यै विशे पवते ऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते ऽस्मै सुन्वते यजमानाय पवते मह्यं ज्यैष्ठ्याय पवते। यथा देवेभ्यो ऽपवथा एवं मह्यं पवस्वेति चिरुद्वदति शनैरुच्चैरथ सूच्चैः। ८।

शनैरित्यादिना मध्यमकण्ठस्वरा गृह्यन्ते. नोपांशुः. उद्वदतीति वचनात्॥

एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा चीनग्निष्टोमे ऽतिग्राह्यान्गृह्णाति। आग्नेयमैन्द्रं सौर्यमिति। ९।

अग्निष्टोमग्रहणं ब्राह्मणोक्तोक्थ्यव्युदाससूचनार्थं न तु सर्वेतरसंस्था-

युदासार्थम्। कुतः। ऐन्द्रमतिग्राह्यं गृहीत्वेति वाजपेये सिद्धानुवादात्॥

अग्न आयूंष्युत्तिष्ठंस्तरणिरिति ग्रहणसादनाः।१०।

अथ एते ऽनुवाकास्त्रयाणां क्रमाद्ग्रहणसादनार्था मन्त्राः॥

स्थाल्योक्थ्यं गृह्णाति। उपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वयस्वत इति ग्रहणसादनौ।११।

स्थाल्या गृह्णाति न पात्रेण॥

इति पञ्चदशी कण्डिका।

---

मूर्धानं दिवो अरतिं पृथिव्या इति स्थाल्या ध्रुवं पूर्णं गृह्णाति।१।

मूर्धानं दिव इत्युपरिष्टादुपयामयर्चा गृह्णाति। नात्र पुरस्तादुपयामं यजुर्भवत्यवचनात्। उक्तस्तु विकल्पः सत्याषाढेन। केचित्तु अच्युतचित्तम इत्यन्तेन गृह्णन्ति॥

अल्पं गृह्णीयाद्यं कामयेत प्रमायुकः स्यादिति। उपर्यर्धं यं कामयेतोत्तरमायुरियादिति।२।

अर्धान्न्यूनं अल्पं. तन्निन्दा निषेधार्था। अर्धादुत्तरं उपर्यर्धम्। उत्तरमायुः पश्चाग्रत ऊर्ध्वं वयः॥

एष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्ये सादयेदायुष्कामस्य।३।

हिरण्यसादनस्य काम्यत्वादिह्नतौ निवृत्तिः ॥

तं राजपुत्रो गोपायत्यावनयनात्। ४।

गोपायति रक्षति ॥

यदि कामयेतावगतमपरुन्ध्युरपरुद्धो ऽवगच्छेदितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उत्खिदामीति ध्रुवमुत्खिद्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति तत्रैव पुनः सादयेत्। ५।

यो यजमानद्वेष्यः कश्चिदपरुध्य प्राप्तराज्यः स्यात्तमपरुन्ध्युः ऐश्वर्याद्भ्रंशयेयुः अन्ये बलीयांसः. यस्तु तेनापरुद्धः स एव पुनरवगच्छेत् प्राप्तैश्वर्यः स्यादिति कामः। उत्खेदनं ऊर्ध्वग्रहणम्। व्याख्यातः शेषः ॥

यद्देवं कुर्यादायुः प्रजानां विचालयेत्। तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेत्। ६।

पूर्वनिन्दोत्तरविधिप्रशंसार्था। तेन द्वौ विधी विकल्प्येते। उपर्युपरि ध्रुवं तत्समीपतस्तृणमवगमयेत् ॥

यद्यभिचरेदिदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामीति ध्रुवं प्रवर्तयेत्। ७।

प्रवर्तयेत् भ्रमयेत् ॥

ध्रुवं त्वा ध्रुवक्षितिममुष्मा स्थानाच्च्यावयामीति वा व्यङ्गयेत्। ८।

व्यङ्गयेत् विकर्षयेत्॥

अत्र धारा विरमति। ९।

अत्र अर्धपूर्णं द्रोणकलशं कृत्वेति कात्यायनः॥

प्रपीड्य पवित्रं निदधाति। १०।

प्रपीडनं द्रोणकलशे॥

एकधनानां यथार्थं सर्वाश्च मैत्रावरुणचमसीया आधवनीये ऽवनीय पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तमसर्वं पूतभृत्यवनीयोपयामगृहीतो ऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेत्। इन्द्राय त्वेत्याधवनीयम्। विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतम्। ११।

यथार्थमिति यावतीभिर्वर्धितं रसं प्रातःसवनाय पर्याप्तं मन्येत तावतीरित्यर्थः। असर्वमिति एकस्मै चमसगणाय पर्याप्तमवशिष्येति भावः॥

ते पवमानग्रहाः। १२।

एवमभिमृष्टास्ते ब्राह्मणे पवमानग्रहाः समाख्यायन्ते॥

पुरस्तादुपयामाः सर्वे। १३।

प्रथमवदुत्तरयोरप्युपयामस्यानुषङ्ग इति भावः॥

पञ्चहोत्रा यजमानः सर्वान्ग्रहानभिमृशति। १४।

ये पात्रेषु गृहीताः सोमाः तान्सर्वानभिमृशति पवमानग्रहप्रथमान्। तेषु संभवतां सहावमर्शनं. असंभवतामावृत्तिः॥

द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इत्येतैः प्रतिमन्त्रं वैप्रुषान्होमाञ्जुहोति। १५।

स्कन्नानां विप्रुषां देवत्राकरणार्था वैप्रुषा नामैते चत्वारो होमाः। तत्र यस्ते द्रप्स इत्येतत् यस्ते द्रप्स स्कन्दति. यस्ते द्रप्सो मधुमानित्यनयोस्तन्त्रोपादानम्। तथा चोत्तरसूत्रे वक्ष्यति। ततश्च योयः स्पृश्यति स सर्वो जुहुयात्. वैप्रुषाञ्जुहुत्सु जुहोतीति लिङ्गात्. वैप्रुषान्सप्तहोतारं च हुत्वा सर्पन्तीति लिङ्गाच्च। कात्यायनस्त्वाह. *वैप्रुषान्होमाञ्जुहुति. अध्वर्युर्वेति॥

प्रथमं सर्वत्रानुपक्तमुत्तरांस्त्रीन्विहृताननुसवनमेके समामनन्ति। १६।

द्रप्सश्चस्कन्देति त्रिषु सवनेषु समाना प्रथमाहुतिः. उत्तरास्तिस्त्वनुसवनमेकैका द्वितीया॥

सप्तहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वोदञ्चः

---

* But the text of Káty. S'rauta 9. 6. 30, as printed by Prof. Weber, has विप्रुषां होमं.

प्रशास्ता बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति ।१७।

सप्तहोता ब्रह्मणापि होतव्यः. हुत्वा सर्पन्तीति सर्वेषामविशेषेण होमवचनात्. कल्पान्तरेषु व्यक्तत्वाच्च। वैप्रुषाञ्जुहुत्वा जुहोतीति तु प्रदर्शनार्थं द्रष्टव्यम् ॥

इति षोडशी कण्डिका ।

अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः । १ ।

हुते सप्तहोतरि समन्वारभन्ते ॥

यद्यु वै स्वयं होता यजमानः स्यात्सर्पेदेव। औपगात्रं ह्यस्येति बह्वृचब्राह्मणं भवति । २ ।

यदा सत्त्रे यजमानः स्वयं होता स्यात्तदा सर्पेदेव. न तु प्रकृतिवद्धविर्धान एवासीत। कुतः। अस्ति ह्यस्य यजमानस्य सत औपगात्रं. तदुपगानं तस्य च तत्रागतेन शक्यते कर्तुमिति ॥

त्सरन्त इव रेहाणा इव न्यञ्चिव शीर्षाणि कृत्वा सर्पन्ति । ३ ।

मृगमिव जिघृक्षवो व्याधाः त्सरन्तः छद्मना गच्छन्त इव गच्छन्ति। तथा रेहाणा हिंसन्त इव। तथा अवनतशिरसश्च ॥

मृग इव हि यज्ञः । पूर्वो ऽध्वर्युर्बर्हिर्मुष्टिं धून्वन्त्सर्पति वागग्रेगा अग्र एत्विति गायत्रः पन्था वसवो देवता-ऋक्केणापरिपरेण पथा स्वस्ति वहूनशीयेति । ४ ।

मृग इव हि यज्ञः. यथोक्तं ब्राह्मणे. यज्ञो देवेभ्यो निलायत कृष्णो* रूपं कृत्वेति । तस्मादेवमुपनिनीषुरिवाध्वर्युरग्रतो बर्हिर्मुष्टिं धून्वन्त्सर्पति द्वाभ्यां मन्त्राभ्याम् ॥

चात्वालमवेक्षमाणाः स्तुवते । उत्तरे वा वेद्यंसे । ५ ।

अन्तर्वेद्यामीनाश्चात्वालमवेक्षमाणाः स्तुवते. वेद्यंसे वा ॥

अथाध्वर्युः स्तोत्रमुपाकरोति । ६ ।

उपाकरोति उपक्रमयति । तस्यैव प्रकारमाह ॥

वायुर्हिङ्कर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छति । ७ ।

गतः ॥

सर्वेषु पवमानेष्वेवमुपाकरणः । ८ ।

एवमुत्तरयोरपि पवमानयोरनेन बर्हिर्मुष्टिर्दातव्यः ॥

असर्ज्यसर्जि वागसर्ज्यैन्द्रं सहो ऽसर्ज्युपावर्तध्वमिति बर्हिर्भ्यामन्यानि पवमानेभ्यः स्तोत्राण्युपाकरोति । ९ ।

गतः ॥

---

* Thus the MSS, but Taitt. Saṃh. 6. 2. 4. 2 has विष्णू.

तस्माद्ब्राह्मणेन बहिष्पवमान उपसद्यः। पवित्रं हि। यं द्विष्यात्तं बहिष्पवमानात्परिबाधेतेति विज्ञायते ॥ १० ॥

तस्मादिति ब्राह्मणे प्रकृतप्राशस्त्यापेक्षम्। यस्मादेवं प्रशस्तं तस्मादुपसद्यः उपगन्तव्यः सर्वैरपि पवित्रार्थिभिर्द्विजैः। ब्राह्मणग्रहणं प्रदर्शनार्थम्। तदुक्तं तैत्तिरीयके ऽपि. तस्मादेवंविदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान इति ॥

स्तूयमानं यजमान उपगायति। चत्वारो ऽवरार्ध्या उपगातारः ॥ ११ ॥

स्तूयमानं बहिष्पवमानं यजमानस्तावदुपगायति. ऋत्विजो ऽपि चतुरवरा उपगायन्तीत्यर्थः॥ तथा यजमानपञ्चमा उपगायन्तीति भारद्वाजः। स एव पुनराह. हो इत्यृत्विज उपगायन्ति. ओमिति यजमान इति। छान्दोगास्तु विपरीतमाहुः॥

नाध्वर्युः ॥ १२ ॥

उपगायेदिति शेषः॥

वस्व्यै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मे ऽवरुद्ध्या इति पुरस्ताद्बहिष्पवमानाद्यजमानो जपति ॥ १३ ॥

गतः॥

दशहोतारं च व्याचष्टे। स्तूयमाने च दशहोतारं जपति ॥ १४ ॥

बहिष्पवमाने दशहोतारं व्याचष्टीतेति ब्राह्मणानुवादेन सूत्रकारेण व्याख्यातमिति। जप एवोच्यते. स्तूयमाने च जपतीति व्यक्तवचनात्. यत्र जपा याजमाना इति लिङ्गाच्च॥

श्येनो ऽसि गायत्रच्छन्दा इति मध्यमायां च स्तोत्रीयायामन्वारोहम्। १५।

जपतीत्यनुषङ्गः। अन्वारोहा नाम श्येनो ऽसीत्यादयस्त्रयो मन्त्राः॥

द्वितीये पवमाने द्वितीयेन मन्त्रेण। तृतीये तृतीयेन। १६।

अन्वारोहं जपतीति शेषः। द्वितीयार्थे तृतीया॥

अथात्यन्तप्रदेशः। स्तुतस्य स्तुतमसीति स्तोत्रमनुमन्त्रयते। शस्त्रस्य शस्त्रमसीति शस्त्रम्। १७।

अत्यन्तप्रदेश इत्युक्तार्थः॥

इन्द्रियावन्तो वनामह इत्युभयत्रानुषजति। १८।

गतः॥

स्तुते ऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणाहि* पुरोडाशाँ अलंकुर्विति। १९।

आग्नीध्र एव संप्रेष्यति. उत्तरविधौ उत्तिष्ठन्निति वचनात्॥

* sic.

अथैकेषाम् । स्तुत उत्तिष्ठन्नाहाग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशुनेहीति ।२०।

शाखान्तरे त्वेवं श्रुतः स तूत्तिष्ठता वक्तव्यः ॥

संप्रैषवत्कुर्वन्ति ।२१।

अथालंकरणान्तमाग्नीध्रः करोति। प्रतिप्रस्थाता सवनीयपशुना सह गच्छति । बहुवचनमविवक्षितम् ॥

इति सप्तदशी कण्डिका ।

इति पञ्चमः पटलः ।

आग्नीध्राद्धिष्णियान्विहरति ।१।

आग्नीध्रो ऽग्निराग्नीध्रः । तस्माद्धिष्णियानग्नीन्विहरति ॥

अङ्गारैर्द्वे सवने। शलाकाभिस्तृतीयम् ।२।

द्वयोराद्ययोः सवनयोः काष्ठैरग्नीन्विहरतीत्यर्थः । शरदर्भादिशला-काभिस्तृतीयसवने ॥

पांसुधिष्णियेषु निवपति ।३।

ये पांसुभिर्न्युप्ता धिष्णियादयस्तेष्वेवाग्नीन्निवपति. न त्वनुद्देश्येषु बहिष्पवमानास्तावादिष्वपि ॥

**तेनानुपूर्व्येण यथान्युप्ता भवन्ति ।४।**

येनैव क्रमेण ते न्युप्तास्तेनैवाग्नयो ऽपि निवप्तव्याः । तथा व्याघारणस्याप्ययमेव क्रमो न्यायसाम्याद्द्रष्टव्यः ॥

**प्रचरण्यां पञ्चगृहीतं गृहीत्वा द्रोणकलशाच्च परिप्लवया राजानं पुरस्तात्प्रत्यङ्ङासीनो धिष्णियान्व्याघारयति तैरेव मन्त्रैः । तूष्णीं वा ।५।**

दर्विहोमत्वादेव सिद्धस्यासनस्य वचनं पुरस्तात्प्रत्यङ्ङिति गुणविधानार्थम् । यैर्न्युप्ता धिष्णियास्तैरेव मन्त्रैर्धिष्णियाग्नीन्व्याघारयति यदि प्रागेतैरुपस्थानमपि कृतं स्यात्. अन्यथा तूष्णीं व्याघारणं. एतानेवोपस्थानान् व्याघारणांश्चैक इति सत्याषाढयोरेवोपस्थानव्याघारणयोर्मन्त्रवचनात् । मन्त्रपक्षे ऽपि तूष्णीमेवाहवनीयस्य व्याघारणं न तु सम्राडसि कृशानुरिति. तस्यानुद्देश्यमन्त्रत्वात् । मन्त्रेषु च रौद्रेणेत्यनुषङ्गस्योपरि स्वाहाकारः । बौधायनस्त्वाह विभवे प्रवाहणाय स्वाहा रौद्रेणेत्यादि ॥

**आहवनीयमाग्नीध्रीयं होत्रीयं मार्जालीयमिति सोमेन । आज्येनेतरान् ।६।**

सोमेन व्याघार्याणामयं विवेको न तु व्याघारणक्रमनियमः. तेनानुपूर्व्येण यथान्युप्ता भवन्तीत्यनेनैवात्रापि क्रमस्य प्रदर्शितत्वात्. यथान्युप्तं धिष्णियान्व्याघारयतीति कल्पान्तरेषु व्यक्तवचनाच्च । तस्मान्निवपनक्रमेणाहवनीयादिचयानन्तरं प्रशास्त्रीयादिमार्जालीयान्तान्व्या-

घार्य ततो यथाविधि सोमं भक्षयति. होमाभिषवसंयोगात्। सत्याषाढस्त्वाह व्याख्यातः सोमस्य भक्ष इति ॥

यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततमनुपृष्ठ्यं बर्हिः स्तृणात्याहवनीयात्। ७।

अनुपृष्ठ्यं पृष्ठ्यायामेव बर्हिः स्तीर्त्वा पुरोडाशानप्यलंकरोत्याग्नीध्रः। तत्र धानासु बहुवद्रूहः पूर्ववत् ॥

वैष्णव्यर्चा पुनरेत्य यजमानो राजानमुपतिष्ठते विष्णो त्वं नो अन्तम इति। ८।

यद्यप्येतदुपस्थानं बहिष्पवमानाङ्गं तथापि नोत्तरयोः पवमानयोर्गच्छति. पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योपतिष्ठत इति श्रुतेः. तयोः पराक्त्वाभावाच्च। तथा तत्र न राजानमुपतिष्ठत इत्येव भारद्वाजः॥

एतयैवाध्वर्युः पात्राणि संमृश्याश्विनं गृह्णाति। ९।

यानि पात्राणि सोमवन्ति तान्येव संमृशति नेतराणि. यदेवास्य शयानस्योपशुष्यतीति वाक्यशेषात् ॥

या वां कशेति ग्रहणसादनौ। १०।

गतः ॥

द्रोणकलशाद्धाराग्रहाः परिप्लवया गृह्यन्ते। वच-
नादन्यतः। ११।

धारायामुत्पन्ना ग्रहाः धाराग्रहाः. ततोऽन्येषामुत्सर्गतो द्रोणकल-
शाद्ग्रहणम्। वचनात्तु विपर्ययः. यथा वैश्वदेवं पूतभृतो गृह्णाती-
त्यादौ। यदाप्याश्विनाग्रा ग्रहास्तदापि द्रोणकलशात्परिप्लवयाश्विनस्य
ग्रहणं न धारायाः॥

त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति
।१२।

पूर्वां रशनामुत्क्षिप्य त्रिवृतान्यया परिव्ययति. न तु तामेवादाय.
पुनस्त्रिवृद्वचनात्। पूर्वामुद्गृह्णात्येव बौधायनकात्यायनौ। सा च
सवनीयबहुत्वेऽपि नावर्तते. यूपसंस्कारत्वात्। स्वरुस्तु पूर्व एव-
मादायावगुह्यः. प्रतियूपं स्वरव इति वचनात्। बौधायनस्त्वाह.
यूपः स्वरुरशनामुत्पादयेदिति बौधायनः. पशुरिति शालीकिरिति॥
पशुरजोऽभिप्रेतः. अग्नीषोमीयप्रकृतित्वात्. जात्यन्तरावचनात्.
आग्नेयमजमग्निष्टोम आलभत इति श्रुत्यन्तराच्च। लोहितत्वतूपरत्वादीनां
तु पशुरूपाणामनादरः. तद्वैशेषिकत्वात्। तथा च सत्याषाढः.
सवनीयमुपाकरोति. तस्य रूपनियमो न विद्यत इति॥

ऐन्द्राग्नमुक्थ्ये। ऐन्द्रं षोडशिनि। सारस्वतमतिरात्रे
।१३।

पशुमुपाकरोतीत्यनुषङ्गः। स चात्र एव सर्वत्र वेदितव्यः। केचित्तु
षोडशिनि वृष्णिमतिरात्रे मेषौ चोपाकुर्वन्ति. समुच्चयपक्षे तथा-
दर्शनात्। तदयुक्तं विशेषावचनात्। यदि चैवमभिप्रैष्यत् तावन्ने-

वोक्तापि समुच्चयपक्षमात्रमुत्तरत्राभिहितत्वात्। तस्मादज एव सर्वत्र॥ कात्यायनमतात्तु समुच्चये ऽप्यजो विकल्पते मेष्या. यथाह. सरस्वत्यै चतुर्थी ऽतिरात्रे. मेषी वेति। अत एव सरस्वतीग्रहणात् वाचं सारस्वत्येति लिङ्गाच्च सरस्वतीदेवतात्वमपि सारस्वतस्य पश्वार्थ्येऽर्थ्यं भविष्यति॥

समभ्युच्चयवदेके समामनन्ति। आग्नेयमग्निष्टोम आलभते। ऐन्द्राग्नमुक्थ्ये द्वितीयम्। ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्। सारस्वतीं मेषीं चतुर्थीमतिरात्रे।१४।

वृष्णिः पुंमेषः॥

आ वपायाः कृत्वा हुतायां वपायां मार्जयित्वा प्रातःसवनाय संप्रसर्पन्ति।१५।

सवनीयस्यापि प्राजहितात्पशुश्रपणाद्धरणं: अग्नीषोमीयप्रकृतित्वात्। संप्रसर्पन्ति समेताः सदः प्रविशन्त्यध्वर्युब्रह्मयजमानाः॥

प्रसर्प्यन्तो गृहानवेक्षन्ते।१६।

प्रसर्प्यन्त इति वचनात् यद्यपि वा तृतीयसवन एवाग्रयणादिति प्रसर्पणोत्तरकाले षोडशिग्रहणं यदा च सोमातिरेकवशादुत्तरकालभाविन उक्थ्यादिग्रहाः तत्र नावेक्षणमुत्कृष्यते॥

द्वौ समुद्राविति पूतभृदाधवनीयौ।१७।

सकृदुक्तेन मन्त्रेण द्वौ युगपदवेक्षते *॥

* Thus all MSS.

द्वे द्रधसी इति द्रोणकलशम्।१८।

गतः ॥

परिभूरग्निमिति सर्वं राजानम्।१९।

तस्य त इदमुन्मृज इति मन्त्रान्तः। तत्र तु बभ्रुषदादेः तस्य ते भूतिमुन्मृजे तस्य ते ब्रह्मवर्चसमुन्मृजे तस्य त आयुरुन्मृजे तस्य तेऽमुष्य प्राणानुन्मृज इति मन्त्रविकारानाह बौधायनः। कामाभावे त्वविकृतो मन्त्रः ॥

प्राणाय म इत्युपांशुम्। अपानाय म इत्यन्तर्यामम्। व्यानाय म इत्युपांशुसवनम्। वाचे म इत्यैन्द्रवायवम्। दक्षक्रतुभ्यां म इति मैत्रावरुणम्। चक्षुर्भ्यां म इति शुक्रामन्थिनौ। श्रोत्राय म इत्याश्विनम्। आत्मने म इत्याग्रयणम्। अङ्गेभ्यो म इत्युक्थ्यम्। आयुषे म इति ध्रुवम्। तेजसे मे वर्चोदा वर्चसे पवस्वेत्याज्यानि। पशुभ्यो मे वर्चोदा वर्चसे पवस्वेति पृषदाज्यम्। पुष्ट्यै मे वर्चोदाः पवध्वमिति सर्वान्ग्रहान्। स्तनाभ्यां मे वर्चोदौ वर्चसे मे पवेथामित्यृतुपात्रे। तेजसे म ओजसे मे वर्चसे मे वीर्याय मे वर्चोदा वर्चसे पवस्वेत्येतैः प्रतिमन्त्रमतिग्राह्यान्षोडशिनमिति। विष्णोर्जठरमसीति द्रोणकलशम्। इन्द्रस्येत्याधवनीयम्। विश्वेषां देवानामिति पूतभृतम्।२०।

उपांश्वन्तर्यामशब्दाभ्यां पात्रलक्षणा. क्रुतलाद्गृहयोः। वर्चोदा वर्चसे पवस्वेति सर्वत्रानुषज्येत। तथा इन्द्रस्य जठरमसीत्यनुषङ्गः. विश्वेषां देवानामिति च॥

इत्यष्टादशी कण्डिका।

---

को ऽसि को नामेत्याहवनीयम्।१।

सुपोषः पोषैरिति मन्त्रान्तः। तस्य त इदमुन्मृज इत्यन्ये। तदयुक्तं. विश्वेभ्यो मे रूपेभ्य इत्युत्तरत्र उपादानात्: वर्चसे पवस्व तस्य ते भक्षीयेति लिङ्गविरोधाच्च॥

सोम त्वां वृणीमह उद्गातारं नृचक्षसं पारया ण स्वस्तये। विश्वेभ्यो मे रूपेभ्य इति सर्वं राजानम्।२।

सोम त्वामित्यृचा विश्वेभ्यो मे रूपेभ्य इति उन्मृज इत्यन्तेन यजुषा चावेक्षते॥

बुभूषन्नवेक्षेत। ब्रह्मवर्चसकाम आमयाव्यभिचरन्वा।३।

नित्य एवावेक्षणे कामाः. नित्यवदस्योत्तरयोः सवनयोरनुवादात्॥

ऋतंकारैर्यजमानः सर्वान्ग्रहानुपतिष्ठते।४।

येषु ऋतशब्दः ते ऋतंकाराः। ते च यजमानग्रहणान्नाध्वर्योर्भवन्ति। भवन्त्येव तु ब्रह्मणो ब्रह्मत्वविधौ वचनात्॥

शृतौ स्थः प्राणापानौ मे श्रीणीतमित्युपांश्वन्तर्यामौ। शृतो ऽसि व्यानं मे श्रीणाहीत्युपांशुसवनम्। शृतो ऽसि वाचं मे श्रीणाहीत्यैन्द्रवायवम्। शृतो ऽसि दक्षक्रतू मे श्रीणाहीति मैत्रावरुणम्। शृतौ स्थश्चक्षुषी मे श्रीणीतमिति शुक्रामन्थिनौ। शृतो ऽसि श्रोत्रं मे श्रीणाहीत्याश्विनम्। शृतो ऽस्यात्मानं मे श्रीणाहीत्याग्रयणम्। शृतो ऽस्यङ्गानि मे श्रीणाहीत्युक्थ्यम्। शृतो ऽस्यायुर्मे श्रीणाहीति ध्रुवम्। शृतमसि तेजो मे श्रीणाहीत्याज्यानि। शृतमसि पशून्मे श्रीणाहीति पृषदाज्यम्। शृता स्थ पुष्टिं मे श्रीणीतेति सर्वान्ग्रहान्। प्रजापतेर्जठरमसि शृतो ऽसि स मा श्रीणाहीति द्रोणकलशम्। इन्द्रस्य जठरमसि शृतो ऽसि स मा श्रीणाहीत्याधवनीयम्। विश्वेषां देवानां जठरमसि शृतो ऽसि स मा श्रीणाहीति पूतभृतम्। शृतस्त्वं शृतो ऽहं शृतो मे प्राणः शृतो मे ऽपानः शृतो मे व्यानः शृतं मे चक्षुः शृतं मे श्रोत्रं शृता मे वाक् शृतो म आत्मा शृतं मे हविः शृतो मे सोमः शृता मे ग्रहाः॥ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्। शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने॥ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे॥ वृष्णस्ते वृष्ण्यं शवो वृषा वने वृषा मदे।

स त्वं वृषन्वृषेदसि॥ अश्वो न चक्रदो वृषा सं गा इन्द्रो समर्वतः। वि नो राये दुरो वृधीति सर्वं राजानम्।५।

सर्वत्रोपतिष्ठत इत्यनुषङ्गः॥

अग्निः पवित्रं स मा पुनातु। सोमः पवित्रं स मा पुनातु। सूर्यः पवित्रं स मा पुनातु। उपहूता गाव उपहूतो ऽहं गवामित्येतैर्यथालिङ्गमुपस्थाय स्फ्यः स्वस्तिरित्युत्करे वेदिकरणानि परास्योपतिष्ठते।६।

अग्निः पवित्रमित्याहवनीयं. सोमः पवित्रमिति सर्वं राजानं. उपहूता गाव इति दक्षिणागवीः. उपहूतो ऽहमित्यात्मानम्। वेदिकरणानि स्फ्यादीनि यैर्वेदिः कृता। तानि तूष्णीं प्रास्य स्फ्यः स्वस्तिरित्युपतिष्ठते तंतं यथालिङ्गम्। अग्निः पवित्रमित्यादयो ब्रह्मणो ऽपि निवर्तन्ते. अश्रुतंकारत्वात्। अध्वर्योस्तु पक्षे भविष्यन्ति॥

उप मा द्यावापृथिवी इति द्यावापृथिवी। उपास्ताव इति बहिष्पवमानास्तावम्।७।

इत्येकोनविंशी कण्डिका।

---

कलश इति कलशम्। सोम इति सोमम्। अग्निरित्यग्निम्। उप देवा इति देवान्। उप यज्ञ इति यज्ञम्। उप मा होत्रा इति होत्रकान्।१।

उपतिष्ठत इत्यन्वयः॥ यत्र देशे बहिष्पवमानः स्तूयते स बहिष्पवमानास्तावः। ह्वयतेः सर्वत्रानुषङ्गः उपशब्दस्य यत्राश्रुतस्तत्रानुषज्यते. तदुपसृष्टस्यैव ह्वयतेराद्यन्तयोराम्नातत्वात्. तस्यैव चाकाङ्क्षितत्वात्. आकाङ्क्षासंनिधियोग्यतालक्षणत्वाच्चानुषङ्गस्य। न तु माशब्दस्यानुषङ्गः. अधिकृतेन बुद्धिस्थेनापि तेनाकाङ्क्षानिवृत्तेः. उप देवा उप यज्ञ इति लिङ्गाच्च। न चायं समाधिरुपसर्गस्य संभवति. उपसृष्टस्यैव व्याख्यातस्यार्थविशेषाभिधायकत्वात्। व्यक्तोक्तं चैतद्धिरण्यकेशिना. यथा उप कलश इति कलशं उप सोम इति सोमं उपाग्निरित्यग्निमिति। केचित्तु माशब्दमप्यनुषजन्ति. आद्यन्तयोः श्रुतत्वात्। ननु ह्वयतेः संनिहितस्यापि वचनस्य वैरूप्यात्कचित्कचिदयोग्यान्वयः स्यात्. अतः कथमनुषङ्गः सेत्स्यति। तत्राह॥

**ह्वयेतां ह्वयतां ह्वयन्तामिति यथालिङ्गं सर्वत्रानुषजति।२।**

सामर्थ्याद्विपरिणतो ऽन्वेष्यतीति भावः॥

**नमो ऽग्नये मखघ्न इत्याहवनीयम्। नमो रुद्राय मखघ्न इत्याग्नीध्रीयम्। नम इन्द्राय मखघ्न इति होत्रीयम्।३।**

उपतिष्ठत इत्यन्वयः॥

**दृढे स्थः शिथिरे समीची इति द्यावापृथिवी उपतिष्ठते। सूर्यं वायुमग्निं यमं सरस्वतीं सदसो द्वाराविति।४।**

हृदे स्थ इत्यादिभिर्यजुर्भिर्यथाक्रममेता देवता उपतिष्ठते ॥

पातं पात्विति यथालिङ्गं सर्वत्रानुषजति ।५।

पातं पात्वित्युभयं संनिहितम्। तत्र योग्यतया व्यवस्थेति भावः। माशब्दस्याप्यनुषङ्ग इत्येके ॥

द्रष्ट्रे नम इति प्रसर्प्यञ्जपति। उपद्रष्ट्रे नम इति प्रसृप्य ।६।

द्रष्ट्रे नम इति जपित्वा सदः प्रसृप्याथ जपत्युपद्रष्ट्रे नम इति ॥

अपरेण ब्रह्मसदनं यजमानायतनम्। पूर्वेण वा ।७।

पूर्वेणापरेण वा ब्रह्मसदनं यजमानायतनं भवति। ब्रह्मसदनं कुत्रेति चेत् वक्ष्यति तत् अग्रेण प्रशास्तुर्धिष्ण्यं दक्षिणातिक्रम्योपविशतीति। तथा दक्षिणपुरस्तान्मैत्रावरुणस्योपविशेदित्याश्वलायनः ॥

नमः सदस इति सदो नमः सदसस्पतय इति ब्रह्माणं नमः सखीनां पुरोगाणामित्यृत्विजो नमो दिवे नमः पृथिव्या इति द्यावापृथिवी उपस्थायाहे दैधिषव्येत्यायतनात्तृणं निरस्योन्निवत उदुद्वतश्च गेपमित्युपविशति ।८।

गतः ॥

पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति ।९।

उपविश्येति वचनं उपविशतो मा भूज्जप इति ॥

आगन्त पितरः पितृमानिति दक्षिणार्धं परेक्षते ।१०।

प्राचीनावीती बद्धाञ्जलिः प्रेक्षते. पितॄणां पूजार्थत्वात्। तथा च ब्राह्मणं. तेभ्य एव नमस्कृत्य सदः प्रसर्पतीति ॥

उभावेतानि जपतो ऽध्वर्युर्यजमानश्च। अपि वा यजमान एव ।११।

अधिकारादेव यजमानस्य सिद्धत्वात् अध्वर्योर्विकल्पार्थं वचनम्। अग्निः पवित्रमित्यादीनि यजूंषि यजमानेन सहाध्वर्युरपि जपति वा न वेत्यर्थः ॥

अथ प्रतिप्रस्थाता सवनीयानासादयति ।१२।

प्रकृतिवदपरेण स्रुचः प्रियेण नाम्नेत्यासादयति। तस्य चानूहः प्रकृतावेव दर्शितः। आमन्नाभिमर्शनं प्राकृतमन्त्रक्रमेण. हविषामतः परिवापस्य प्रथमं क्रियते ततः पयस्याया इत्यादि द्रष्टव्यम्। ऊहश्च मन्त्राणां प्रकृतावेव व्याख्यातः ॥

तैरध्वर्युः प्रचरति ।१३।

गतः ॥

सर्वेषां पुरोडाशानां जुह्वां दैवतानि समवद्यति। उपभृति सौविष्टकृतानि ।१४।

समवद्यति सहावद्यति। धानासु मन्त्रविकारः पितृयज्ञे दर्शितः।

तत्र जुह्वामुपस्तीर्य दैवतान्यवदाय प्रत्यभिघार्य हवींषि तदैव सौविष्ट-कृतान्यप्यवद्यति ॥

प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामनुब्रूहि प्रातः प्रातःसावस्येन्द्राय पुरोडाशानां प्रेष्येति संप्रैषौ। प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामवदीयमानानामनु-ब्रूहि प्रातः प्रातःसावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रे-ष्येति वा। १५।

अनुमन्त्रणे लिङ्गदेवतामादिश्याशिषः समुच्चीयन्ते. हविषां नाना-त्वात्। तथा च सवनीयान्प्रकृत्य भारद्वाजः. तन्त्रं देवताग्रहणं. आशिषस्तु समुच्चीयेरन्. संसृष्टे च नानाद्रव्यत्वादिति। तत्रैन्द्राग्न-विकाराणां त्रयाणामपि तन्त्रेण भवन्त्याशिषः। नात्र नारिष्ठाः. नान्तःपरिध्यर्पां निनयनं. पाशुकानामेव प्रसङ्गात् ॥

अग्नये ऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतः संप्रैषौ। १६।

सौविष्टकृतानि जुह्वां विपर्यस्य संप्रेष्यति. जुह्वामौपभृतानि विपर्यस्यन्निति लिङ्गात् ॥

प्राशित्रमवदायेडां न यजमानभागम्। १७।

व्याख्यातः पशुपुरोडाशे ॥

होत्र इडां हृत्वा हविर्धानं गच्छन्संप्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीति। १८।

गतः ॥

उपयामगृहीतो ऽसि वाक्षसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयति। १९।

द्विदेवत्येज्याः प्रतिनिरुद्धा गृह्यन्त इति प्रतिनिग्राह्याः ॥

ऐन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य दक्षिणतो ऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्याध्वरो यज्ञो ऽयमस्तु देवा इति परिप्लवयाघारमाघारयति यथोपांशुहुतो भवति। २०।

यथोपांशुहुतस्तथा दक्षिणतः प्राञ्चमृजुं संततं दीर्घं जुहोति ॥

अत्र सर्वाः सोमाहुतीर्जुहोति। २१।

या अनादिष्टदेशाः सोमाहुतयस्ता अत्र जुहोति यत्राघारो हुतः ॥

यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्स्रुचं वायव्यं चमसं वान्वारभ्याश्रावयेत्। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादित्यत्यन्तप्रदेशः। २२।

अथान्ये ऽपि सर्वप्रदेशार्था विधयः प्रदर्श्यन्ते। आयतनादनभिक्रम्यैव होमं शक्नीयं मन्यते। तत्र तिष्ठन्नाश्रावयेत्। तथा ग्रहेज्यासु वायव्यं चमसेज्यासु चमसं चादायैवाश्रावयेत्. न तु प्राक्दादानात्। स्नुग्ग्रहणं दृष्टान्तार्थम्। तथा नागृहीते ग्रहे अनुन्नीतेषु वा चमसेषु स्तोत्रमुपाकुर्यात् ॥

आश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्येति। २३।

गतः ॥

वषट्कृते जुहोति। पुनर्वषट्कृते जुहुतः। २४।

प्रथमे वषट्कारे ऽध्वर्युर्वायवे जुहोति. द्वितीये द्वावपीन्द्रवायुभ्याम् ॥

यदि मन्येत यजमानः पूर्वो मातिक्रान्तो भ्रातृव्य इति। २५।

इति विंशी कण्डिका।

प्राग्घोमादङ्गुष्ठेनाङ्गुलिमवगृह्णीयाद्यो न इन्द्रवायू अभिदासतीति। यदि वापरो ऽङ्गुल्याङ्गुष्ठम्। १।

पूर्वाभिभावी सन्भ्रातृव्यो मामतिवर्तते स मामतिवृतदिति यदि मन्येत तदाङ्गुष्ठेन कांचिदङ्गुलिं निपीडयेद्यजमानः। यद्यात्मनाभिभूतः सन्पश्चादभिभावुको ऽतिवर्तेत इति तदाङ्गुल्याङ्गुष्ठम्। न चेदुभयथापि कामस्तदा लुप्यते ऽवग्रहणम्। पूर्वापरत्वं वयोऽप्येक्षयेत्येके ॥

हुते चादित्यमुपतिष्ठते भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहीति। २।

कृते यष्टे। गित्यमुपस्थानं चकारात् याजमानं च। होमसमुच्चये नाध्वर्यवमित्यपरम् ॥

अथाध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवनयति। अध्वर्युः प्रतिप्रस्थातुः। एतद्वा विपरीतम्। ३।

गतः ॥

देवेभ्यस्त्वेत्यादित्यपात्रेण प्रतिप्रस्थातादित्यस्थाल्यां संपातमवनयति। ४।

संपातं सर्वमवनयति ॥

ग्रहमध्वर्युरादाय क्षिप्रं होतारमभिद्रुत्य मयि वसुरिति ग्रहं होत्रे प्रयच्छति। ५।

ग्रहमादायेति स्वयंहरणार्थम् ॥

एतेनैव होता प्रतिगृह्य दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते। ६।

होतृकर्मवचनं वैचित्र्यार्थम् ॥

एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः। ७।

गतः ॥

आघारपुनर्वषट्कारौ न भवतः। ८।

पुनर्वषट्कारनिषेधादेव पुनर्होमो निवर्तिष्यत इति भावः ॥

यथादेवतं संप्रैषाः। ९।

यथा मित्रावरुणाभ्यामनुब्रूहीत्यादयः ॥

ग्रहणं प्रतिनिग्राह्याणामवग्रहणादित्योपस्थानावनयनप्रदानान्युत्तरोत्तरैर्मन्त्रैः । १० ।

ऋतमदसि श्रुतमदसीति द्वाभ्यां प्रतिनिग्राह्याणां ग्रहणम् । यो नो मित्रावरुणावभिदासति यो नो ऽश्विनावभिदासतीत्यवग्रहणम् । धूरसि विभूरसीत्यादित्योपस्थानम् । विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्य इत्यादित्यस्थाल्यां संपातावनयनम् । मयि वसुर्विदद्वसुर्मयि वसुः संयद्वसुरिति होत्रे ग्रहप्रदानम् ॥

विभूरसि श्रेष्ठो रश्मीनां व्यानपा व्यानं मे पाहीति तृतीय आदित्योपस्थानः । ११ ।

मन्त्र इति शेषः ॥

विष्णवुरुक्रमैष ते सोमस्तं रक्षस्वेत्यादित्यपात्रेण प्रतिप्रस्थातादित्यस्थालीमपिदधाति । १२ ।

आश्विनं संपातमवनीयापिदधाति ॥

आश्विनं होत्रे प्रदाय हविर्धानं गच्छन्संप्रेष्यत्युन्नीयमानेभ्यो ऽनुब्रूहीति । १३ ।

गतः ॥

होतृचमसमुख्यान्नव चमसानुन्नयति । १४ ।

उन्नेतेति शेषः, समाख्यानात्, उन्नेतः सर्वं राजानमुन्नयेति लिङ्गाच्च । सदस्यपञ्चे दशोन्नयति । अच्छावाकचमस एवात्र वर्ज्यः ॥

द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशाद-भिघारयति ।१५।

खरस्थानां चमसानामुपस्तरणादि त्रयं पदार्थानुसमयेन करोति. नवानामप्येकद्रव्यत्वात्. चतसृषूपस्तृणीत इति न्यायप्रदर्शनाच्च। तत्र समुन्नीयोत्तरवेद्यां सादयतीति बौधायनः ॥

सर्वचमसानामेष कल्पः ।१६।

सर्वेषां चमसानामयमेवोन्नयनकल्पः ॥

धाराग्रहणकाले द्विदेवत्यानां काम्याः कल्पाः।१७।

धाराग्रहणकाल एवैन्द्रवायवादीनां द्विदेवत्यानां काम्यकल्पाः प्रद-र्श्यन्ते ॥

यदि मन्येत यजमानः पूर्वो मातिक्रान्तो भ्रातृव्य इति प्रतिप्रस्थानेन पूर्वो गृहीत्वा पूर्वो हुत्वा पूर्वः सादयेत् ।१८।

यदि मन्येतेत्यादि व्याख्यातम्। येन प्रतिप्रस्थाता गृह्णाति तत्प्रति-प्रस्थानम्॥ तानि त्रीणि वायव्यानि पात्रसंसादनकाले खरे प्रयु-ज्यन्ते। तैर्द्विदेवत्यग्रहणकाले पूर्वःपूर्वो ऽध्वर्योर्द्रोणकलशात्प्रतिनि-ग्राह्यमन्त्रेणैव गृहीत्वा तूष्णीं सादयति। ततो होमकाले ऽपि ततः पूर्वःपूर्वो हुत्वा संपातानवनीय ततं सादयति ॥

यदि कामयेत समावद्वीर्यमेनं भ्रातृव्येण कुर्यामिति

प्रबाहुग्गृहीत्वा प्रबाहुक्शिष्ठ्यां होतव्यम्। प्रबाहुग्घुत्वा प्रबाहुक्सादयेयाताम्।१९।

समावद्वीर्याः तुल्यवीर्याः। द्विदेवत्यानां ग्रहणादिकालेषु तेषामपि ग्रहणादीनि सह करोति। प्रबाहुगिति को ऽर्थः. तमाह॥

सममित्यर्थः।२०।

गतः॥

यदि कामयेतावगतमपरुन्ध्युरपरुद्धो ऽवगच्छेदितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उद्वहामीत्यध्वर्युपात्रमुदूह्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति तस्मिन्प्रतिप्रस्थानं सादयेत्।२१।

यदि कामयेतेत्यादि ध्रुवे व्याख्यातम्। गृहीत्वा सादितेषु षट्स्वपि पात्रेषु तत्तदध्वर्युपात्रमुदूह्यान्यत्र निधाय तस्यतस्य स्थाने तत्तत्प्रतिप्रस्थानं सादयेत्॥

काम्याश्चेत्पृथक्पात्रैः प्रतिनिग्राह्या गृह्णीरन्।२२।

काम्यांश्चेत्कर्न्यांश्चिकीर्षति तदा पृथग्भूतैस्त्रिभिरूर्ध्वपात्रैः प्रतिनिग्राह्या गृह्णीरन्. न त्वादित्यपात्रेण। तेनैव तदापिदधात्यादित्यस्थालीम्॥

इत्येकविंशी कण्डिका।

इति षष्ठः पटलः॥

ततः शुक्रामन्थिभ्यां प्रचरतः। स्तुतो ऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्त्विति शुक्रमध्वर्युरादत्ते। स्तुतो ऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्त्विति मन्थिनं प्रतिप्रस्थाता। चमसांश्चमसाध्वर्यवः। १।

गतः॥

तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयतो ऽपनुत्तौ शण्डामर्कौ सहामुनेति। अपनुत्तः शण्ड इति वाध्वर्युर्द्वेष्यं मनसा ध्यायन्। अपनुत्तो मर्क इति प्रतिप्रस्थाता। २।

अदसः स्थाने द्वेष्यस्य नामनिर्देशः। तत्र शण्डामर्कौ सहामुनेत्येवोभौ वदतः। शण्डः सहामुना मर्कः सहामुनेति वा पृथगिति शेषः॥

तावपिगृह्य प्राञ्चौ निष्क्रामतः। ३।

तौ हस्ताभ्यामधश्चोपरि च गृहीत्वा प्राञ्चौ हविर्धानान्निष्क्रामतः॥

उर्वन्तरिक्षमन्विहीत्यभिप्रव्रजतः। ४।

निष्क्रामन्तावनेन मन्त्रेण गच्छत इत्यर्थः॥

इन्द्रेण मन्युना युजावबाधे पृतन्यता। घ्नता वृत्राण्यप्रतीति शुक्रं यजमानो ऽन्वारभत आ होमात्। ५।

निष्क्रामन्तमन्वारभ्य नाहुते मुञ्चति॥

अपरेणोत्तरवेदिं गृहावरत्नी वा संधत्तो ब्रह्म संधत्तं

तन्मे जिन्वतं क्षत्रं संधत्तं तन्मे जिन्वतमिषं संधत्तं तां मे जिन्वतमूर्जं संधत्तं तां मे जिन्वतं रयिं संधत्तं तां मे जिन्वतं पुष्टिं संधत्तं तां मे जिन्वतं प्रजां संधत्तं तां मे जिन्वतं पशून्संधत्तं तान्मे जिन्वतमिति । ६ ।

मन्त्रान्तेन संधत्तः संश्लेषयतः ॥

अनाधृष्टासीत्यङ्गुष्ठाभ्यामुत्तरवेदिमवगृह्य व्यपरिफन्ताविवोत्तरवेदिं परिक्रामतः । ७ ।

अवगृह्य अवपीड्य । व्यपरिफन्ताविव . *अपरिफतिर्हिंसाकर्मा . विलिखन्ताविवोत्तरवेदिं परिक्रामत इत्यर्थः ॥

सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेति दक्षिणेनाध्वर्युः प्रतिपद्यते । सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता । अग्रेणोत्तरवेदिं ग्रहावरत्नी वा संधत्तः संजग्मानौ दिव आ पृथिव्या आयुः संधत्तं तन्मे जिन्वतं प्राणं संधत्तं तं मे जिन्वतमपानं संधत्तं तं मे जिन्वतं व्यानं संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतं श्रोत्रं संधत्तं तन्मे

* Corrected; h परिफन्निर्हिं॰, g परिफन्, ik परिफन्मर्हिं॰, in h there is a lacuna from the beginning of this Kaṇḍikâ. Cf. व्यवरिफन्ता इव Kâṭh. 27. 8.

जिन्वतं मनः संधत्तं तन्मे जिन्वतं वाचं संधत्तं तां मे जिन्वतमिति। ८।

गतः ॥

अथैनावध्वर्युरभिमन्त्रयत आयु स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तं श्रोत्रं स्थः श्रोत्रं मे धत्तं श्रोत्रं यज्ञाय धत्तं श्रोत्रं यज्ञपतये धत्तम्। ९।

इति द्वाविंशी कण्डिका।

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेति। १।

एनाविति ग्रहयोरेवान्वादेशः. नारल्योः. तौ देवौ शुक्रामन्थिनाविति लिङ्गात्। तेनारत्निसंधाने ऽप्यभिमन्त्रणं ग्रहयोरेव भवति ॥

अप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तौ शण्डामर्कौ सहामुनेति। निरस्तः शण्ड इति वाध्वर्युर्द्वेष्यं मनसा ध्यायन्। निरस्तो मर्क इति प्रतिप्रस्थाता। २।

पांसुपध्वंसनपठितया व्याख्यातः। निरस्य तु शकलावप उपस्पृशतः॥

प्रोक्षितावाधत्तः। शुक्रस्य समिदसीत्यध्वर्युः। मन्थिनः समिदसीति प्रतिप्रस्थाता। ३।

गतः॥

आश्राव्य प्रत्याश्राविते संप्रेष्यति प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थिता-न्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवष-ट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति। ४।

प्रशास्तः प्रातःसवनस्यैवंभूतान्सोमानिन्द्राय प्रस्थितान्होतारं प्रेष्य. मध्यतःकारिनाम्नां होतृब्रह्मोद्गातृयजमानसदस्यानां चमसाध्वर्यवो वषट्कारानुवषट्कारयोर्जुहुत. प्रशास्त्रादीनां चमसाध्वर्यवः प्रथम एव वषट्कारे हुत्वा शुक्रस्याभ्युन्नीय। शुक्रो द्रोणकलशस्थः सोमः तस्मा-च्चमसेष्वानीय। निवर्तध्वमिति संप्रैषार्थः॥

संप्रैषवत्कुर्वन्ति। ५।

गतः॥

पुरस्तात्प्रत्यञ्चावध्वर्यू जुहुतः। पश्चात्प्राञ्चश्चमसैश्च-मसाध्वर्यवो जुह्वति। ६।

पुरस्तात्प्रत्यञ्चौ स्थितावध्वर्यू कलशयोराहितयोर्जुहुतः. शुक्रस्य समिदसि मन्थिनः समिदसीति लिङ्गात्॥

शुक्रामन्थिनोः प्रतिनिगद्य होमः।७।

शुक्रामन्थिनोर्याज्यावतोरपि मन्त्रवान्होम इत्यर्थः॥

स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेत्यध्वर्युर्जुहोति। तस्मै सूर्याय सुतमाजुहोमि स्वाहेति प्रतिप्रस्थाता।८।

स प्रथम इत्यादि समानमुभयोः। सूर्यायेत्येतावान्भेदः। वषट्कारोऽस्तीति कृत्वा न कुर्युरपि स्वाहाकारमिति शङ्कानिवृत्तये स्वाहाकारपाठः॥

सानुवषट्कारावननुवषट्कारौ वा।९।

अनुवषट्कारे द्वावपि हूयेते। यदापि न हूयेते तदापि न हीयेते। अनुवषट्कारो मध्यतःकारिचमसार्थः॥

सर्वहुतौ।१०।

निःशेषहुतौ भवतः। तदा तु लुप्यते मन्थिनः संस्रावः॥

अपि वा सूदवच्छुक्रपात्रमायतने सादयित्वोत्तराधात्प्रतिप्रस्थाता बहिःपरिध्यङ्गारं निर्वर्त्य तस्मिन्मन्थिनः संस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथा इति।११।

अपि वा सशेषे शुक्रपात्रेऽध्वर्युणा सादिते ततो मन्थिनः संस्रावं

रुद्राय हुताय उपस्पृशति. एष ते रुद्र भाग इति मन्त्रवर्णात्. न तत्र रुद्रः पशूनभिमन्यत इति ब्राह्मणाच्च ॥

**आर्तपात्रमेतद्यन्मन्थिपात्रम्। यमृत्विजां द्विष्यात्तस्मै हरेत्। आर्छतीर्हैवेति विज्ञायते । १२ ।**

आर्तिकरमेतत्पात्रम्। अतो न तान्नूनपृत्विर्जा सकाशं नयेत्. आयतन एव सादयेदिति भावः ॥

**ततः संप्रेष्यति प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य। प्रोद्गातृणामित्येके समामनन्ति। प्र सदस्यस्य। प्रयन्तु सदस्यानामिति वा । १३।**

प्रैतु गच्छतु सदो भक्षार्थम् । प्रोद्गातृणामिति श्रुतेरभिप्रायेण स्तोत्रसंयोगादपसुब्रह्मण्यानां त्रयाणां साधारणश्चमसः ससुब्रह्मण्यानां वा. सर्वेषां वेदसंयोगात्। यत्रास्ति सदस्यस्तत्र प्र सदस्यस्येति प्रैषः। तेन च विकल्पते प्रयन्तु सदस्यानामिति। तस्य च तावानेवार्थो यावान्पूर्वस्य. सदस्यतच्चमसयोर्बहुत्वासंभवात्। केचित्तत एव वचनात्प्रतिवेदं कर्मणामुपद्रष्टृंस्त्रीँश्च सदस्यांश्चमसिनोऽनुमिमते । तदयुक्तं. सदस्यं सप्तदशमित्येकस्यैव सदस्यस्याम्नातत्वात् ॥

**अथ होत्राः संयाजयन्ति। १४।**

होत्रा नाम वक्ष्यमाणाः सवनमुखीयाश्चमसेज्याः ॥

**तस्मै चमसाध्वर्यवः स्वंस्वं चमसं द्रोणकलशादभ्युन्नीय हरन्ति । १५ ।**

ये पुरस्तादुन्नीतास्तमसमास्तान्पुनरभ्युन्नीयैकैकमध्वर्यवे हरन्ति ॥

मैत्रावरुणचमसमादायाहवनीयं गत्वाश्राव्य प्रत्याश्राविते संप्रेष्यति होतर्यज प्रशास्तरिति वा। १६।

होतर्यजेत्यपि प्रशास्तुरेव संप्रैषः, तच्चमसेज्यार्थत्वात्, यदप्रतिरथं द्वितीयो होतेत्यादौ तस्यापि होतृत्वव्यपदेशाच्च ॥

वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम्। १७।

हुत्वा वषट्कर्त्रे स्वयमेव भक्षं हरति। सत्याषाढस्त्वाह, हुत्वा चमसाध्वर्यवे प्रयच्छति स सदो भक्षं हरतीति ॥

एवमुत्तरैः प्रचरति। एतावन्नाना। १८।

इति त्रयोविंशी कण्डिका।

ब्रह्मन्यजेति द्वितीये संप्रेष्यति। पोतर्यजेति तृतीये। नेष्टर्यजेति चतुर्थे। अग्नीद्यजेति पञ्चमे। १।

गतः ॥

सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम्। २।

सर्वत्र सर्वासु सोमाहुतिषु ॥

आग्नीध्रचमसमादाय सद एत्यायाडग्नीदित्याचष्टे। ३।

सद एत्याध्वर्युः किमिष्टमग्नीधेति होत्रा पृष्टः प्रतिब्रूयादेनं अयाडग्नीदिति ॥

स भद्रमकर्यो नः सोमं पाययिष्यतीतीतरे प्रत्याहुः । ४ ।

इतरे ब्रह्मयजमानाद्यास्तमभिनस्तं प्रत्याहुः ॥

यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य संपिष्य दधन्युन्मृज्य चमसेषु हूयमानेष्वन्तःपरिध्यङ्गारं निर्वर्त्यैतस्य चमसस्य दर्भतरुणेनोपहत्याहं त्वदसि मदसि त्वमित्यङ्गारे हुत्वा तमस्मै भक्षं प्रयच्छेत् । ५ ।

यदि बिभक्षयिषेदिति वचनात् पाक्षिकं भक्षणं राजन्यवैश्ययोः । स चायं फलचमसो नैमित्तिकः. इज्याया एव विकारो न भक्षस्येति न्यायविदः । प्रत्यक्षाम्नाताश्चास्य सोमधर्मा बाह्वृच्ये पृथगुक्तानि च पात्राणि यथा कलशो ग्रावाणश्चर्म पवित्रमित्यादीनि । तस्मात्सोमधर्मांल्लभते । तेन क्रयकाले क्रयधर्मेण न्यग्रोधस्तिभिनीः फलस्तबकान् आहृत्याभिषवधर्मेण संपिष्य दधन्यालोड्य सोमवत्फलरसं तदीयेषु कलशेषु संभृत्योन्नयनकाले ततो यजमानचमसे आनीय होमकाले चमसमाध्वर्युरन्तःपरिध्यङ्गारं निर्वर्त्य चमसात्तरुणेन दर्भेण गृहीत्वाहं त्वदसीति हुत्वा प्रैतु होतुरित्युक्ते यजमानाय प्रयच्छेत्. स च भक्षणकाले भक्षयति । तत्र सोमलिङ्गानां मन्त्राणामूहः. प्रकृतावपि नित्यविकारत्वान्नैमित्तिकानाम् । अनूहो वा. बाह्वृच्ये यदत्र

भ्रिष्टमित्यादिभिः सोमलिङ्गैर्मन्त्रैर्भक्षणादिविधानात्. परोक्ष इव वा एष सोमो यन्न्यग्रोध इति स्तवनाच्च॥

पात्रे समवेतानां वषट्कर्ता पूर्वो भक्षयति। ६।

यत्रैकस्मिन्पात्रे वषट्कारादिनिमित्तसमवायाद्बहवो भक्षिणः समवेता-स्तत्र वषट्कर्ता प्रथमो भक्षयति. नाध्वर्य्वादयः। कस्मात्। वषट्कर्ता प्रथमः सर्वभक्षान्भक्षयतीति बह्वृचश्रुतेः. होतुश्चित्पूर्वे हविरद्यमा-शतेति लिङ्गाच्च। निमित्तक्रमादपि वषट्कर्तुरेव प्राथम्यं. होमाद्व-षट्कारस्य पूर्वभावित्वात्। न चाभिषवस्य पूर्वतरभावितया अध्वर्यु-प्राथम्यं शङ्कनीयं. तन्मात्रस्यानिमित्तत्वात्। सर्वान्ते तु समाख्याभक्षः. तस्य समाख्यानुमेयत्वेन भक्षान्तरेभ्यो दुर्बलत्वात्॥

भक्षेहीति भक्षमाह्रियमाणं प्रतीक्ष्याश्विनोस्त्वा बाहुभ्यां सघ्यासमिति प्रतिगृह्य नृचक्षसं त्वा देव सोमे-त्यवेक्ष्य मन्द्राभिभूतिरिति प्रातःसवने सर्वानैन्द्रान्भक्ष-यति। नराशंसपीतस्येति नाराशंसान्। रुद्रवद्गणस्येति माध्यंदिने सवने सर्वानैन्द्रान्भक्षयति। नराशंसपीत-स्येति नाराशंसान्। आदित्यवद्गणस्येति तृतीयसवने सर्वानैन्द्रान्भक्षयति। नराशंसपीतस्येति नाराशंसान् ।७।

स्वयमाहरणे ऽपि भक्षस्य प्रतीक्षणम्। ततः प्रतिग्रहस्य न लुप्यते. भक्षेहीति यथालिङ्गमिति सोमग्रहे वचनात्। भारद्वाजस्य भक्षेही-त्यादि प्रकृत्याह. यत्र क्व च भक्षयेदेवमेवैतान्मन्त्राञ्जपेदिति। मन्द्राभि-

भूतिरित्यनुद्रुत्य वसुमद्गणस्येत्यादिभिः भक्षयामीत्यन्तैस्त्रिभिरेतैर्मन्त्रैः त्रिषु सवनेषु ऐन्द्रान्भक्षयति. नानैन्द्रान्. इन्द्रपीतस्येति लिङ्गविरोधात्। तत्र त्रिष्वपि च मन्त्रेषु नराशंसपीतस्येति चमसोहृतं भवति। नाराशंसांस्तु मन्द्राभिभूतिरित्यनुद्रुत्य तैरेव मन्त्रैः नराशंसपीतस्य सोम देव ते मतिविद इत्येवं संनतप्रतीकैः इन्द्रपीतस्येत्येतस्य स्थाने पितृपीतस्येति च संनतैर्भक्षयति। शेषं पूर्ववत्। तथा पेठतुरेव मन्त्राम्बौधायनभारद्वाजौ। न च नाराशंसमन्त्रेषु पितृपीतस्येति लिङ्गविरोधः. बह्वृचानां तेषु पितृभिर्भक्षितस्येति पठित्वा तेषां पितृलिङ्गत्वोपपादनात्. यथा ऊमा वै पितरः प्रातःसवन ऊर्वा माध्यंदिने काव्यास्तृतीयसवने. तदेतत्पितॄनेवामृतान्सवनभाजः करोतीति॥

## यत्प्राग्वसुमद्गणात्तत्सर्वत्रानुषजति।८।

मन्द्राभिभूतिरित्यादि* आयुषे वर्चस इत्यन्तं षट्स्वपि मन्त्रेषु समानमित्यर्थः। किमिदानीमनैन्द्राणां मन्त्रत्वमेव. नेत्याह॥

## अप्यन्यदेवतानिन्द्रपीतस्येति।९।

अयमभिप्रायः। न इन्द्रपीतस्येत्ययं तत्पुरुषः. मन्त्रप्रकाशितस्येन्द्रेण पीतत्वात्. कृताकृतसमुदायाभिधाने लक्षणाप्रसङ्गाच्च। तस्मात् इन्द्रेण पीतः सोमो यस्मिन्सवने तस्य सोम इति बहुव्रीहिरसौ सवनविशेषणम्। अतो ऽनैन्द्रानपि इन्द्रपीतस्येत्येव भक्षयतीति॥ तदुक्तं न्यायविद्भिः. सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपादत्वात्सवनाधिकारो हीति। तथा सति तु पूर्वसूत्र एव ऐन्द्रानिति परिहाप्य सर्वसोमानिति वक्तव्ये विविच्य वचनमुत्तरविकल्पार्थं वेदितव्यम्॥

---

* आदि is missing in the MSS.

**यथादेवतं वा । १० ।**

विकृतेन भक्षयति । तत्र चायमाशयः । बहुव्रीहेस्तावत्तत्पुरुषो बलीयान्. उत्तरपदमात्रस्य तत्र स्वार्थपरत्वसिद्धेः. बहुव्रीहावुभयो-रन्यपरत्वाच्च । तेन सोढ्वापि लक्षणां तत्पुरुषो ग्राह्यः तत्र चानैन्द्रेषु यथाम्नातस्यासामर्थ्याद्यथादेवतमूह इति ॥ ननु सोमेन यजेतेत्यु-त्पन्नस्य यागस्यैन्द्रवायवादिष्वभ्यासात् तस्य चैकत्वात् दानानां तु भिन्नत्वे ऽप्येकस्मिन्प्रकरणे चोद्यमानानीति न्यायेन समानविधान-त्वाच्चासति प्रकृतिविकारभावे कथमूहाभिधानम् । सत्यम् । न प्रकृतिविकारभावो न च प्रकृतावप्यूहः । तथाप्यत्रोहवचनात्. अग्नि-पीतस्य इन्द्रविष्णुभ्यां पीतस्येति तत्रतत्र नमनानुवादाच्च । तन्मूल-तया शाखान्तरे यथादेवतपाठस्तत्रैव लिङ्गदर्शनादुन्नेयत इति किं तदन्वेषणप्रयासेन । दर्शितं चैतज्जैमिनिनापि. यथादेवतं वा प्रकृतित्वं हि दर्शयतीति ॥

**वाग्जुषाणा सोमस्य तृप्यत्विति सर्वसोमानां भक्षण-मेके समामनन्ति । ११ ।**

गतः ॥

**वाग्देवी सोमस्य तृप्यत्विति वा । १२ ।**

सर्वसोमानां भक्षणमन्त्र इति शेषः ॥

**हिन्व मे गात्रा हरिव इति भक्षयित्वा नाभिदेशा-नभिमृशन्ते । १३ ।**

न सोमं भक्षयित्वाचामेयुः. अनुच्छिष्टत्वात् । तथानाचमनमुक्तात्

न सोमेनोच्छिष्टा भवन्तीत्युदाहरन्तीति। पात्रेण चास्य स्पृष्टेनैव भक्षणं. तस्योच्छिष्टत्वमङ्गीकृत्य भक्षितानां मार्जालीये प्रक्षालनमिति प्रक्षालनेन शुद्धिवचनात्॥ मानवे ऽपि यतिपात्रमधिकृत्योक्तं. तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वर इति। तथोद्गातृसदस्ययोरेकं चमसमुक्तवाह द्राह्यायणः. बीभत्सेयातां चेन्नाना चमसौ स्यातामिति। तथा होतृचमसेन सोमं भक्षयत इत्येव कात्यायनः। तस्मान्नोच्छिष्टत्वे ऽपि दोष इति। अन्यत्तु मतम्। नैतानि पात्रोच्छिष्टत्वे ऽपि लिङ्गानि भवितुमर्हन्ति। कुतः। क्षालनवचनं तावदाज्यलेपान्प्रक्षाल्येत्यादिवल्लेपापनयनार्थतयाप्युपपन्नम्। चमसदृष्टान्तो ऽपि तदभिप्राय एव युक्तः. भिक्षापात्राधिकारात्। बीभत्सावचनमपि समानग्रहत्वादुपपन्नम्। बीभत्सन्त एव हि पीतशिष्टात्कमण्डलूदकात्। आचमनं चान्यस्य चमसेनेति चाविरुद्धमेव. तेनैव कमण्डलुवदनास्यस्पृष्टेनापि भक्षणोपपत्तेः। तथा कमण्डलुसाम्यमेव चमसस्य ख्यापितं बौधायनेन

यथा हि सोमसंयोगाच्चमसो मेध्य इष्यते।

अपां तथैव संयोगान्नित्यो मेध्यः कमण्डलुः।

ततः शौचं ततः पानं तत आचमनं स्मृतमिति।

तस्माद्दाजिनवत्पात्राद्गृहीत्वा पात्रेण वानास्यस्पृष्टेन युक्तं भक्षणम्। इत्थमेवं सोमस्य पीतो भवति पात्रं चानुच्छिष्टमित्युभयमपि शक्यं संपद्यत इति॥

**नानुपहूतेन सोमः पातवै। सोमपीथेन ह व्यृध्यते भवति।१४।**

परस्परानुज्ञापनं उपह्वः। तमकृत्वा न सोमः पातव्यः। तथा कृतेन सोमपीथेन वृद्धः स्यात्। तस्मात्

असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते। उपहूत इति प्रतिवचनः। १५।

प्रतिवचनो मन्त्र इति शेषः। तत्र मैत्रावरुणब्राह्मणाच्छंसिनोः प्रशास्तरुपह्वयस्व ब्रह्मन्नुपह्वयस्वेत्यामन्त्रणं. प्रशास्तर्येज ब्रह्मन्यजेति लिङ्गात्॥

ये समाने प्राये भक्षयन्ति तेषूपह्वमिच्छते। १६।

प्रकर्षेणैतीति प्रायः कालः। समानकाले भक्षयतामुपह्वः. यथा समाख्याभक्षणे ऽतिग्राह्यभक्षणे च॥

ये वैकपात्रम्। १७।

पात्रशब्देन तत्स्थः सोमो लक्ष्यते. एकं पात्रं यस्येति वा बहुव्रीहिः। एकपात्रस्थं सोममित्यर्थः। द्विदेवत्याद्युदाहरणम्॥

इति चतुर्विंशी कण्डिका।

पुरस्तादैन्द्रवायवं भक्षयति प्राणेषूपनिग्राहम्। पुरस्तान्मैत्रावरुणं चक्षुषोरुपनिग्राहम्। सर्वतः परिहारमाश्विनं श्रोत्रयोरुपनिग्राहम्। १।

सर्वतः परिहारमित्याश्विने विशेषविधित्सया पूर्वयोर्ग्रहयोः। पुरस्तादित्यमूदितं ब्राह्मणे. तस्यैवानुकरोति सूत्रकारः पुरस्तादैन्द्र-

वायवमित्यादिना ॥ प्राणेषूपनिग्राह्यं नासिकयोः समीपं नीचै-र्गृहीत्वा । एवमुक्ता निर्दिशाचैकैकस्य निग्रहणम् । तचोर्ध्वमुपहत्वा-दित्युक्तमाश्वलायनेन. यथा अध्वर्य उपह्वयस्वेत्युक्तावघ्राय नासि-काभ्यामिति ॥ सर्वतः परिहारं सर्वशिरः परि हृत्वा ॥

अव्युत्सृजन्तौ पात्रं द्विरैन्द्रवायवं भक्षयतो भक्ष-यन्ति भक्षयति वा । सकृत्सकृदितरौ । २ ।

पात्रं गृहीतममुञ्चन्तौ द्विरैन्द्रवायवं भक्षयतो होताध्वर्युश्च. द्विर्व-षट्कारात्. द्विर्होमाच्च । सकृत्सकृदितरौ मैत्रावरुणाश्विनौ. सकृद्वष-ट्कारात्. सकृद्धोमाच्चेति भावः । ननु भक्षयतो भक्षयन्ति भक्षयतीति को ऽर्थः । तमाह ॥

तद्येषां भक्षयत इत्यध्वर्युर्होता चेत्यर्थः । भक्षयन्ती-त्यध्वर्यू होता चेत्यर्थः । भक्षयतीति सस इत्यर्थः । ३ ।

द्विरैन्द्रवायवं भक्षयत इत्येकेषां श्रुतिः. भक्षयन्तीत्यन्येषाम् । द्विर्भक्षयतीत्यपरेषाम् । तत्र द्विवचनश्रुतौ होताध्वर्युश्चेत्यर्थः । प्रति-प्रस्थाता तु सकृदेव भक्षयति. सकृद्धोमादिति भावः । बहुवचन-श्रुत्या तु प्रतिप्रस्थातुरप्राप्तमेव द्विर्भक्षणं विधीयते । एकवचन-श्रुतेरपि बहुवचनश्रुतेर्नार्थान्तरम् । भक्षयतीति को ऽर्थः । यो यत्र भक्षयिता सस द्विर्भक्षयतीत्यर्थः ॥

भक्षयित्वा होतृचमसे संपातानवनयतो भक्षितान-भक्षिते । ४ ।

प्रतिभक्षणपर्याये ऽवनयनार्थमुक्तं भक्षितामिति। तेन द्विरैन्द्रवायव-स्यावनयन्ति। चमसस्य भक्षसंस्कारत्वख्यापनार्थमुक्तं अभक्षित इति। मा भूद्भक्षशेषप्रतिपत्तिमात्रमित्यनाम्येति॥

अथ पात्रं व्युत्सृजतः। ५।

तस्य तस्य संपाते ऽवनीते तत्तत्पात्रमुत्सृजतः॥

पुरोडाशशकलमैन्द्रवायवस्य पात्रे ऽवदधाति। पयस्यां मैत्रावरुणस्य। धाना आश्विनस्य। ६।

पात्रेष्वप्रक्षालितेषु हविःशेषेभ्यो ऽवदधाति॥

तानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयति। आ तृतीयसवनात्परिशेरे यज्ञस्य संतत्या इति विज्ञायते। ७।

तान्येवमरिक्तान्येव परिशेरते॥

अथैडाया निरवदानमेके समामनन्ति। ८।

निरवदानं ग्रहणम्॥

अथ होतैडामुपह्वयते। उपोद्यच्छन्ते चमसांश्चमसिनः। होतृचमसमिडायामास्पृष्टम्। ९।

गतः॥

उपहूतां प्राश्नन्ति ये प्रकृतौ। १०।

ये प्रकृताविति वचनात् प्रशास्तृप्रतिप्रस्थात्रोः प्राकृतकर्मान्वितयोरपि प्राशननिवृत्तिः॥

पुरोडाशशकलमच्छावाकाय निदधाति। ११।

इडायाः प्रकृतत्वात् ऐडः शकलः। तथा इडाशकलमित्येव सत्याषाढः॥

आग्नीध्रे हविःशेषान्भक्षयन्ति। १२।

यजमानो ऽपि भक्षयति. सोमान्हविःशेषानिति सुत्ये ऽहनि भक्षयतीति वचनात्. तस्मादनुसवनं पुरोडाशानां प्राश्नीयादिति श्रुतेश्च॥

अत्र सवनीयानां शाखाप्रहरणं वाजिनचर्यान्तर्वेदि यजमानस्य वेदाभिमर्शनं पिष्टलेपफलीकरणहोमौ पत्न्या वेदप्रासनं प्रणीतासु मार्जनमुपवेषोदसनं कपालविमोचनमिति क्रियन्ते। १३।

अथैतानि पुरोडाशानां वैशेषिकानि कर्माणि पशुतन्त्रस्यैव पुरोडाशेषु प्रसङ्गात् पशावविद्यमानत्वाच्च पुरोडाशैरेवाकृष्टान्यस्मिन्काले कर्तव्यतयानुक्रम्यन्ते। यद्यपि तत्र शाखोपवेषयोरुभयत्रसत्त्वात् पश्वर्थाभ्यां सहप्रवृत्तिसंभवः तथापि वैशेषिकान्तरसाहचर्यादिह वचनम्। वेदस्य तु पाशुकस्य वाचनिके एवात्राभिमर्शनप्रासने वेदितव्ये। तत्रशाखायास्तूष्णीं प्रहरणं. प्रस्तरार्थत्वात्प्रहरणधर्माणां. तत्कालप्रतिपाद्यमात्रत्वाच्छाखायाः। ततो वाजिनेन चरित्वा प्रणीतासु मार्जयते यदि विद्येरन्। भर्जनकपालयोः पितृयज्ञवदूहेन विमोकः॥ नन्वाग्निमारुतादूर्ध्वं सवनीयस्य पशोरनूयाजानामुत्कर्षश्चोदितः तैश्चोत्कृष्यमाणैस्तदुत्तरमप्यङ्गजातमुत्कृष्टव्यं. प्रकृतौ बहुङ्गमाणामेवाङ्गभावात्. यदप्रहृत्य परिधीञ्जुहुयादित्यर्थवादाच्च।

तच पशुतन्त्रोपजीवित्वात्पुरोडाशानामसत्सु पृथगनूयाजेषु कथं तदुत्तरकालभावीनि कर्माण्यत्र क्रियेरन्। अत आह॥

नह्येतेषां प्रासङ्गिकं वैशेषिकमुत्कर्षति । १४ ।

एतेषां पुरोडाशानां यत्प्रासङ्गिकं प्रसङ्गोपजीव्यं पशुप्रयुक्तमनूयाजादि तदुत्क्रम्यमाणम्। नैतेषां वैशेषिकं वाजिनचर्याद्युत्कर्षति। कुतः। पाशुकैरनूयाजादिभिः पुरोडाशविशेषधर्माणां वाजिनचर्यादीनामसंबन्धात्. असति च संबन्धे तैः क्रमकृप्त्ययोगाच। तदुक्तं मीमांसकैः. प्रासङ्गिकं च नोत्कर्षेत् असंयोगादिति। तस्माद्युक्तमनुत्कर्षवचनम्॥

उत्कर्षेदित्यपरम् । १५ ।

अस्तु वा प्रागुक्तेनैव न्यायेनोत्कर्ष इति भावः। तत्राभिप्रायं चोत्कर्षवचनम्। तथा हि पशोः पुरोडाशानां च दर्शपूर्णमासाभ्यामेव तावदवगच्छन्ति धर्माः. न तु पश्वपेक्षा पुरोडाशानाम्। तत्र तु ये द्वयसाधारणा धर्मास्ते विभुत्वात्तन्त्रेणैव क्रियन्ते. वैशेषिकास्तु पृथक्त्वेन। तथा च सति तत्त्वभावित्वादनूयाजानां पशावुत्कर्षवचनाच्च तेषामुत्कर्षेण भवितव्यम्। उत्तरेषामपि कर्मणामुत्कर्ष एवावतिष्ठते. तदुत्तरकालमेषां प्रकृतिसिद्धमङ्गत्वं मा बाधीति। तस्माद्युक्तमुत्कर्षवचनमिति। अथ भक्षनिमित्तान्याह॥

वषट्कारेण होता भक्षं लभते । १६ ।

होतृग्रहणं प्रदर्शनार्थम्। योयो वषट्कर्ता सस तेन वषट्कारेण भक्षं लभते. वषट्कर्तुः प्रथमभक्ष इति श्रुतेरेवेति भावः। नानु-

वषट्कारो भक्षणनिमित्तं. सौविष्टकृतवच्छेषप्रतिपत्त्यर्थत्वात्. सर्वांस्त्व-समान्सकृद्धोता भक्षयति. द्विः स्वं चमसं. होत्रकाः स्वंस्वं चमसं द्विरिति लिङ्गाच्च। अन्यथा हि द्विर्मध्यतःकारिचमसान्. त्रिः स्वं चमसं सकृदितरान्. होत्रकाः स्वंस्वं चमसं त्रिरित्यवक्ष्यत्। तथा तद्धोमो ऽप्यनिमित्तं. तानध्वर्युः सकृद्धुतानिति लिङ्गात्। अन्यथा हि द्विरित्यवक्ष्यत्। तस्मात्सिद्धं नानुवषट्कारस्तद्धोमो वा भक्षणनिमित्तमिति। आश्वलायनस्त्वाह. प्रतिवषट्कारं भक्षयत्यूष्णी-मुत्तरमिति ॥

होमाभिषवाभ्यामध्वर्युः। नान्यतरेण। १७।

अध्वर्युग्रहणमपि प्रदर्शनार्थं प्रतिप्रस्थात्रादीनाम्। होमाभिषवाभ्यां समुच्चिताभ्यां भक्षणं लभन्ते. नान्यतरेण। अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति. उभयसमानकर्तृकत्वेन भक्षणादिति भावः। तेन मध्यतःकारिचमसेष्वतिग्राह्यचमसेषु चाध्वर्योः सत्यप्यभिषवे होमाभावाद्भक्षनिवृत्तिः। अदाभ्यग्रहादौ तु सत्यपि होमे ऽभिषवाभावात् तथा चमसेषु चमसाध्वर्यूणामित्यादि द्रष्ट-व्यम् ॥

समाख्यानेनापि भक्षं लभन्ते। १८।

समाख्यापि भक्षणनिमित्तं. यथा ब्रह्मचमसो यजमानचमस इति। एतदेवास्य ब्रह्मचमसत्वं यच्चस्यते ऽस्मिन्सोमो ब्रह्मणेति. संबन्धान्त-रानवगमात्. यथोक्तमाश्वलायनेन. का च तच्चमसता स्यान्न चान्यः संबन्ध इति। तेन ब्रह्मादीनां स्वेषु चमसेषु समाख्यानादेव भक्ष-

क्षाभः। तत्र च होत्रकाणां निमित्तान्तरसंनिपाते भक्षसमुच्चयः। यस्मादेवं निमित्तकृतिस्तस्मादयमेव चमसेषु भक्षविवेक इत्याह॥

**सर्वांश्चमसान्सकृद्धोता भक्षयति। १९।**

यतो ऽस्य वषट्कारे कृता भवन्ति॥

**द्विः स्वं चमसम्। २०।**

वषट्कारात् समाख्यानाच्च॥

**होत्रकाः स्वंस्वं चमसं द्विर्भक्षयन्ति। २१।**

होत्रकाः प्रशास्त्रादयः। ये प्रस्थितयाज्याभिरयाक्षुस्ते ऽपि स्वंस्वं चमसं द्विर्भक्षयन्ति ताभ्यामेव निमित्ताभ्याम्॥

**तानध्वर्युः सकृद्भक्षितान्यथापूर्वं प्रतिभक्षयति। २२।**

तान्होत्रकचमसान्वषट्कारनिमित्तभक्षणानन्तरं वषट्कारक्रमेण प्रतिभक्षयति॥

**अन्तत इतरे। २३।**

इतरे होतृहोत्रकेभ्यश्चान्ये चमसिनो ऽन्ततः समाख्यानिमित्ते भक्षणे होत्रकैः सह स्वांश्चमसान्भक्षयन्ति॥ तत्र होतुर्भावद्वषट्कारनिमित्ते स्वचमसे ऽध्वर्यावुपहवः. होतृचमसं भक्षयदध्वर्य उपह्वयस्वेत्युक्तेत्याश्वलायनवचनात्। चमसान्तरभक्षणे तु तत्तच्चमसिनाम्। तथा होत्रकाणामपि वषट्कारभक्षणे ऽध्वर्यावुपहवः. तत्र चाध्वर्योः। समाख्याभक्षणे तु चमसिषूपहवः सर्वेषां प्रेतु होतुरित्यादिप्रैषक्रमेण

वषट्कारक्रमेण च। यदा होत्रादीन्क्रमादुपह्लय तन्त्रेणोपहवो होत्र-केषु. यथोक्तमाश्वलायनेन. मुख्यान्वा पृथक्. होत्रका उपह्वयध्व-मितीतरानिति॥

भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति। २४।

चमसानिति शेषः। सोमेन वर्धनं आप्यायनं. तेनैनमाप्यायतीति लिङ्गात्। मन्त्रेणाभिमर्शनमित्यन्ये। तथाभिमृशेरन्नित्याश्वलायनः। कात्यायनस्त्वाह. आप्यायस्व समेतु त इति द्वाभ्यां चमसानालभन्ते. सोमं वाभिषुतीति। बौधायनस्तु वसतीवरीः प्रकृत्याह. ताभि-राप्याययेत्ताभिरभिषुणुयादिति॥

ते नाराशंसाः। २५।

त एवमाप्यायिताश्चमसा नराशंसदेवतात्वान्नाराशंसा इत्याख्यायन्ते॥

द्विनाराशंसे पूर्वे सवने भवतः। एकनाराशंसं तृतीयसवनम्। २६।

वक्ष्यमाणैरेव विधिभिः सिद्धे सुग्रहणार्थं वचनम्॥

भक्षिताप्यायितान्सादयन्ति दक्षिणस्य हविर्धान-स्याधस्तादवालम्बे। २७।

अवालम्बः अनसः पश्चिमो भागः। तत्र सादयन्ति चमसाध्वर्यवः॥

इति पञ्चविंशी कण्डिका।

इति सप्तमः पटलः॥

उपविशत्यच्छावाको बहिः सदसो ऽग्रेण स्वं धिष्णियम् । १ ।

उपविशन्तमेनं पूर्ववन्नेष्टानीता पत्नी पत्नेजनीरनूपसादयति । तदवसरस्मरणार्थमिदं वचनं उत्तरविधानार्थं च ॥

तस्मै पुरोडाशशकलमादधदाहाच्छावाक वदस्व यत्ते वाद्यमिति । २ ।

आदधत् प्रयच्छन्* ॥

यदास्य विजानात्युपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमित्यथैनं होता आवेदयत्यच्छावाको वा अयमुपहवमिच्छते तं होतरुपह्वयस्वेति । ३ ।

यदास्य विजानाति यदास्माच्छृणोति ॥

उत नो गाव उपहूता उपहूतेति† होतुरभिज्ञायोन्नीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्यो उन्नयस्वोभयतः शुक्रं कुरुष्वेति । ४ ।

संप्रेष्यतीत्यध्याहारः सामर्थ्यात् । चमसाध्वर्यो उन्नयस्वेति वचनात् स एवाच्छावाकस्योन्नयति, नोन्नेता । उभयतः शुक्रं कुरुष्वेति द्रोणकलशादुपस्तरणाभिघारणे कुर्वित्यर्थः ॥

* Corrected; the MSS. read प्रयच्छत.

† Thus (or उतोपहूतेति) the MSS.; Âśval. Śr. 5. 7. 5. उपहूता इति.

तमादायाहवनीयं गत्वाश्राव्य प्रत्याश्राविते संप्रेष्य-त्यच्छावाक यजेति । ५ ।

तं उन्नीतं चमसम् ॥

वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् । ६ ।

गतः ॥

तेन न संभक्षयति । नास्मिन्नुपहवमिच्छते । यद्य-स्मिन्नुपहवमिच्छेत भक्षयेत्येनं ब्रूयात् । ७ ।

वचनाद्भक्षनिवृत्तिरध्वर्योः । न चास्मिन्नुपहवमिच्छेदच्छावाकः । स यदीच्छेत् तमसौ भक्षयेति ब्रूयात् . नोपहूत इति ॥

भक्षिताप्यायितमन्तरा नेष्टुराग्नीध्रस्य च चमसौ सादयित्वर्तुग्रहैः प्रचरतः । ८ ।

ऋतुग्रहसमाख्यानात् ग्रहणमन्त्रप्रकाशितत्वाच मध्वादयो ऽप्येषां देवता मरुदादयश्च याज्याप्रकाशिताः ॥

द्रोणकलशाद्गृह्यन्ते । न साद्यन्ते । ९ ।

द्रोणकलशवचनमविस्मरणार्थम् । तन्मार्गस्थ न विस्मर्तव्यः सर्वत्र ॥

पूर्वेषां शेषेषूत्तरानभिगृह्णीतः । १० ।

अत एव सशेषा हूयन्ते ॥

पूर्वो ऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातोपयाम-गृहीतो ऽसि मधुश्चेत्येतैः प्रतिमन्त्रम् । ११ ।

मधुश्चेत्यध्वर्युः माधवश्चेति प्रतिप्रस्थाता । एवमुत्तरैरपि प्रतिमन्त्रम् ॥

मधवे त्वा माधवाय त्वेत्येके समामनन्ति । १२ ।

गतः ॥

पुरस्तादुपयामाः सर्वे । १३ ।

सर्वे मधुश्चेत्यादयो मधव इत्यादयश्च ॥

नान्योऽन्यमनुप्रपद्येत । प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते । प्रसिद्धं प्रतिप्रस्थातोत्तरेण । १४ ।

नान्योऽन्यस्य पृष्ठतो गच्छेत् । व्यवस्थितमेवाध्वर्युर्दक्षिणत एति । उत्तरतः प्रतिप्रस्थाता । न चोभाभ्यां सह गन्तव्यमित्याह ॥

द्वार्येव व्यतीतः । १५ ।

द्वार्येव व्यतिगच्छतः मिथः संगतौ भवतः । अन्यत्र त्वेकैकावेव चरत इत्यर्थः ॥

प्रविशन्तमेवाध्वर्युं प्रतिप्रस्थाता ग्रहेण परिप्रगृह्णाति । निष्क्रामन्तं पात्रेण । १६ ।

हविर्धानाद्धोमायोपनिष्क्रामन्प्रतिप्रस्थाता द्वारि स्थितो ग्रहणाय हविर्धानं प्रविशन्तमध्वर्युं ग्रहेण परिप्रगृह्णाति ग्रहमुभयोर्मध्यतः कृत्वावतिष्ठते । तथा कृत्वा प्रविश्य गृहीत्वा निष्क्रामन्तमेनं केवलेन पात्रेण परिप्रगृह्णाति ॥

ऋतुना प्रेष्येति त्रिष्वाद्येष्वध्वर्युः संप्रेष्यति। एवं प्रतिप्रस्थाता। १७।

त्रिषु ग्रहेषु॥

पात्रयोर्मुखे पर्यावृत्यर्तुभिः प्रेष्येति द्वयोरध्वर्युः। एवं प्रतिप्रस्थाता। १८।

उभयतोमुखमृतुपात्रमित्युक्तम्। तत्र येन मुखेन पूर्वं हुतं ततो मुखान्तरेण जुहुतः॥

पुनः पर्यावृत्यर्तुना प्रेष्येति सकृदध्वर्युः। एवं प्रतिप्रस्थाता। १९।

गतः॥

इति षड्विंशी कण्डिका।

द्वादश त्रयोदश चतुर्दश वा गृह्यन्ते। १।

त्रयोदशेत्यधिकमासाभिप्रायम्। उक्तं च ब्राह्मणे. अस्ति त्रयोदशो मास इत्याहुरिति॥ चतुर्दशेत्यधिकमासस्यैवावान्तरविकल्पाभिप्रायम्। तौ हि कालभेदेन त्वादिश्यते कालविद्भिः. न तु कदाचिदपि चतुर्दश मासाः सन्त्येकस्य संवत्सरस्य॥

द्वादशसु सह प्रथमौ गृह्येते। सहोत्तमौ। २।

ग्रहण एव सहभावो न गमने प्रदाने च॥

**त्रयोदशद्वत्तमयोः सह ग्रहणप्रदाने। ३।**

त्रयोदशत्वे प्रदानमप्युत्तमयोः सह क्रियते। न तत्राध्वर्योः संप्रैष इति विशेषः। शेषं पूर्ववत्। द्वादश्यामेव याज्यायां त्रयोदशो ऽपि हूयते. द्वादशभ्यो ऽधिकाया ऋतुयाज्याया अभावादिति भावः॥

**तथा चतुर्दशसु प्रथमोत्तमयोः। ४।**

चतुर्दशत्वे प्रथमयोः सहप्रदानं प्रथमायां याज्यायां. तथोत्तमयोर्द्वादश्याम्। अध्वर्योरेवोभयत्र संप्रैष इति विशेषः। शेषं पूर्ववत्॥

**संसर्पो ऽस्यंहस्पत्याय त्वेति त्रयोदशचतुर्दशौ वाव गृह्येते। ५।**

एको ऽयं मन्त्रो न द्वौ. मासनाम्नैकैकपात्रमभिजुहोतीति लिङ्गात्. संसर्पो ऽस्यंहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणातीति श्रुतेश्च। तेन कृत्स्नेनानेन द्वावपि गृह्येते॥

**अध्वर्यू यजतं गृहपते यजेत्यभिज्ञायोभयत्राति-प्रेष्यति होतरेतद्यजेति। ६।**

एवं प्रशास्तुरभिज्ञायोभयत्रातिप्रैषः कर्तव्यः। किमध्वर्युरेवोभयत्राति-प्रेषिता. नेत्याह॥

**एवं गृहपतिः स्वे प्रैषान्ते। ७।**

गृहपते यजेति स्वे प्रैषान्ते गृहपतिरेवमतिप्रेष्यति नाध्वर्युरित्यर्थः। केचित्त्वेवंकारादुभयत्राध्वर्योरतिप्रैषं गृहपतिनात्र समुच्चयं मन्यन्ते।

तदयुक्तं. गृहपतौ प्रेषिते ततोऽन्येषामतिप्रेषणायोगात्. गृहपतिस्सेत्यवचनाच्च ॥

द्विदेवत्यवत्संपातौ च्यवनीयाभक्षितेन पात्रेणाध्वर्युरैन्द्राग्नं गृह्णाति। इन्द्राग्नी आगतं सुतमिति ग्रहणसादनौ। प्रतिप्रस्थाता हरति भक्षम्। ८।

गतौ ॥

उभावध्वर्यू यथावषट्कृतं प्रतिभक्षयतः। ९।

यस्ययस्य वषट्कारे येनयेन कृतं तस्यतस्य मम प्रतिभक्षयति तेनैव वषट्कारक्रमेण ॥

सर्वेषां सोमपात्राणां भक्षितानां मार्जालीये प्रक्षालनम्। १०।

भक्षितानां भक्षितसोमानाम् ॥

एतत्पात्रमादायाध्वर्युः सदोबिले प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रं प्रतिगरिष्यञ्जपति। ११।

प्रतिगरिष्यन्नृतुपात्रहस्तः सदोद्वार्युपविश्येडा देवहूरिति जपत्यान्तादनुवाकस्य ॥

अध्वया शोंसावोमिति होतुरभिज्ञाय प्रदक्षिणमावर्तमानः शोंसा मोद इवेति प्रत्याह्वयते। शंसा मोद इवेति वा। १२।

यदा शोंसावोमिति होताध्वर्युमभ्याह्वयते तदाध्वर्युः प्रदक्षिणमावृत्योत्तिष्ठन् तमेवं प्रत्याह्वयते ॥

ऋतुपात्रं धारयमाणः सदोबिले प्रत्यङ्तिष्ठन्प्रतिगृणाति । प्रह्वो वा । १३ ।

मा निधायृतुपात्रमिति धारणवचनम् ॥

ओथा मोद इवेत्यर्धर्चेषु । ओमोथा मोद इवेत्यवसानेषु । प्रणव एवान्तः । १४ ।

अर्धर्चेषु ओथा मोद इवेति प्रतिगृणाति । ऋगवसानेषु सप्रणवं ओथा मोद इवेति । शस्त्रान्ते तु प्रणव एव केवलम् ॥ अर्धर्चग्रहणं विरमणप्रदर्शनार्थम् । तेन पच्छःशस्यासु पादेषु ओथा मोद इवेति. अर्धर्चेषु ओमोथा मोद इवेति । तथा निविदादीनां विरमणेष्वप्यर्धर्चविरमणेनैव प्रतिगरः प्रदर्शितो वेदितव्यः । तथा च सत्याषाढभारद्वाजौ. यत्रयत्र होता विरमेत् ओथा मोद इवेत्येव ब्रूयादिति ॥

ओथा मोद इवं होतर्मोद इवमोथा मोद इवोमिति विकल्पन्ते । १५ ।

त्रिभिरेभिर्यथोक्तैः प्रतिगरैर्यथाक्रमं त्रय एते विकल्पन्ते. यथा अर्धर्चेषु ओथा मोद इवं. ऋगन्तेषु होतर्मोद इवमिति. शस्त्रान्तेषु ओथा मोद इवोमिति ॥

नार्धर्चाल्लुप्यते। नाभिप्रतिगृणाति। १६।

नार्धर्चात्प्रतिगरो लुप्यते अवच्छिद्यते. न प्रतिगरस्योपरि पुनः प्रतिगृणातीत्यर्थः। नन्वप्रसक्तस्योभयस्य प्रतिषेधः किमर्थः। सत्यम्। तथापि प्रमादस्य संभवात् निन्दाश्रुतेश्चादरार्थं वचनम्। वक्ष्यति चात्र प्रायश्चित्तं यदर्धर्चाल्लुप्येताभिप्रतिगृणीयाद्वेत्यादि॥

ओंसा मोद इवौथा मोद इवेति व्याहावेषूभयं करोति। १७।

ओंसावोमित्येष व्याहावः। तस्मिन्नुच्यमान उभयमेतत्समुच्चयेन प्रतिगरं करोति॥

शस्त्रं प्रतिगीर्य ग्रहमध्वर्युरादत्ते। चमसांश्चमसाध्वर्यवः। १८।

चमसाध्वर्यवश्चमसानाददते न त्वाहवनीयसमीपं हरन्ति होमाभावात्॥

आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सोमस्येति। वषट्कृते जुहोति। १९।

गतः॥

इति सप्तविंशी कण्डिका।

अनुप्रकम्पयन्ति नाराशंसान्वषट्कारानुवषट्कारौ ॥ १ ॥

चमसाध्वर्यवस्तु वषट्कारमनुवषट्कारं चानु चमसान्प्रकम्पयन्ति न शुक्रेति । बौधायनस्त्वाह. नानुप्रकम्पयेरन्निति शालीकिः. नैतानुपोद्यच्छेरन्नित्यौपमन्यव इति । नराशंसदेवतत्वान्नाराशंसाः पितृदेवत्याश्च. बह्वृचानामुभयत्रलिङ्गं भक्षमन्त्रं प्रकृत्य ऊमा वै पितरः प्रातःसवन ऊर्वा माध्यंदिने काव्यास्तृतीयसवन इति तत्रैव विशेषप्रदर्शनात् ॥

भक्षान्हरन्ति ॥ २ ॥

गतः ॥

व्याख्यातो ग्रहस्य भक्षः । तथा नाराशंसानां भक्षणाप्यायनसादनानि ॥ ३ ॥

ग्रहे भक्षिते चमसिनः समाख्याभक्षं पूर्ववद्भक्षयित्वाप्याययन्ति सादयन्ति च चमसाध्वर्यवः ॥

वैश्वदेवं शुक्रपात्रेण गृह्णाति । ओमासश्चर्षणीधृत इति ग्रहणसादनौ ॥ ४ ॥

गतः ॥

असर्ज्यसर्जीति बर्हिर्भ्यां स्तोत्रमुपाकरोति ॥ ५ ॥

स्तोत्रमुपाकरोतीत्येतावता सिद्धे पुनर्मन्त्रवर्हिर्वचनं विस्पष्टार्थम् ॥

इडायै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मे ऽव-

रुद्धा इति पुरस्तादाज्यानां यजमानो जपति चतुर्होतारं च व्याचष्टे। ६।

चत्वार्युत्तराणि स्तोत्राण्याज्यानीति समाख्यायन्ते। समुदायाभ्यामेतौ जपौ. दशहोतेव सामिधेनीनाम्। अतः प्रतिस्तोत्रं नावर्तते। सत्याषाढस्त्वाह. पुरस्तादाज्यानामेकैकस्य स्तोत्रस्य जपतीति॥

स्तूयमाने च चतुर्होतारं जपति। ७।

अयमपि पूर्वेण व्याख्यातः। तथा स्तूयमान इत्येकवचननिर्देशाच्च नावृत्तिः॥

चतुर्होतॄन्व्याख्यायाज्यैरुद्गायतीति विज्ञायते। ८।

चतुर्होतृषु यजमानेनोक्तेषूद्गाताज्यैरुद्गायतीत्यर्थः॥

स्तुत ऋतुपात्रवर्जमैन्द्राग्नवच्छस्त्रप्रतिगरो ग्रहनाराशंसाश्च। ९।

शस्त्रस्य प्रतिगरः शस्त्रप्रतिगरः॥

सर्वभक्षाश्चमसा भवन्ति। १०।

सर्वः सोमो भक्ष्यो येषां ते सर्वभक्षाः। तान्भक्षितसोमान्प्रक्षाल्य खरे सादयन्ति चमसाध्वर्यवः॥

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि देवेभ्योदेवा युवमुक्थ्येभ्य उक्थ्या युवमित्यु-

क्थ्यपात्रेणोक्थ्यतृतीयं गृहीत्वैष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयित्वा पुनर्हविरसीति स्थालीमभिमृशति। ११।

उक्थ्यस्थाल्यास्तृतीयं उक्थ्यतृतीयं गृह्णाति॥

यन्मुख्याश्चमसा भवन्ति तस्य प्रतिगृणाति तं च प्रतिभक्षयति। १२।

त्रिष्वप्युक्थ्यपर्यायेषु यस्य मैत्रावरुणादेः चमसो मुख्य उन्नीयते तस्य प्रतिगृणाति शस्त्रं, प्रतिभक्षयति चमसम्॥

मैत्रावरुणचमसमुख्यांश्चमसानुन्नीय पूर्ववत्स्तोत्रमुपाकरोति। १३।

गतः॥

स्तुते पूर्ववच्छस्त्रं प्रतिगीर्य ग्रहमध्वर्युरादत्ते। चमसांश्चमसाध्वर्यवः। आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सोमानामिति। वषट्कृतानुवषट्कृते जुह्वति। भक्षान्हरन्ति। १४।

चमसाध्वर्यवोऽप्यत्रोदङ्मुखा आघारस्योपरि जुह्वति, अत्र सर्वाः सोमाहुतीरिति वचनात्। यत्तु पूर्वमुक्तं पश्चात्प्राञ्चश्चमसैरिति तच्छुक्रामन्थिमात्रविषयं, प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्रणुदत इति लिङ्गात्॥

एवमत ऊर्ध्वं नाराशंसवर्जं गणेषु चर्या। १५।

सर्वेषु चमसगणेष्वेवमेव चर्या प्रचरणं भवति। संप्रैषश्च उक्थशा यज सोमानामिति बहुवचनान्तः। नाराशंसानां चैन्द्राग्न एवोक्तो विधिः॥

देवेभ्यस्त्वा देवा युवं पृणज्मि* यज्ञस्यायुष इति मुख्ये संपातमवनयति। १६।

मुख्ये मैत्रावरुणचमसे संपातमवनीय यदमायतने सादयति॥

इत्यष्टाविंशी कण्डिका।

यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्युक्तम्। १।

यज्ञकर्मकौशलनिमित्तेन यशसा यद्यात्मानं योजयितुमिच्छति तदान्तराहवनीयं च हविर्धानं च निष्क्रम्यावनयेत्. यदि यजमानं तथेच्छति तदान्तरा सदोहविर्धाने. यदि सदस्यांस्तदा सदसि स्थित्वावनयेदित्युक्तं ब्राह्मणे। तदप्यनुसंधातव्यमित्यर्थः। भक्षणे प्रशास्त्रवषट्कारनिमित्तं भक्षणं सर्वेषां चमसिनां. मुख्यैः प्रतिभक्षणं चाध्वर्योः. ततः समाख्याभक्षणं चमसिनां. ततः प्रक्षालनं खरे सादनं चमसानामिति द्रष्टव्यम्॥

एवं विहितावुत्तरौ पर्यायौ। २।

उत्तरयोरप्युक्थ्यपर्याययोर्ग्रहणादिभक्षणान्तो विधिरयमेव॥

* Thus all MSS.

ताभ्यां प्रतिप्रस्थाता चरति । एतावन्नाना । ३ ।

गतौ ॥

इन्द्राय त्वेति द्वितीये ग्रहणसादनौ संनमत्यर्धं चोक्थ्यशेषस्य गृह्णाति । पूर्ववत्स्थालीमभिमृशति । ब्राह्मणाच्छंसिचमसमुख्यांश्चमसानुन्नयति । ४ ।

इन्द्राय त्वा जुष्टं गृह्णामीति ग्रहणमन्त्रं संनमति । गतः शेषः ॥

नाभक्षितं चमसं स्तोत्रेणाभ्युपाकरोति । ५ ।

ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति नियमेनैव सिद्धे ऽयान्तरविधिवचनं प्रायश्चित्तविशेषार्थं. यथा वक्ष्यति यदि चमसमभक्षितमित्यादि । तत एव प्रायश्चित्तवचनात्सार्वत्रिकत्वं चास्य निषेधस्य द्रष्टव्यम् ॥

न प्रतिप्रस्थातोक्थ्यपात्रस्य भक्षयति । ६ ।

उक्थ्यपात्रस्थरसं मुख्ये चमसे ऽवनीतं न प्रतिप्रस्थाता भक्षयति । यद्युपहूतः स्याद्भक्षयेत्येव ब्रूयात्. अच्छावाकचमसे तथादर्शनात् ॥

मुख्ये संपातमवनयति । ७ ।

संपातमवनीय ब्रह्मणे प्रयच्छति । ततश्चमसान्पूर्ववद्भक्षयन्ति चमसिनः ॥

इन्द्राग्निभ्यां त्वेति तृतीये ग्रहणसादनौ संनमति सर्वं चोक्थ्यशेषं गृह्णाति । न स्थालीमभिमृशति । ८ ।

गताः ॥

पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तं सर्वं पूतभृत्यवनीयाच्छावाकचमसमुख्यांश्चमसानुन्नयन्सर्वं राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्युब्जति। ९।

कलशौ पूतभृद्द्रोणकलशौ। न्युब्जति न्यञ्चौ करोति॥

मुख्ये संपातमवनयति। १०।

गतः॥

उक्थशा इत्याह प्रातःसवनं प्रतिगीर्य शस्त्रंशस्त्रं वा। ११।

प्रातःसवनान्ते ऽच्छावाकशस्त्रं प्रतिगीर्य प्रतिप्रस्थाता उक्थशा इत्याह। शस्त्रंशस्त्रं वा प्रतिगीर्य मम प्रतिगरिता तथा ब्रूयात्। प्रातःसवनं प्रतिगीर्येति श्रुत्यर्थस्य विशयित्वादिति भावः॥

असंत्वरमाणाः पूर्वाभ्यां सवनाभ्यां चरन्ति। संत्वरमाणास्तृतीयसवनेन। १२।

ऋत्विज इति शेषः॥

अग्निः प्रातःसवने पात्वस्मानिति संस्थिते सवन आहुतिं जुहोति। १३।

संस्थिते सवन इत्यनेन सवनसंस्थानिमित्तत्वमाहुतेर्दर्शयति। तेन सोमातिरेके सति तत्प्रायश्चित्तान्ते जुहोति। प्रायश्चित्तान्यप्यनुसवनं स्कन्ने पश्चाद्धुतौरित्यादीनि प्राक् सवनाहुतेः कार्याणि॥

**प्रशास्तः प्रसुव प्रसुहीति वा संप्रेष्यति । १४ ।**

प्रसुव प्रसुहीति पर्यायौ निःसर्पणार्थमनुज्ञां देहीत्यर्थः ॥

**सर्पतेति प्रत्याह । १५ ।**

प्रशास्तेति शेषः ॥

**येन प्रसर्पन्ति तेन निःसर्पन्ति । १६ ।**

येन पथा पूर्वं प्रसृप्ता ऋत्विजस्तेनैव गच्छन्ति ॥

**संतिष्ठते प्रातःसवनं प्रातःसवनम् । १७ ।**

गतः ॥

इत्येकोनत्रिंशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः ।

इति द्वादशः प्रश्नः ॥

ओम् ॥

अभिषवादि माध्यंदिनं सवनं तायते । १ ।

अभिषवादि महाभिषवादि ॥

तस्य प्रातःसवनेन कल्पो व्याख्यातः । २ ।

तस्य माध्यंदिनस्य ॥

होतृचमसेन वसतीवरीभ्यो निःषिच्य निग्राभ्याः करोति । ३ ।

वसतीवरीभ्यो होतृचमसेनापो गृहीत्वा निग्राभ्याः करोति । निग्राभ्याकरणं व्याख्यातं निग्राभ्यास्थित्यत्र ॥

द्विदेवत्यर्तुग्रहा दर्विहोमाश्च न विद्यन्ते । ४ ।

दधिग्रहादयो ऽन्तर्यामान्ता दर्विहोमास्तावन्न विद्यन्ते । तथैन्द्र-वायवादयस्त्रयो द्विदेवत्या ऋतुग्रहाश्च ॥

विस्रस्य राजानं ग्रावस्तुते सोमोष्णीषं प्रयच्छति । ५ ।

राजानमुपनद्धं तूष्णीं ग्रावस्थपावरोह्य विस्रस्य च बन्धनात्सोमवेष्टनं वासो ग्रावस्तुते प्रयच्छति. प्रत्यादत्ते चाभिष्टुतेषु ग्रावसु. सोमो-ष्णीषं यजमानः परिधत्त इति वचनात् ॥

असंप्रेषितो ग्रावस्तोत्रीया अन्वाह। ६।

न ग्रावस्तुतोऽभिषवणे संप्रैषोऽस्तीत्यर्थः॥

तथैव महाभिषवः। ७।

तथैव महाभिषवः कार्यः यथा प्रातःसवने। विशेषविवक्षया पुनःकीर्तनम्॥

घोषवांस्तु। ८।

नोपांश्वस्त्वभावः॥

संराधयन्तश्चाभिषुण्वन्तीहा३ इहेति। ९।

इहा इहेत्याम्रेडयन्तोऽभिषुण्वन्ति॥

उत्तमस्याभिषवस्य मध्यमे पर्याये हृहद्धति हृह-द्धृहदिति। १०।

तृतीयस्य पर्यायस्य मध्यमे पर्याये हृहद्धृहदित्येवं हृहच्छब्दमाम्रेड-यन्ति॥

उत्तमेऽभिषवेऽभिषुते राजन्यसंभृते देवा ग्रावाण इन्द्रविन्द्र इत्यवादिषुः। ऐन्द्रमचुच्यवुः परमस्याः परा-वतः। आस्मात्सधस्तादोरोरन्तरिक्षात्। आ सुभूत-मसुषवुर्ब्रह्मवर्चसं म आसुषवुः समरे रक्षांस्यवधिषुर-पहतं ब्रह्मज्यस्येति प्रतिप्रस्थाता ग्राव्णोऽनुमोदते। ११।

उत्तमे पर्याये पूर्ववदिहा इहेत्यवराभिषुवते। असंभृत एवाधवनीये राजनि ग्राव्णोऽनुमोदते संभावयति मन्त्रेण॥

पशुपुरोडाशं निरुप्य पयस्यावर्जं सवनीयाः । १२ ।

अत्र ब्राह बौधायनः. प्रातःसवन एव सर्वेभ्यः सवनीयान्निर्वपेत्. कृतान्नात्पौरोडाशिकं कर्म प्रत्याददीतोत्तरयोः सवनयोः. अनुसवनमङ्गाराध्यूहनेनैव कपालेषु प्रतिपद्येत. सिद्धमत ऊर्ध्वमिति। तथा. क्व नु खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति. क्षुल्लकवैश्वदेवस्य स्तोत्र इति ब्रूयात्. क्व तृतीयसवनीया इति. महेन्द्रस्य स्तोत्र इत्येव ब्रूयादिति॥अनुसवनमङ्गाराध्यूहनेनैव प्रतिपद्येतेति प्रातःसवनोपहितेष्वेव कपालेषूत्तरयोः सवनीययोरधिश्रयणमित्यर्थः। क्षुल्लकवैश्वदेवस्य स्तोत्र इत्याज्यानामादिमे स्तोत्र इत्यर्थः॥

तेन प्रचर्य सवनीयैः प्रचरति । १३ ।

प्रचरणकाले ऽप्ययमेव क्रम इति भावः॥

समानं तु स्विष्टकृदिडम् । १४ ।

गतः॥

स कृताकृतः । १५ ।

पशुपुरोडाशो वैकल्पिकः॥

संभरणाद्या धारायाः कृते ऽध्वर्युर्ग्रहान्गृह्णाति । १६ ।

संभृत्य राजानमित्यादि संतता धारा स्रावयितव्येत्यन्ते कृते धाराग्रहानध्वर्युर्गृह्णाति॥

इति प्रथमा कण्डिका।

शुक्रामन्थिनावथाग्रयणं तिसृभ्यो धाराभ्यः । १ ।

गतः ॥

आग्रयणाद्दृत्सिच्य द्वितीयां धारां करोति । उदचनात्तृतीयाम् । २ ।

उदचनेनाधवनीयादुद्धृत्य ततस्तृतीयां धारां करोति ॥

उक्थ्यं गृहीत्वा मरुत्वतीयौ । एतद्वा विपरीतम् । मध्य उक्थ्यमभितो मरुत्वतीयावित्येके । ३ ।

गतः ॥

मरुत्वन्तमिति स्वेनर्तुपात्रेणाध्वर्युः पूर्वं मरुत्वतीयं गृह्णाति । इन्द्र मरुत्व इति स्वेन प्रतिप्रस्थातोत्तरम् । ४ ।

पूर्वोत्तरत्वं मन्त्रक्रमापेक्षया ॥

तयोरन्यद्देवतानि ग्रहणानि द्वेष्यस्यैके समामनन्ति । ५ ।

ग्रहणानीति बहुवचनं ग्रहणमादनाभिप्रायेण । द्वेष्यस्य यजमानस्य ग्रहणसादनेषु मन्त्रे देवतान्तरपदावाप उक्तः शाखान्तरे । तत्तथा न कार्यमिति भावः ॥

विरमति धारैकधनानां यथार्थमित्येतदाद्या पञ्चहोतुः । ६ ।

अभिविधावाकारः ॥

ग्रहावकाशैः ऋतंकारैश्चोपस्थाय वैप्रुषान्समहोतारं च हुत्वा बहिष्पवमानवन्माध्यंदिनं पवमानं सर्पन्ति ।७।

ग्रहावकाशऋतंकारग्रहणात् तेभ्यो यदन्यदुपस्थानं अग्निः पवित्रमित्यादि तन्निवर्तते। तैरपि य एव ग्रहा माध्यंदिनाय पुनर्गृह्यन्ते तेषामेवोपस्थानं. नान्येषां आज्याहवनीयध्रुवादित्यातियाह्यादीनां. उपस्थितत्वात्॥

त्रैष्टुभः पन्था रुद्रा देवतारुकेणापरिपरेण पथा स्वस्ति रुद्रानशीयेति सर्पणे विकारः ।८।

सर्पणमन्त्रे गायत्र इत्यादावेव विकारः॥

उत्तरेण हविर्धानं गत्वा दक्षिणेन मार्जालीयं धिष्णियं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण होतारमध्वर्युर्यजमानश्चावतिष्ठेते। दक्षिणेनोत्तरेण वा प्रशास्तुर्धिष्णियं परीत्योद्गातारो माध्यंदिनेन पवमानेन स्तुवते।९।

पूर्वेण सदो मार्जालीयाय गच्छन्ति॥

इति द्वितीया कण्डिका।

ज्योतिषे हिङ्कुरु तस्यै* प्रस्तुहि तस्यै स्तुहि तस्यै मे ऽवरुद्ध्या इति पुरस्तान्माध्यंदिनात्पवमानाद्यजमानो जपति। चतुर्होतारं पञ्चहोतारं वा व्याचष्टे। ज्योत्स्नै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मे ऽवरुद्ध्या इति च। स्तूयमाने च चतुर्होतारं पञ्चहोतारं वा जपति। मध्यमायां च स्तोत्रीयायां द्वितीयमन्वारोहम्। स्तुते ऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातर्दधिघर्मेणानूद्देहीति। १।

व्याख्यातः प्रातःसवने ॥

आग्नीध्रे प्रतिप्रस्थाता दधिघर्मं गृह्णाति। २।

ततो धिष्ण्यविहरणादिपात्रसंमर्शनान्ते कर्मणि कृते दधिघर्मार्थं दधि प्रतिप्रस्थाता गृह्णाति ॥

औदुम्बर्यां स्रुच्युपस्तीर्य यावती द्यावापृथिवी इति दधि गृहीत्वाभिघार्य वाक्च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीतां शृतो ऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वेत्याग्नीध्रीये ऽधिश्रित्याह होतर्वदस्व यत्ते वाद्यमिति। ३।

गतः ॥

* Sic! Cf. XIII. 11. 1.

यदास्य विजानाति यदि श्रातो जुहोतन यद्यश्रातो ममत्तनेत्येतस्मिन्काले श्रातं हविरिति प्रत्युक्त्वा तमादायाहवनीयं गत्वाश्राव्य प्रत्याश्राविते संप्रेष्यति। ४।

इति तृतीया कण्डिका।

दधिघर्मस्य यजेति। १।

प्रतिप्रस्थातेति शेषः, तदधिकारात्, प्रतिवचनसमानकर्तृकत्वाच्च॥

यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः। यो देवानां देवतमस्तपोजास्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति वषट्कृते जुहोति। स्वाहा वडिन्द्रायेत्यनुवषट्कृते हुत्वा हरति भक्षम्। २।

गतः॥

तं भक्षयन्ति ये प्रवर्ग्यम्। ३।

भक्षिणामयं नियमः, न तु भक्षणधर्मातिदेशः, यथा प्रवर्ग्यमित्यवचनात्। न च घर्मधर्माः, दधिघर्मस्य कृत्स्नविधानात्। अतो नोपहवयाच्ञा, न चावघ्रेण भक्षयन्ति॥

तस्यारण्येऽनुवाक्यो भक्षमन्त्रः। ४।

को ऽसौ। भूर्भुवः सुवर्मयि त्यदित्यनुवाकः। यथा वक्ष्यति च, दधिघर्मं भक्षयन्ति भूर्भुवः सुवरित्यनुवाकेनेति॥

नाप्रवर्ग्ये स्यादित्यपरम्। ५।

अप्रवर्ग्ये क्रतौ न स्याद्वा दधिघर्मः॥

मित्रो जनान्प्र स मित्रेति भक्षयित्वा नाभिदेशानभिमृशन्ते। ६।

गतः॥

व्याख्याता सवनीयचर्या। ७।

दधिघर्मानन्तरं पशुपुरोडाशेन चरित्वा सवनीयैः प्रचरति॥

एतावन्नाना। माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामिति संप्रैषादौ* नमति। ८।

एवं संप्रैषयोगादौ नमति॥

होत्र इडां हृत्वा हविर्धानं गच्छन्संप्रेष्यत्युन्नीयमानेभ्यो ऽनुब्रूहीति। ९।

गतः॥

उन्नयनाद्या नाराशंसानां सादनात्। १०।

समानमिति शेषः॥

तत्र विकारः। ११।

वक्ष्यत इति शेषः॥

* Corrected according to the commentary and especially to the collateral passages XII. 20. 15 and XIII. 11. 6, in the latter of which the MSS. have संप्रैषादौ; here they read संप्रैषादि.

अच्छावाकचमसं दशममुन्नयति। १२।

दशममित्यनेन दशानामप्युन्नयनमुच्यते. न तून्नयने ऽस्य चरमत्वं. यागे नवमत्वदर्शनात् ॥

आश्राव्य प्रत्याश्राविते संप्रेष्यति। १३।

यथा प्रातःसवनिके सवनमुखे संप्रेषितं तथा संप्रेष्यतीत्यर्थः। विकारविवक्षया त्वनुवादः ॥

माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमानिति संप्रैषादिः। १४।

अत्र तु संप्रैषस्यैवमादिर्भवति ॥

षड्ढोचा भवन्ति। १५।

अत्रेति शेषः। प्रातःसवने तु पञ्च ॥

पुरस्तादाग्नीध्रचमसादच्छावाकचमसेन चरन्ति। १६।

गतः ॥

एता एव होचास्तृतीयसवने भवन्ति। १७।

अत्रापि षडेव भवन्ति ॥

इति चतुर्थी कण्डिका।

इति प्रथमः पटलः ॥

सन्नेषु नाराशंसेषु दक्षिणा ददाति। बह्वपरिमितं सप्तैकविंशतिः षष्टिः शतं द्वादशशतं सहस्रं सर्ववेदसं वा। १।

बहु प्रभूतं. तच्चापरिमितं अनवच्छिन्नपरिमाणं धनमिति शेषः। सप्ता-द्यः संख्या गोविषयाः. यथा वक्ष्यति. गवां संख्या भवतीति। द्वादशशतं द्वादशाधिकं शतम्॥ वेद इति धनाख्या. सर्ववेदः सर्ववेदसं सर्वस्वमिति यावत्। तत्तु भूमिपुरुषवर्जं देयमिति न्याय-विदः। स्वयं च वक्ष्यति. यदन्यद्भूमेः पुरुषेभ्यश्चेति॥

ज्येष्ठं वा पुत्रमपभज्य सर्ववेदसं ददाति। २।

सर्ववेदसं ददत् ज्येष्ठाय पुत्राय भागं दत्त्वा शेषं ददाति॥

अश्वतरं साहस्रे सर्ववेदसे च ददाति। ३।

गर्दभाद्वडवायां जातोऽश्वतरः सर्वत्रादयः. साहस्रसर्ववेदसयोस्तु नित्यः। तथा च ब्राह्मणं. तस्माद्दक्षिण्यनवकॢप्तः. सर्ववेदसे वा सहस्रे वावकॢप्त इति॥

अविं ददात्यजां गामश्वं पुरुषं हस्तिनं वासोऽनो रथमोदनं मन्थं माषांस्तिलान्व्रीहियवान्गर्दभमित्य-धिकान्यनियतानि। ४।

पूर्वाभिः सह विकल्पशङ्कानिवृत्त्यर्थमुक्तं अधिकानीति. नित्यवत्स-मुच्चयशङ्कानिवृत्त्यर्थमुक्तं अनियतानीति। एतान्यपि द्रव्याणि यथा-म्नाताभ्यो दक्षिणाभ्योऽधिकानीच्छन्ददाति। ददतस्तु क्रतुर्गुणवत्तरो भवतीति भावः॥

गवां संख्या भवति । ५ ।

यात्र सप्तादिका संख्योक्ता सा गवामेव भवति. नान्येषां द्रव्याणाम्। न चान्यैः सह गवामित्यर्थः ॥

दक्षिणेन वेदिमवस्थितासु दक्षिणासूत्तरेण हविर्धानं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्याच यजमानस्यामात्यानां संह्वयनाद्या स्रुग्दण्डोपनियमनात्कृत्वा प्रचरण्या दक्षिणानि जुहोति । ६ ।

दक्षिणा दक्षिणतो वेदेरवस्थिता भवन्ति । ततः प्रचरण्यां यावतीर्दक्षिणाहुतीर्होष्यति तावत्कृत्वो गृहीत्वोत्तरेण हविर्धानमित्यादि प्रतिपद्यते ॥

हिरण्यं प्रबध्य घृते ऽवधायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति । ७ ।

द्वाभ्यां द्वे आहुती जुहोति ॥

दिवं गच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति । ८ ।

गतः ॥

उभयं धारयमाणो रूपेण वो रूपमभ्यैमीति दक्षिणा अभ्यैति । ९ ।

उभयं हिरण्यमाज्यं च ॥

अतिनीय विभागमेके समामनन्ति । १० ।

दक्षिणानां विभागं दानं चाक्त्वा ततो ऽतिनयनमाम्नं वक्ष्यते हिरण्य-पाणिरग्रेण गार्हपत्यमित्यादिना । तद्वातिनयनं प्रथमं कृत्वा ततो विभागदाने कार्ये इत्यर्थः ॥

तुथो वो विश्ववेदा विभजत्विति ता यजमानश्चतुर्धा कृष्णाजिनेन व्युह्यास्य चतुर्थमध्वर्युभ्यो विभजति । ११ ।

यथा नस्ताश्चतुर्धा विभक्ता भवेयुस्तथा व्युह्यामयति ॥

यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे । १२ ।

यथैवमंशा निपतन्ति तथा विभज्य ददातीत्यर्थः । कीदृशः स विभाग इति चेत् तदुक्तं कल्पान्तरकारैः. द्वादशद्वादश प्रथम-र्त्विग्भ्यः षट्षडर्धिभ्यः चतस्रश्चतस्रस्तृतीयेभ्यः तिस्रस्तिस्रः तुरीयेभ्य इति । एतदुक्तं भवति. यो ऽध्वर्युभ्यो देयश्चतुर्थो ऽंशस्तं पञ्च-विंशतिधा कृत्वा द्वादशांशानध्वर्यवे ददाति षट् प्रतिप्रस्थात्रे चतस्रो नेष्ट्रे तिस्र उन्नेत्र इति ॥

एतेनेतरेषां दानमुक्तम् । १३ ।

एतेनैव प्रकारेणेतरेषामृत्विजां वर्गशो दानं व्याख्यातम् ॥

इति पञ्चमी कण्डिका ।

हिरण्यं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे ऽग्रे ददाति । १ ।

हिरण्यादीनि त्रीणि दक्षिणाभागाद्बहिर्भूतान्यग्नीधे ऽग्रे ददाति ॥

प्रतिहर्त्रे ऽन्ततः । २ ।

प्रतिहर्त्रे तु स्वदक्षिणांश एवान्ततो देयः, न हिरण्यादीनीत्येके कल्पान्तरानुरोधात् ॥

तथा ब्रह्मणे दद्याद्यथान्यां दक्षिणां नानुध्यायेत् । ३ ।

यथान्यां नानुकाङ्क्षेत् हन्तेमां न लब्धवानस्मीति । तथा सर्वोत्तमां दद्यात् ॥

अङ्गानि दत्त्वा तेनतेन यथालिङ्गं निष्क्रीणीते यद्दा-स्यन्स्यात् । ४ ।

वागादीन्यङ्गानि दत्त्वा तत्तदङ्गं तेनतेन दक्षिणांशेन निष्क्रीणीते यंयमंशं दास्यन्भवति । निष्क्रयणवाक्ये तदाशब्दिदमां यथायथं लिङ्गसंख्याया विकारार्थं यथालिङ्गवचनम् ॥

होतर्वाचं ते ददामि तां ते ऽनेन निष्क्रीणामीति । ५ ।

इति होत्रे वाचं दत्त्वा निष्क्रीणीते । तत्रेदमानीयमानस्य दक्षिणा-भागस्य प्रतिनिर्देशः । अतः तां ते ऽनेनेत्येवाविकृतः प्रयोगः ॥ अन्यत्तु मतम् । नात्रेदमानीयमानस्य दक्षिणांशस्य परामर्शः, किं त्वदःशब्दवत्तद्वाचिनः शब्दस्य, तथा तस्य त इदमुन्मृज इत्यत्र

बौधायनेन इदमो ऽपि शब्दपरत्वप्रदर्शनात्। अतः तां ते दक्षिणां-शेनेति प्रयोग इति॥ केचित्तु दक्षिणानां स्वेनांशेनेति प्रयुञ्जते। तदयुक्तं. युष्मदाभिहिते ऽंशसंबन्धे स्वशब्दस्य वैयर्थ्यात्॥

एवं ब्रह्मणे मनः। अध्वर्यवे प्राणम्। उद्गात्रे चक्षुः। होत्रकेभ्यः श्रोत्रम्। चमसाध्वर्युभ्यो ऽङ्गानि। प्रसर्पकेभ्यो लोमानि। सदस्यायात्मानम्। ६।

सर्वत्र दत्त्वा निष्क्रीणीत इत्यन्वयः। तत्र मनऽआदिषु तत्ते तं त इत्यादिर्विकारो ऽनुसंधेयः। श्रोत्रनिष्क्रयणे तु तद्व एभिरिति विकारः. तद्वो दक्षिणांशैरिति वा। होत्रकानन्तरं प्रतिप्रस्थात्रा-दिभ्य ऋत्विग्भ्यो दत्त्वा ततश्चमसाध्वर्य्वादिभ्यो दीयते। तत्र प्रति-प्रस्थात्रादीनामप्यध्वर्य्वादिसमाख्यानात् सम एव तेषां मन्त्रो यो यो मुख्यस्य। तेषाममन्त्रकं दानमित्यन्ये। क्रमस्त्वेतेषामधिवृतीयि-पादिक्रमात् होत्वर्गक्रमाच्च द्रष्टव्यः. तद्यथा प्रतिप्रस्थात्रे प्रस्तोत्रे ग्रावस्तुत उन्नेत्रे सुब्रह्मण्यायेति। प्रतिहर्त्रे ऽन्ततः॥

अन्यच्च दक्षिणाभ्यश्चमसाध्वर्युप्रसर्पकसदस्येभ्यः। ७।

यद्यपि सदस्यो ऽप्यृत्विक्सप्तदशः तथापि वचनाद्दक्षिणासु न भाग-भाग्भवति। ननु कियच्चमसाध्वर्य्वादिभ्यो देयम्। यथाश्रद्धमिति गृह्यतां. परिमाणावचनात्। यथाश्रद्धमित्येव सत्याषाढभारद्वाजौ॥

हिरण्यपाणिरग्रेण गार्हपत्यं नयति जघनेन सदः। अन्तराग्नीध्रं च सदश्च ता उदीचीस्तीर्थेनोत्सृजति। ८।

धारयमाण एव तद्धिरण्यमध्वर्युर्यथोक्तेन पथातिनीय दक्षिणाश्चाल्ला-लोत्करावन्तरा गमयति ॥

एतत्ते अग्ने राध इति दक्षिणातिनयनः । ९ ।

गतः ॥

तथैव समन्वारब्धेष्वसमन्वारब्धेषु वाग्ने नयेत्याग्नीध्रीये जुहोति । १० ।

अतिनयन्नेव दक्षिणाः प्राप्याग्नीध्रीये जुहोति । असमन्वारम्भपक्षे शालामुखीयहोमानन्तरं विमुञ्चन्त्यमात्या होमार्थत्वादन्वारम्भस्य ॥

वनेषु व्यन्तरिक्षं ततानेति द्वितीयां यद्यनो रथो वासो ऽधीवासो वा दीयते यदि वा दास्यन्स्यात् । प्रजापते न त्वदेतानीति तृतीयां यदि पुरुषो हस्ती वा दीयते यदि वा दास्यन्स्यात् । ११ ।

अधीवासः शयनार्थं चर्मादि । यद्यनऽआदीन्यप्यधिकानि दीयन्ते दास्यमानानि वा भवन्ति अतिनीय दानपक्षे तदा द्वितीयाहुतिः । पुरुषहस्तिनोस्तु दाने तृतीया च । पुरुषः मनुष्यजातीयो दासी-दासकन्यादिः ॥

ब्राह्मणमद्य राध्यासमित्यात्रेयाय प्रथमाय हिरण्यं ददाति । द्वितीयाय तृतीयाय वा । १२ ।

यजमान इति शेषः. दानत्वात् । प्रथमाय प्रथमं सर्वेभ्य इत्यर्थः. यथा अग्नीधे प्रथमायादधातीति । द्वितीयाय आग्नीध्रानन्तराय.

तृतीयाय होतुरनन्तराय। तत्राग्नीदात्रेययोरात्रेयः प्रथम इष्टो बौधायनभारद्वाजाभ्यां. सत्याषाढकात्यायनाभ्यां तु द्वितीय इति द्रष्टव्यम्। अन्ये तु व्याचक्षते. प्रथमो ऽत्रिः प्रवरो यस्य स्यात्तस्य स प्रथमः. तथा गविष्ठिरातिथी द्वितीयतृतीयौ. तस्य चाग्नीध्रीयहोमानन्तरमेव सर्वत्र दानमिति॥

तदभावे य आर्षेयः संहितस्तस्मै दद्यात्। १३।

ऋषिः वेदः. तं साथं यो वेद स आर्षेयः. एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानिति श्रुतेः। संहितः पित्रादीनामार्षेयेण संतत इत्यर्थः. यथोक्तं सत्याषाढेन. तस्मिन्नविद्यमाने य आर्षेयो ऽनूचानस्य पुत्र इति। लिङ्गं चात्र भवति. पितृमन्तं पैतृमत्यमिति॥

अस्मद्दात्रा देवत्रा गच्छतेति नीता अनुमन्त्र्य सद एत्य वि सुवः पश्येत्यनुवीक्षते यद्यतिनीय विभजेत्। १४।

तीर्थेनोदीचीर्नीता. अनुमन्त्र्य प्रत्येत्य सदो ऽनुवीक्षेत इत्यर्थः। तथा सदः प्रेक्षेत इत्येव भारद्वाजः॥ इदमपि याजमानमेव. अस्मद्दात्रा वयमिह प्रदातार इति मन्त्रब्राह्मणलिङ्गाभ्याम्। तत्तु यद्यतिनीय विभजेदिति वचनात् दक्षातिनयनपक्षे लुप्यते। केचित्त्वेतदुत्तरसूत्रेण योजयन्तस्तत्रापि न लोपयन्ति॥

अन्तः सदस्यासीनेभ्य ऋत्विग्भ्यो दद्यात्। हविर्धाने ऽध्वर्युभ्यः। १५।

अत्र दक्षिणानां विभागो दानं चातिनीय विभागपक्षे। तथा चाव-तिनीय विभजेदित्येतदनेन सह योजयतामासनदेशनियमश्चास्मिन्नेव पक्षे। अन्यत्र त्वनियमः॥

ऋत्विग्भ्यो नमस्करोति। १६।

एवं दत्तास्वतिनीतासु च दक्षिणासु ऋत्विग्भ्यो नमस्करोति॥

यं यज्ञमागच्छेत्तं प्रसर्पेदिति प्रसर्पकाणां विज्ञायते। १७।

अथ प्रसर्पकानधिकृत्य श्रूयते. यं यज्ञं दर्शनेप्सुरागच्छेत्तं प्रसर्पेदिति अत्र सदः प्रविश्यासीतेति। अतस्ते सदस्येवासीरन्॥

इति षष्ठी कण्डिका।

दक्षिणतः सदस्यासीनेभ्यः प्रसर्पकेभ्यो ददाति। १।

यजमानस्तेभ्यः सदस्यासीनेभ्य एव ददाति॥

न बहिर्वेदि। २।

अथ प्रसर्पकेभ्यो ऽपि वक्ष्यमाणेभ्यः पुरुषेभ्यो दित्सन्नन्तर्वेद्यासीनेभ्य एव दद्यात्. न कस्मैचिद्बहिर्वेदि॥

न याचितः। ३।

प्रसर्पकायाप्रसर्पकाय च याचमानाय न ददाति॥

न भीतः । ४ ।

भयशङ्कयापि न योग्याय ददाति॥

न कण्वकश्यपेभ्यः । ५ ।

प्रतिषिद्धं दानं गोत्रद्वये। चिन्त्यस्तु हेतुः॥

नाब्राह्मणाय । ६ ।

ब्राह्मणायैव देयं नान्यस्मै वर्णायेत्युत्सर्गः। तत्रापवादमाह॥

ब्राह्मणायाप्यविदुषे न देयम्। अप्यब्राह्मणाय विद्याविदे दद्यात्। यां स विद्यां वेद तां तयावरुन्द्धे। ७।

त्रैवर्णिकेषु य एव कश्चित्सार्थवेदवित्तस्मै दद्यात्. नान्यस्मै। यां ह्यसौ शाखां वेद तां तया दक्षिणया प्राप्नोति। तस्माद्वेदनमेव दानाङ्गत्वे निदानमिति भावः॥

यां श्रोत्रियाय ज्ञातये वान्त्विजे प्रसृताय यां स विद्यां वेद तां तयावरुन्द्धे। ८।

श्रोत्रियो ऽधीतवेदः। पूर्वं तु सार्थवेदवेदनं दाननिमित्ततयोक्तम्। अत्र तु स्वरूपमात्रवेदनमिति विवेकः। श्रोत्रियश्चेदागतो यश्च अश्रोत्रियो ऽपि वा ज्ञातिरनृत्विक् सम्बद्धः प्रसृतः स्यात् ताभ्यां यां दक्षिणां ददाति यां स विद्यामित्यादि पूर्ववत्। तत्राश्रोत्रियो ग्राम-वैदिकीमपि गान्धर्वविद्यां वेद तामाप्नोतीति द्रष्टव्यम्॥

यां ज्येष्ठाय यया स देवतया ज्यैष्ठ्यं गच्छति तां तयावरुन्द्धे । ९ ।

ज्येष्ठः ग्राममहत्तरः । तस्मा अभ्यागताय दद्यात् । स यस्या देवतायाः प्रसादाज्ज्येष्ठतां जग्मिवांस्तामाप्नोति ॥

यामार्षेयाय विदुषे स्वर्गं तया लोकमाप्नोति । १० ।

आर्षेयो व्याख्यातः । तस्य च विद्याविदे दद्यादित्यनेनैव सिद्धत्वात् आदरार्थः पुनरुपन्यासः ॥

यामन्यो दीयमानां न कामयेत यं द्विष्यात्तस्मै दद्यात्सहान्येन धनेन । ११ ।

यां दीयमानामेको ऽपि न कामयेत नेच्छेद्ग्रहीतुं तां धनान्तरेण सह द्वेष्याय दद्यात् ॥

यत्प्रतिनुत्तां दक्षिणां गोषु चारयेत्प्रति वा गृह्णीयात्सलावृक्येनं भूत्वा प्रक्षिणीयात्* । १२ ।

तामेवं सर्वैः प्रत्याख्यातां गां यदि गोभिः सह चारयेत् स्वीकुर्याद्वा पृथक् चारयिष्यामीति सा श्विता भूत्वैनं दंशेत् । अतस्तां द्वेष्यायैव दद्यात् ॥

यामदानीयाय दक्षिणां ददाति तामस्य पशवो ऽभ्य-

* () प्रक्षीणीयात् ।

पक्रामन्ति। यदि मन्येतादानीयायादामिति न म इदमुपदम्भिषगि*त्येतद्यजुर्जपेन्नां वा दद्याद्ब्राह्मणाय ।१३।

अदानीयः दानायोग्यः। तस्मै तां दक्षिणां दत्त्वा तामनु पशवो ऽस्मादपक्रामेयुः। अतस्तद्दानशङ्कायां प्रायश्चित्तमेतत्कुर्यात्। न म इदमित्यृच्यपि यजुःशब्दो यजुःशाखाम्नानात्॥

यदा मरुत्वते ऽनूक्तमथ न देयं न प्रतिगृह्यम्।१४।

यदा मरुत्वते ऽनूक्तं अनुवाक्योक्ता भवति ततः परं न देयं यजमानेन न च प्रतिग्राह्यमितरैः॥

अनूबन्ध्यावपायां हुतायां दद्यात्प्रति च गृह्णीयुः।१५।

गतः॥

नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति हरिणस्य रघुष्यतो† ऽधि शीर्षणि भेषजम्। स क्षेत्रियं विषाणया विषूचीनमनीनशत्॥ अनु त्वा हरिणो मृगः पड्भिश्चतुर्भिरक्रमीत्। विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं हृदि मनो यदस्य गुल्फितमित्येताभ्याम्।१६।

* दम्भिषक् instead of दम्भिषत्. About this transition of final *t* in *k* cf. Weber, Indische Studien IV, 248, 412, XIII, 108-110.

† Sic! Only DE have रघुष्यदः like Atharva Veda 3. 7. 1.

एताभ्यामृग्भ्यां प्राश्नाति। नीतासु दक्षिणास्विति वचनं ब्राह्मणानुकरणार्थम् ॥

यज्ञपतिमृषय एनसाहुरित्याग्नीध्रीये पञ्च वैश्वकर्मणानि हुत्वा । १७ ।

इति सप्तमी कण्डिका ।

मरुत्वतीयाभ्यां प्रचरतः । १ ।

तत्र यज्ञपतिं घोरा ऋषयो ऽनन्यान् ये भक्षयन्तो नमः पितृभ्य इति पञ्चेति भारद्वाजः ॥

इन्द्राय मरुत्वते ऽनुब्रूहीन्द्राय मरुत्वते प्रेष्येति संप्रैषौ सानुवषट्कारावननुवषट्कारौ वा। अन्यतरो वा सानुवषट्कारः। द्विदेवत्यवत्संपातौ च्यवनीयाभक्षितेन पात्रेणाध्वर्युस्तृतीयं मरुत्वतीयं गृह्णाति। मरुत्वाँ इन्द्रेति ग्रहणसादनौ। प्रतिप्रस्थाता हरति भक्षम्। उभावध्वर्यू प्रतिभक्षयतः । २ ।

व्याख्याताः ॥

एतत्पात्रमादायैन्द्राग्नवच्छस्त्रप्रतिगरो ग्रहनाराशंसाश्च । ३ ।

ऐन्द्राग्नातिदेशप्रयोजनं प्रतिगरार्थं पात्रधारणं नाराशंससादनं च ॥

माहेन्द्रं शुक्रपात्रेण गृह्णाति । महाँ इन्द्रो य ओजसेति ग्रहणसादनौ । ४ ।

उत्तरो ऽप्यनुवाको ग्रहणे विकल्प्यते. तादर्थ्यादाम्नानस्य । बौधायनस्त्वाह. अथ चेद्बृहत्पृष्ठो महाँ इन्द्रो नृवदित्येतयेति ॥

माहेन्द्रस्य स्तोत्रमुपाकरोति । ५ ।

गतः ॥ अत्र तार्तीयसवनिकानां सवनीयानां निर्वाप उक्तो बौधायनेन । तच्च दर्शितमेव प्राक् । भारद्वाजादयस्त्वाहुः. अत्र तार्तीयसवनिकमभिषवमभिषुणुयात्. सवनीयान्सौम्यमिति निर्वपेत्. आशिरमवनयेदित्येके. हतीयसवन इत्यपरमित्यादि ॥

स्तुते वैश्वदेववच्छस्त्रप्रतिगरो ग्रहनाराशंसाश्च । ६ ।

वैश्वदेववदिति वचनात् पाञ्चवर्णं प्रतिगरः । सर्वभक्षाश्च समा भवन्ति ॥

माहेन्द्रं त्वतिग्राह्या अनुहूयन्ते । ७ ।

हुते माहेन्द्रे पश्चादतिग्राह्यान् सधर्मेण जुह्वति. न तस्य वषट्कारे । कुतः । अनुहूयन्त इति वचनात्. उक्थ्या यज सोमस्येति चैकवचनात्. देवताभेदाच्च ॥

सहैवाध्वर्युणाग्नेयं प्रतिप्रस्थातादत्ते । ऐन्द्रं नेष्टा । सौर्यमुन्नेता । ८ ।

ग्रहांस्तु माहेन्द्रेण सहैवाददते ॥

अग्ने तेजस्विन्नित्याग्नेयं प्रतिप्रस्थाता हुत्वा तेजो-

विद्सीत्यनुमन्त्रयते। इन्द्रौजस्विन्नित्यैन्द्रं नेष्टा हुत्वौ-जोविद्सीत्यनुमन्त्रयते। सूर्य भ्राजस्विन्निति सौर्यमुन्नेता हुत्वा सुवर्विदसीत्यनुमन्त्रयते। ९।

अनुमन्त्रयते हुतमिति शेषः॥

तान्हुत्वा सदसि प्रत्यङ्मुखा भक्षयन्ति मयि मेधा-मित्येतैः स्वंस्वं यथालिङ्गम्। १०।

धिष्णियान्होतारं चानतियन्तः सदस्यासित्वान्योऽन्यमुपहूय भक्षयन्त्ये-तैरेव मन्त्रैः॥

तथैवोक्थ्यविग्रहाः। ११।

उक्थ्यस्य विग्रहाः पर्यायाः, ते तथैव कार्याः यथा प्रातःसवने॥

एतावन्नाना। इन्द्राय त्वेन्द्राय त्वेति सर्वत्र ग्रहण-सादनौ संनमति। १२।

इन्द्राय त्वा जुष्टं गृह्णामीति सर्वत्र संनामः॥

उक्थं वाचीत्याह माध्यंदिनं सवनं प्रतिगीर्य शस्त्रं-शस्त्रं वा। विश्वे देवा मरुत इति संस्थिते सवन आहुतिं जुहोति। १३।

व्याख्यातौ प्रातःसवने॥

तथैव संप्रैषः सर्पणं च। १४।

प्रशास्तः प्रसुवेति संप्रैषः. सर्पतेत्यनुज्ञा. निःसर्पणं चेति चितयं समानं प्रातःसवनेन ॥

संतिष्ठते माध्यंदिनं सवनम्। १५।

गतः ॥

इत्यष्टमी कण्डिका।

इति द्वितीयः पटलः।

आदित्यारम्भणं तृतीयसवनम्। १।

आदित्यग्रह आरम्भो यस्य तदादित्यारम्भणम्। विस्पष्टार्थं वचनम् ॥

हविर्धानस्योभे द्वारौ संवृत्य वेद्यां बहुजनायाम्। २।

सोमं गृह्णातीति वक्ष्यमाणेन संबन्धः ॥

यदि वास्य भ्रातृव्यः प्रसृप्तः स्यादन्तर्वेदि सति गृह्णीयात्। ३।

यद्यपि जनतया सह भ्रातृव्योऽपि प्रसृप्तः स्यात्तस्मिन्नप्यन्तर्वेदि स्थित एव गृह्णीयात्. न त्वपनुदेत् ॥

भ्रातृव्ययज्ञे तु गृह्यमाण आदित्ये बहिर्वेदि तिष्ठेत्। ४।

भ्रातृव्ययज्ञे गतस्त्वादित्यग्रहणदशायां बहिर्वेदि ॥. १॥

आदित्यपात्रेण य आदित्यस्थाल्यां द्विदेवत्यग्रहसंपातास्तेभ्यः सोमं गृह्णाति कदा चन स्तरीरसीति।५।

गतः॥

कदा चन प्रयुच्छसीति शृतातङ्क्यं दधि।६।

यदादित्यग्रहार्थं दधि तद्गृह्णात्युपयामेन॥

यज्ञो देवानामिति पुनः सोमं गृहीत्वा विवस्व आदित्येति तस्मिन्ग्रावाणमुपांशुसवनमवधाय तेनैनं मेक्षयित्वा।७।

न सादयतीति वक्ष्यमाणेन संबन्धः। मेक्षयित्वा लोडयित्वा॥

या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृतातङ्क्येन दध्ना पयसा वा वृष्टिकामस्य श्रीत्वा ग्रावाणमुद्गृह्णाति।८।

अयमर्थः। वृष्टिकामस्य तु न मथ्यतो दधि गृह्णाति, तेनैव तु दध्ना पयसा वा तयैवर्चानुपयामया, ततो ग्रहं श्रीत्वा पूर्ववच्च मेक्षयित्वा ग्रावाणमुद्गृह्णातीति। तत्र चैवं विज्ञानमुपेयादित्याह॥

यद्युद्गृहीतस्य ताजग्बिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्यात्। यदि चिरमवर्षुकः।९।

ताजक् सद्यः। यदि चिरं प्रस्कन्देदित्यन्वयः॥

न सादयति।१०।

पद्ममिति शेषः। ग्रावाणं तु सादयत्येव कार्यापवर्गात्। तथा उपांशुसवनं ग्रावस्वपि सृजतीत्येव बौधायनः॥

यदि कामयेत गर्भान्पशवः स्नीव्येयुरित्युद्दृह्यादित्यमवेक्षेत। ११।

स्नीव्येयुरिति रेफश्छान्दसः प्रामादिको वा. बालगर्भान्स्नीव्येयुः जरायुं छित्वा स्रावयेयुरित्यर्थः। यतो ऽयं दोषस्ततो नोद्गृह्य ग्रावाणं पद्ममीक्षेतेति भावः॥

दर्भैर्हस्तेन वापिधायोत्तिष्ठति सूर्यो मा देवो देवेभ्यः पात्विति। १२।

गतः॥

अह्नं परस्तादित्यादित्यं यजमानो ऽन्वारभत आ होमात्। १३।

अभिविधावाकारः॥

कविर्यज्ञस्य वितनोति पन्थामिति हरति। १४।

गतः॥

आ समुद्रादिति दर्भैराच्यावयति। १५।

आच्यावयति यथा दर्भैर्बिन्दवश्च्यवेरन् तथा चालयति॥

इति नवमी कण्डिका।

आदित्येभ्यो ऽनुब्रूहि प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य आदित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति संप्रैषौ । आदित्येभ्यो ऽनुब्रूह्यादित्येभ्यः प्रेष्येति वा । १ ।

गतौ ॥

यास्ते विश्वाः समिधः सन्त्यग्न इति दर्भानाहवनीये प्रास्यान्यवेक्षमाण आदित्यं जुहोति । २ ।

दर्भानमन्त्रेण प्रास्य तूष्णीं जुहोति ॥

उन्नम्भय पृथिवीमिति वृष्टिकामस्य जुहुयात् । ३ ।

गतः ॥

न हुत्वान्वीक्षेत । ४ ।

हुतमपि न वीक्षेत ॥

सदवदादित्यपात्रमायतने सादयित्वादाभ्यांशुमुपांशुपावनौ यश्चोपांशुपात्रे ऽंशुस्तानृजीषे ऽपिसृज्य प्रातःसवनवन्महाभिषवः । ५ ।

प्रातःसवनवदिति वचनात् निग्राभ्यकरणं द्वाद्वद्वेत्यभिषवमन्त्रश्च निवर्तते । तूष्णीं त्वभिपूर्यते होतृचमसः ॥

ऋजीषत्वेवाभिषुण्वन्ति । ६ ।

पूर्वयोः सवनयोर्यदृजीषं तदेवाभिषुण्वन्ति ॥

पयस्यावर्जं सवनीयाः। ७।

अभिषुते राजनि ग्रावसूपोढे च ऋजीषे सवनीयान्निर्वपति। कल्पान्तरकारमते तेषां माहेन्द्रस्य* स्तोत्र उपाकृते निर्वापस्तत्रैव दर्शितः ॥

आग्नीध्रे पत्न्याशिरं मथित्वापरया द्वारा हविर्धानं प्रपादयति। पूर्वया गतश्रियः। ८।

पत्नीवद्भत्वे मुख्या प्रपादयति ॥

पूर्वया यजमानः प्रपद्यते। ९।

गतः ॥

पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य तस्मिन्यजमानः पुरस्तात्प्रत्यङ्तिष्ठन्सह पत्न्याशिरमवनयत्यस्मे देवासो वपुषे चिकित्सतेति चतसृभिः। १०।

चतसृणामन्तेऽवनयः। बौधायनस्त्वाह. आशिरमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति चतसृभिरनुच्छन्दसमिति ॥

ग्रहकाल आग्रयणमेव चतसृभ्यो धाराभ्यः। ११।

द्रोणकलशप्रतिष्ठापनाद्या धारायाः कृत आग्रयणमेव गृह्णाति ॥

* । मरुन्द्रस्य.

आग्रयणादुत्सिच्य द्वितीयां धारां करोति। आदित्यस्थाल्यास्तृतीयाम्। आदित्यग्रहसंपाताच्चतुर्थीम्। १२।

आदित्यपात्रस्थात्पूताच्चतुर्थी धारा ॥

उक्थ्यश्चेद्ध्रुवोक्थ्यं गृह्णाति। १३।

उक्थ्यसंस्थश्चेत्क्रतुस्ततोक्थ्यं गृह्णाति ॥

विरमति धारैकधनानां यथार्थमित्येतदादि माध्यंदिनवत्। १४।

माध्यंदिनवदिति वचनात् पञ्चहोत्रनन्तरं ग्रहावकाशास्ततंकाराः ऽ! वैप्रुषाः ततः सर्पणम् ॥

इति दशमी कण्डिका।

जागतः पन्था आदित्या देवताहकेणापरिपरेण पथा स्वस्त्यादित्यानशीयेति सर्पणे विकारः। आयुषे हिङ्कुरु तस्यै* प्रस्तुहि तस्यै स्तुहि तस्य मे ऽवरुद्ध्या इति पुरस्तादार्भवात्पवमानाद्यजमानो जपति। पञ्चहोतारं सप्तहोतारं वा व्याचष्टे। आयुवै† हिङ्कुरु तस्यै प्रस्तुहि

* Sic! Cf. XIII. 3. 1.

† Corrected; the MSS. have आयुर्वै.

तस्यै स्तुहि तस्यै मे ऽवरुद्ध्या इति च। स्तूयमाने च पञ्चहोतारं सप्तहोतारं वा जपति। मध्यमायां च स्तोत्रीयायां तृतीयमन्वारोहम्। स्तुते ऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति। १।

व्याख्याताः प्रातःसवने॥

अथ शलाकाभिर्ज्वलतो धिष्णियान्विहृतान्न व्याघारयेत्। उपरिष्टाद्व्याघारणम्। २।

अथ शलाकाभिर्ज्वलतो धिष्णियान्विहरेत् न तु तान्व्याघारयेत्. यस्मात्तदुपरिष्टात्करिष्यते॥

शृतं हवीः३ शमितरित्येतदादि पाशुकं कर्म प्रतिपद्यत एडायाः। ३।

तत्र प्रतिप्रस्थातः संवदस्वेति प्रैषात् शामित्रसंवादमात्रं प्रतिप्रस्थाता करोति. हृदयाभिघारणान्तं वा. तदर्थत्वादभिप्रव्रजनस्य॥

दक्षिणेन हविर्धानं समवत्तं हरति। उत्तरेण वा। ४।

समवत्तं इडा। तां हरति होत्रे॥

प्राशितायामिडायां सवनीयाद्या नाराशंसानां सादनात्। ५।

सवनीयचर्यादि समानं माध्यंदिनेन॥

तच विकारः। तृतीयस्य सवनस्येन्द्राय पुरोडाशानामिति संप्रैषादौ नमति। ६।

सवनीयार्थयोः संप्रैषयोरादौ नमति ॥

इत्येकादशी कण्डिका।

प्रचरणकाले होतृचमसमध्वर्युरादत्ते। चमसांश्चमसाध्वर्यवः। १।

गतः ॥

आश्राव्य प्रत्याश्राविते संप्रेष्यति। तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमानिति संप्रैषादिः। २।

माध्यंदिनीयेन सवनमुखसंप्रैषेण व्याख्यातः ॥

अथ चमसाञ्जुहोति। ३।

सह चमसान्तरैर्होतृचमसं जुहोतीत्यर्थः ॥

श्येनाय पत्वने स्वाहेति वषट्कृते जुहोति। वट् स्वयमभिगूर्ताय नमः स्वाहेत्यनुवषट्कृते। ४।

अध्वर्योरेव मन्त्रः। चमसाध्वर्यवो ऽप्यच दक्षिणतो ऽवस्थिता जुह्वति.

प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनाविति प्राक्त्वस्य शुक्रामन्थिसंयोगात् ॥

हुत्वा हरति भक्षम्। ५।

एवं हुते प्रैतु होतुरिति संप्रैषे चोक्ते मध्यतःकारिभ्यः सह चमसाध्वर्युर्हरति भक्षमित्यर्थः॥

एवमुत्तरैः प्रचरति। ६।

उत्तरैर्होत्रकचमसैः ॥

एतावन्नाना। पूर्वेणपूर्वेण मन्त्रेण वषट्कृतेवषट्कृते जुहोति। उत्तरेणोत्तरेणानुवषट्कृते। ७।

विष्टम्भाय धर्मण इत्यादयः पूर्वे मन्त्राः, नट् स्वयमभिगूर्तायेति सर्वत्रोत्तरः ॥

तृम्पन्तां होत्रा इति सर्वान्हुत्वा जपति। ८।

आग्नीध्रचमसे हुते जपति ॥

सन्नेषु नाराशंसेषु चमसिनः स्वंस्वं चमसमनूप्यन्ते त्रींस्त्रीन्पुरोडाशशकलानुपवपन्त एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम्। ९।

ततः सद एत्यायाड्ग्नीदित्यादि नाराशंससादनान्ते हुते चमसिनः स्वंस्वं चमसमनू। तस्य पश्चाद्दीर्घश्छान्दसः प्रामादिको वा। न्यन्ते समीपभूमौ हविःशेषस्य पुरोडाशस्य शकलान्प्राचीनावीतिनो निर्व-

पन्ति स्वेभ्यः पितृभ्य एव. न तु यजमानपितृभ्यः. तत पितामहेति लिङ्गात्। स्वेभ्यः पितृभ्य इत्येव कल्पान्तरकाराः॥

नमो वः पितरो रसायेति नमस्काराञ्जपन्ति। १०।

नमस्कारानिति वचनात् नमस्कर्तृन्तो जपन्ति॥

षड्ढोतारं यजमानो व्याचष्टे। ११।

गतः॥

प्रजापते न त्वदेतानीति प्राजापत्ययावतिष्ठन्ते। १२।

ततः सर्वे यज्ञोपवीतिनः स्वंस्वं देशं गत्वावतिष्ठन्ते॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

---

वाममद्य सवितरित्यन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहीत्वा न सादयति। १।

वाममद्य सवितरित्येतत्प्रदर्शनार्थमुत्तरयोरप्यनुवाकयोः. विकल्पार्थत्वात्त्रयाणामाम्नानस्य॥

देवाय सवित्रेऽनुब्रूहि देवाय सवित्रे प्रेष्येति संप्रैषौ। २।

गतः॥

नानुवषट्करोति। ३।

अनुहोमनिवृत्त्यभिप्रायो ऽनुवषट्कारप्रतिषेधः॥

एतेनैव सम्प्रैषेण वैश्वदेवं पूतभृतो गृह्णाति। ४।

एतेनैव पात्रेण॥

उपयामगृहीतो ऽसि सुशर्मासीति ग्रहणसादनौ। ५।

गतः॥

न स्तोत्रं भवति। ६।

षष्ठं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति स्तोत्रोपाकरणं प्राप्तं प्रतिषिध्यते, पवमानस्तोत्रत्वात्प्रथमशस्त्राणाम्॥

वैश्वदेवं प्रतिगृणाति। ७।

शस्त्रमिति शेषः॥

प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्यभिज्ञायोभयतो मोदं प्रतिगृणाति मदा मोद इव, मोदा मोद इवेति। ८।

मदा मोद इवेत्यर्धर्चेषु, मोदा मोद इवेत्यवसानेषु। स एष उभयतो मोदः॥

अन्यतरतो मोदं वा मदा मोद इव, ओथा मोद इवेति। ९।

अर्धर्चेषु मदा मोद इवेति भवति. अवसानेषु तु यथापूर्वं ओथा मोद इवेत्यर्थः ॥

व्यवहितमेके समामनन्ति मदा मोद इव. ओथा मोद इव. मोदा मोद इवेति। १०।

प्रथमे तावदर्धर्चे मदा मोद इव. ततो ऽवसाने ओथा मोद इव. ततो द्वितीये ऽर्धर्चे मोदा मोद इव। एवमुत्तरास्वपि द्रष्टव्यम् ॥

आ व्याहावात्। ११।

स एष त्रिविधो ऽपि प्रतिगरविकारः प्रागनन्तराद्व्याहावात्। ततः परं तु यथापूर्वमेव प्रतिगरः। शोंसावोमिति शब्दो व्याहावः ॥

नियुद्भिर्वायविह ता विमुञ्चेत्यभिज्ञाय प्रतिप्रस्थाता द्विदेवत्यपात्राणि वायवौ विमुञ्चत्विति विमुच्यापरया द्वारा निर्हृत्य मार्जालीये प्रक्षाल्य पूर्वयातिहृत्य यथायतनं सादयति। १२।

स्थानादपादानं विमोकः ॥

वैश्वदेववन्नहनाराशंसाः। १३।

वैश्वदेववदिति वचनात् सर्वभक्षाश्समा भवन्ति ॥

सौम्यस्य चरोस्तन्त्रं प्रक्रमयति। १४।

पात्रसंसादनादि तन्त्रं प्रक्रमयति। तत्र यावता हविषो निष्पत्ति-

स्तावदेव क्रियते. नेतरदङ्गजातं. पाशुकस्यैव प्रसङ्गसिद्धेः । भारद्वाजादिमतात् माहेन्द्रस्य स्तोचकाल एवास्य निर्वापो निदर्शित एव प्राक् ॥

व्याख्यातश्चरुकल्पः । १५ ।

व्याख्यातो ऽस्य ब्राह्मणे चरुकल्पः । तस्मात्तथैव स कार्यो न तूष्णीक इत्यर्थः । ननु कः प्रसङ्गः । अस्ति परमतात् । यथोक्तं बौधायनेन. सौम्यस्य मन्त्रोमन्त्र इति मन्त्रवान्स्यादिति बौधायनः. तूष्णीक इति शालीकिरिति ॥

अर्पयित्वा प्राचीनावीती सौम्येन प्रचरति । १६ ।

अर्पयित्वामाद्य ततः प्राचीनावीती भूत्वा प्रचरति ॥

हस्तेन प्रथममवदानमवद्यति । मेक्षणेनोत्तरम् । एतद्वा विपरीतम् । १७ ।

गतः ॥

दक्षिणतो ऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्नाश्राव्य प्रत्याश्राविते संप्रेष्यति सौम्यस्य यजेति । १८ ।

अग्रेणाहवनीयं दक्षिणतो गत्वावदायापरेणाहवनीयमुदङ्ङतिक्रम्य यजति ॥

वषट्कृते दक्षिणार्धे जुहोति । १९ ।

गतः ॥

आज्येनोपांशूभयतः सौम्यं परियजति । अन्यतरतो वा । २० ।

आज्येन यथाप्रकृति यजति । तस्य तूपांशुयाजधर्मकत्वादेवोपांशुत्वे सिद्धे पुनर्वचनात्सर्वोपांशुत्वं बोद्धव्यम् ॥

आश्राव्य प्रत्याश्राविते संप्रेष्यति घृतस्य यजेति । २१ ।

गतः ॥

वषट्कृते हुत्वा प्रत्याक्रम्याज्येन चरुमभिपूर्य । २२ ।

इति त्रयोदशी कण्डिका ।

उद्गातृभ्यो हरन्ति । १ ।

प्रत्याक्रम्याभिपूरणमेव यथा स्यात् मा भूत्स्विष्टकृदादि शेषकार्यमिति प्रत्याक्रमणवचनम् । हरन्तीति बहुवचनं हर्तृविशेषानादरार्थम् ॥

तमुद्गातारो ऽवेक्षन्ते सचो न एतद्यदु न इहेति । २ ।

केचित्तु कल्पकारात्सदवेक्षणमाध्वर्यवे ऽप्याम्नातमित्यध्वर्यूणामपीच्छन्ति, तन्निरासार्थमुद्गातृकर्मवचनम् । यत्तूक्तमाध्वर्यवे अवेक्षन्ते पवित्रं वै सौम्य इति तदप्युद्गातृकर्मैव प्रसङ्गादुक्तमिति भावः ॥

य आत्मानं न परिपश्येदाज्येनाभिदधिं कृत्वावेक्षेत । ३ ।

तेषु यस्तस्मिन्नाज्ये प्रतिबिम्बितमात्मानं न परिपश्येत्स पुनराज्येनाभिदर्दिं कृत्वावेक्षेत । को ऽयमभिदर्दिर्नाम. दर्दिः दानं. उपरिदानं अभिदर्दिः । तदुक्तं बौधायनेन. अभिदर्दिं कृत्वावेक्षेत. तस्मिन्भूय आज्यमानीयावेक्षेतेति ॥

**यो गतमनाः स्यात्सो ऽवेक्षेत यन्मे मनः परागतमिति । ४ ।**

यो ऽन्यो ऽपि कश्चिद्गतमनाः शून्यहृदय इव भवति सो ऽप्यवेक्षेत. न गतमना भवति ॥

**अथ पुनः शलाकाभिर्ज्वलतो धिष्णियान्विहृतानाज्येनैवाष्टगृहीतेन व्याघारयति । ५ ।**

अष्टगृहीतेनेति वचनादेको न व्याघार्यः. स चावनीयः. आग्नीध्रीयमादितो ऽन्ततश्चेति लिङ्गात् ॥

**यद्येनं ब्रूयादाग्नीध्रीयं मे पुनर्व्याघारयेति नवगृहीतं गृहीत्वाग्नीध्रीयमादितो ऽन्ततश्च व्याघार्य धारयति धिष्णियानाज्यशेषं च । ६ ।**

यद्येनमेवं ब्रूयादाग्नीध्रस्तदास्य धिष्ण्यमन्ततो ऽपि व्याघारयति. न चादित एव द्विः । सकृद्व्याघारणं ऽप्यवशिष्टमेव धारणं धिष्ण्यान्ययोः ॥

**उपयामगृहीतो ऽसि बृहस्पतिसुतस्य त इत्युपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहीत्वा न सादयति । ७ ।**

अग्निः पत्नीवानस्य देवतेति पात्नीवतः ॥

व्याघारणप्रैषेण श्रौत्वाश्राव्य प्रत्याश्राविते संप्रेष्यत्यग्नीत्पात्नीवतस्य यजेति। अग्ना३इ पत्नीवा३ इति वषट्कृते जुहोति। ८।

गतौ ॥

नानुवषट्करोति। ९।

पात्नीवतमित्यनेनैव सिद्धस्याप्यनुवषट्कारविधित्सयानुवादः ॥

अपि वोपांश्वनुवषट्कुर्यात्। १०।

गतः ॥

ततः संप्रेष्यत्यग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतुश्चमसमनून्नय होतृचमसे ध्रुवायावकाशं कुरूद्गात्रा पत्नीं संख्यापयाप उपप्रवर्तयेति। ११।

उपस्थः अङ्कः. तमासीद तत्र निषीद भक्षणार्थम्। पत्नीमुदानय उद्गातृसमीपे। होतुश्चमसमन्वितगानुन्नय। तथोन्नय होतृचमसं यथा ध्रुवस्यावनीतस्यावकाशः स्यात्। नेष्टः पत्नीमुद्गात्रा संख्यापय समीक्षय वक्ष्यमाणे काले। पत्नि* त्वमपि तदाप ऊरुणोपप्रवर्तय ॥

संप्रैषवत्कुर्वन्ति। १२।

गतः ॥

---

* Corrected . the MSS. r

अन्तरा नेष्टारं धिष्णियं चाग्नीध्रो व्यवसृप्य भक्षयति । १३ ।

नेष्टृतद्धिष्ण्ययोर्मध्यत आसीनो भक्षयति ॥

अग्निपीतस्येति भक्षमन्त्रं संनमति । १४ ।

यथादेवतं भक्षमन्त्रं संनमति ॥

इति चतुर्दशी कण्डिका ।

---

नोपस्थ आसीत । यदुपस्थ आसीत पण्डकः स्यात् ।१।

पण्डकः क्लीबः । ननु पूर्वं नेष्टुरुपस्थमासीदेत्युक्तं, इदानीं तु नोपस्थ आसीतेत्युच्यते । तत्कथमुभयमप्युद्दिश्यते । सत्यमुभयं दुर्घटम् । अत एव विरोधाद्विकल्पो भविष्यति, यथोक्तं हिरण्यकेशिना, अन्तरा व्यवसृप्य भक्षयति, उपस्थे वा नेष्टुरासीन इति । तत्र यदा नोपस्थ आसीत तदा अग्नीन्नेष्टुरुपस्थमासीदेति संप्रैषाभ्यासोदाः ॥

होतृचमसमुख्यांश्चमसानुन्नयन्सर्वं राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्युब्जति । २ ।

व्याख्यातः ॥

यज्ञायज्ञियस्य स्तोत्रमुपाकरोति । ३ ।

यज्ञायज्ञियसामसंबन्धि स्तोत्रमुपाकरोतीत्यर्थः ॥

ज्वलयन्ति धिष्णियान्। ४।

गतः॥

सकर्णप्रावृता अवकर्णप्रावृता वा यज्ञायज्ञियेन स्तुवते। ५।

येषां स्तुतिसंबन्धः स्तोतृत्वेनोपगातृत्वेन वा ते सर्वे सह कर्णैर्विना वा कर्णैरवगुण्ठिता भवन्ति॥

ये प्रसृप्ताः स्युस्ते सर्वे ऽग्निष्टोममुपगायेयुः। ६।

ये सदः प्रविष्टास्ते सर्वे यज्ञायज्ञियमुपगायेयुः॥

सप्तहोतारं यजमानो व्याचष्टे। ७।

गतः॥

विश्वस्य ते विश्वावत इति हिङ्कारमनूद्गाता पत्नीं संख्यापयति। आ तिसृभ्यः स्तोत्रियाभ्यो ऽगन्देवानिति च। ८।

नेष्टेति शेषः। कस्मात्। नेष्टा पत्नीमुद्गात्रा संख्यापयतीति श्रुतेः। तत्र हिङ्कारे कृते नेष्टृचोदित उद्गाता पत्नीं पश्यति। एवमा तृतीयायाः स्तोत्रियायाः॥

पत्न्यप उपप्रवर्तयति दक्षिणेनोरुणा नग्नेन प्राचीरुदीचीर्वोरुभ्यामन्तरतः। ९।

एवं संख्याता पत्नी पश्चान्मुखी सती दक्षिणेनोरुणापोद्धृतवसनेन

पत्नेजनीरपः प्राचीरन्तरतः अभ्यन्तरं प्रवर्तयति गमयति. दक्षिणामुखी वा सत्युदीचीर्वा द्वाभ्यामूरुभ्यामित्यर्थः । अथवा ऊरुभ्यामन्तरत इत्यूर्वोरन्तरत इत्यर्थः ॥

ऊर्वोरुपप्रवर्तयेदित्येके । १० ।

ऊर्वोरेव वा हस्तेन प्रवर्तयति न तु ताभ्यामन्तरतो गमयतीत्यर्थः ॥

उपरि दूरमुदूहेदा वक्षणानामाविष्कर्तोः । अह्रीतमुखस्या जायत इति विज्ञायते । ११ ।

ययोरुसंधिर्नाविष्कृतः स्यात्तयापोदूहेद्दामः । तथा कृते अह्रीतमुखास्याः प्रजा जायते ॥

अभ्यग्र आग्निमारुतं प्रतिगृणाति । १२ ।

अभ्यग्रः त्वरितः ॥

आपो हि ष्ठा मयोभुव इत्यभिज्ञायापो विषिञ्चन्प्रतिगृणाति । १३ ।

अवस्कन्दयन्प्रतिगृणाति आपोहिष्ठीये ऋचे ॥

स्वादुष्किलायं मधुमाँ उतायमित्यभिज्ञायोभयतो मोदं प्रतिगृणाति मदा मोद इव. मोदा मोद इवेत्याथ्याहावात् । १४ ।

व्याख्यातो वैश्वदेवशस्त्रे ॥

सादनादि ध्रुवस्य न यजमानो मूत्रं करोत्याव-
मयनात् । १५ ।

निरोधाशक्तौ व्रतपत्नी ॥

इति पञ्चदशी कण्डिका ॥

भूतमसि भूते मा धा इति प्रतिप्रस्थाता ध्रुवमवेक्ष्य द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यञ्जलिना परिगृह्य विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्विति हृत्वा ध्रुवं ध्रुवेणेति पुरस्तात्प्रत्यङ्ङासीनो होतृचमसे ध्रुवमव-नयति । १ ।

गतः ॥

पुरस्तादुक्थ्यस्यावनीयः । मध्यतोऽन्ततो वा । २ ।

उक्थ्यं शस्त्रम् ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपादिति वा वैश्व-देव्यामृचि शस्यमानायाम् । ३ ।

वैश्वदेव्यां शस्यमानायामवनयति । कस्यां वैश्वदेव्यां. उत नोऽहि-र्बुध्न्य इत्यस्यां. अज एकपादित्यस्यां वेत्यर्थः । वैश्वदेव्यामिति वचनं वैश्वदेव्यामृचि शस्यमानायामिति ब्राह्मणव्याचिख्यासया ॥

परिधानीयायां वा सन्तच्छास्तायाम् * । ४ ।

आस्तायां शस्तायां. दीर्घश्छान्दसः ॥

मध्यमायामुत्तमायां वा । ५ ।

परिधानीयाया मध्यमे वचन उत्तमे वेत्यर्थः ॥

उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य । शस्त्वं-शस्त्वं वा । ६ ।

व्याख्यातः प्रातःसवने ॥

प्रचरणकाले होतृचमसमध्वर्युरादत्ते । चमसांश्च-मसाध्वर्यवः । आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते जुह्वति । भक्षान्हरन्ति । ७ ।

गतः ॥

होतृचमसमध्वर्युः प्रतिभक्षयति सुभूरसि श्रेष्ठो रश्मीनां प्रियो देवानां संसदनीयः । तं त्वा सुभव देवा अभिसंविशन्त्विषो ऽसि त्वेषो ऽसि नृम्णो ऽसि यज्ञो ऽसि व्रतो ऽसि स्वो ऽसि वारणो ऽसि तस्य त इषस्य त्वेषस्य नृम्णस्य यज्ञस्य व्रतस्य स्वस्य वारणस्य शूद्रस्य चार्यस्य च भुक्षिपीयेति । ८ ।

* Thus all MSS.

मन्द्राभिभूतिरित्यादीनां भक्षमन्त्राणां प्रत्याम्नायः ॥

यथा त्वं सूर्यासि विश्वदर्शत एवमहं विश्वदर्शतो भूयासमित्यादित्यं यजमान उपतिष्ठते । ९ ।

अत्राह सत्याषाढः । यद्यस्तमितः स्यादाहवनीयमेवादित्योपस्थानेनोपतिष्ठेतेति ॥

आयुर्मे इन्द्रियं धेह्यग्ने मे आगच्छत्वित्याहवनीयम् । १० ।

उपतिष्ठत इति शेषः ॥

यत्कामयते तस्य नाम गृह्णाति । ११ ।

यथा आयुर्मे इन्द्रियं धेहि पुत्रो म आगच्छत्वित्यादि ॥

आग्नीध्रीयजानङ्गारानाहरेत्येतदादि पाशुकं कर्म प्रतिपद्यते । १२ ।

गतः ॥

इति षोडशी कण्डिका ।

इति चतुर्थः पटलः ॥

परिधिषु प्रहृतेपून्नेता हारियोजनं गृह्णाति । १ ।

हरिरस्मिन्युज्यते प्रतिगमनायेन्द्रस्येति हारियोजनो ग्रहः । तं परिधिषु प्रहृतेषु गृह्णाति । ऊते च संस्रावे । कुत एतत् । परिधिप्रहरणाद्

न्तात्संस्रावस्य ॥ किं च वाजिनहारियोजनयोस्तावदेकल्पमधीमहे ब्राह्मणे. यथा प्रहृत्य परिधीञ्जुहोतीति। तच्च वाजिने व्याचख्यौ सूत्रकारः. परिधीन्प्रहृत्य संस्रावान्तं करोति। सत्याषाढस्त्वत्राणुक्तवान्. प्रहृतेषु परिधिषु संस्रावेण कृत्वा हारियोजनेन चरन्तीति ॥ अतो कृत एव संस्रावे हारियोजनः। तयोत्कर्षपक्षे वाजिनेनापीष्टैव हारियोजनमिच्छन्ति. कल्पननिष्पाद्यद्रव्ययोर्यागयोर्निष्पन्नद्रव्यस्यैवानुपप्रवृत्त्युपपत्तेः ॥

उपयामगृहीतो ऽसि हरिरसीति द्रोणकलशेन सर्वमाग्रयणं गृहीत्वा न सादयति। बह्वीभिर्धानाभिः श्रीत्वा शीर्षन्नधिनिधायोपनिष्क्रम्येन्द्राय हरिवते ऽनुब्रूहीन्द्राय हरिवते प्रेष्येति संप्रैषौ। धानासोमेभ्यो ऽनुब्रूहि धानासोमान्प्रस्थितान्प्रेष्येति वा। २।

गताः ॥

हरी स्थ हर्योर्धाना इति विक्रम्य वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम्। ३।

विक्रम्येति विविधं क्रमणं विक्रमणं. अग्रतः पृष्ठतश्च पादयोः करणमिति यावत्। अतिक्रमणविधिरेवायम्। यतो मन्यतानभिक्रम्य होष्यामीत्यस्यापवाद इत्यन्ये। तत्र वषट्कृते तूष्णीं विक्रम्य मन्त्रेण कृत्वा सदसि भक्षं हरति ॥

अपरेणोत्तरवेदिं द्रोणकलशं प्रतिष्ठाप्योन्नेतर्युप-

**हवमिष्ट्वा सर्वे हारियोजनं भक्षयन्तीष्टयजुषस्ते देव सोमेति । ४ ।**

अथवापरेणोत्तरवेदिं प्रतिष्ठाप्य तत्रागत्य सर्वे भक्षयन्ति । वाचनिको ऽत्र भक्षणलाभः सर्वेषाम् । ततोन्नेतापि सर्वान्क्रमादुपह्वयते मुख्या-न्प्रधिनस्तृतीयिनः पादिनो यजमानमिति । भक्षेहीत्यादि समानं सर्वेषाम् । इष्टयजुषस्त इति भक्षणमन्त्रः ॥

**असंभिन्दन्तो धाना निम्नानि कुर्वते । निम्नानि कृत्वा निरिव धयन्ति । ५ ।**

यथा धाना न संभिद्येरन् तथा दन्तैः संदश्य तासु निम्नानि कृत्वा निरिव धयन्ति*. ताभ्यो रसं निष्कृष्य पिबन्तीत्यर्थः ॥

**चिश्चिषाकारं भक्षयन्ति । ६ ।**

चिश्चिषाकारं चिश्चिषां कृत्वा. चिश्चिषेति शब्दानुकारः । तथा शब्दं कृत्वा निस्रुषयन्तो बहिर्वेदि निष्ठीवन्ति । निगिरन्तीत्यन्ये । तत आचामन्ति. धानाभक्षणेनोच्छिष्टत्वात् ॥

**कृष्यै क्षेमाय रय्यै पोषायेति भक्षयित्वा जपन्ति । ७ ।**

गतः ॥

**आपूर्या स्थामा पूरयतेत्युत्तरवेद्यां शेषा न्युप्य यन्म आत्मनो मिन्दाभूदिति मिन्दयाहवनीयमुपतिष्ठन्ते । ८ ।**

---

* Corrected according to the text of the sūtra; all MSS. of the commentary read निरवधयन्ति.

शेषा धानाः सर्वे ऽप्यादायोत्तरवेद्यां न्युप्य यन्म आत्मन इत्यनया मिन्द्रयोपतिष्ठन्ते. न पुनरग्निश्चक्षुरदादित्युत्तरया मिन्द्रया ॥

देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृतस्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमस्यात्मकृतस्यैनसो ऽवयजनमस्यन्यकृतस्यैनसो ऽवयजनमस्येनस एनसो ऽवयजनमसीत्याहवनीये शकलानभ्याधायैकधनपरिशेषेषु हरिणीर्दूर्वाः प्रास्य संशोम्नाय* तीव्रीकृत्य यथाचमसं व्यानीयापरेण चात्वालमास्तावे वा प्रत्यञ्चश्चमसिनः स्वंस्वं चमसरसमवघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव इति ।९।

प्रतिमन्त्रं शकलमेकैकमादधाति. अवयजनमसीति लिङ्गात् । एकधनपरिशेषेषु एकधनेषु घटेषु ये ऽपां शेषास्तेषु हरिणीः हरिता दूर्वाः प्रास्यन्ति चमसिनः। संशोम्नायेति पित्र्यायां व्याख्यातं. संप्रोम्मृद्येति† यावत्। तीव्रीकृत्येति दूर्वारसेनापां सक्तूणीकरणं तीव्रीकरणम्।‡ आस्तावो बहिष्पवमानदेशः। स्वंस्वं चमसरसमिति स्वस्वचमसस्थदूर्वारसमित्यर्थः ॥

इति सप्तदशी कण्डिका ।

---

* Cf. VIII. 16. 6.

† Corrected according to the commentary to VIII. 16. 6, the MSS. read here संप्रोम्भ्येति.

‡ The MSS. wrongly insert here, from the commentary to VIII. 16. 6, रसयोरविशेषः.

समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत। अरिष्टा अस्माकं वीराः सन्तु मा परासेचि नः* स्वम्॥ अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः। उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा न इत्यन्तर्वेदि शेषान्निनीय दधिक्राव्णो अकारिषमित्याग्नीध्रे दधिद्रप्सान्भक्षयन्ति । १ ।

दधिद्रप्सभक्षणं चमसिनामेव. नान्येषाम्। कुतः। चमसिन इत्यधिकारात्। सर्वेषां निनयनं. समानकर्तृकत्वात्. उत्तरत्र तानूनप्त्रग्रहणाच्च ॥

उभा कवी युवाना सत्या ता धर्मणस्पती। सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इति तानूनप्त्रिणः सख्यानि विसृजन्ते । २ ।

परस्परंद्रोहनियमविसर्गः सख्यविसर्गः ॥

पशुवत्पत्नीसंयाजाः । ३ ।

गतः ॥

स्तीर्णे वेदे जुह्वां नवगृहीतं गृहीत्वा धाता रातिरित्यन्तर्वेद्यूर्ध्वस्तिष्ठन्संततं समग्नौ नव समिष्टयजूंषि जुहोति । ४ ।

---

* Corrected; the MSS. read म. Cf. Lâṭyâyana S'r. S. 2. 1. 7.

जीर्णे वेद इति चिन्हुवदनुवादात् चिन्हमग्नीषोमीयप्रकृतिको ऽपि न पत्नीसंयाजान्तः सवनीय इति। तथा समानमा समिष्टयजुष इत्येव भारद्वाजः। नव गृहीत्वेत्याप्याय्य ध्रुवामन्ततः सर्वं गृह्णाति। संततमित्यविच्छिन्नधारतोक्ता। समग्न इति नवस्वपि धारासाम्यम्। तत्राद्येषु षट्सु प्रत्यृचं स्वाहाकारो देयः. परतस्तु द्वयोर्यजुषोः स्वाहान्त एव पाठः। अन्यत्तु प्रकृतावेव व्याख्यातम्॥

यं कामयेत पापीयान्स्यादित्येकैकं तस्य जुहुयाज्जिह्मस्तिष्ठन्। स्रुवेण वा विग्राहम्। ५।

एवंकामो जिह्मस्तिष्ठन्नवगृहीतैर्नवैकैकं जुहुयात्. न संततया धारया। स्रुवेण वा पृथग्गृहीतैरित्यर्थः॥ अतो ह्येवं होमे दोषस्तस्मात्संततमेव होतव्यमिति भावः॥

इदं तृतीयं सवनं कवीनामिति संस्थिते सवन आहुतिं जुहोति। ६।

संस्थिते सवन इति वचनात् समिष्टयजुषः परमपि कर्मशेषं समाप्य ततः सवनाहुतिः। तत्र पाण्डुकेन मन्होपवेषेण पौरोडाशिककपालोद्वासनमुत्कर्षपक्षे। तत्र चोपवेषाभिधायिनां पदानां द्विवदूहः. यथा यौ देवा उपवेषौ अकुरुतं उपविष्टं कुरुतमिति। भर्जनकपालविमोके तूहः पित्र्यायामेव दर्शितः। ततो हृदयशूलोद्वासनादि समानमा यूपोपस्थानात्। न यज्ञयज्ञमं चेति जपो न हरिरसीत्यपामुपस्पर्शनं सोमार्थयोरेव प्रसङ्गात्। ततः सोमग्रावक्षिप्तानि कृत्वा सवनाहुतिः। ततः प्रशास्तः प्रसुवेति संप्रैषो निःस-

र्यन्तं च। यदि तनूनप्त्र्यां करिष्यन्भवति तदा हृदयशूलोद्वासन-यूपोपस्थाने तत्रोत्कृष्यते इति विशेषः॥

अथ मेखलायाः कृष्णविषाणायाश्च चात्वाले प्रासनं वाजसनेयिनः समामनन्ति माहिर्भूर्मा पृदाकुरिति।७।

यदि प्राक्कृष्णविषाणा न प्रास्ता तदानेन मन्त्रेणैवोभे प्रास्येत्. न अन्यतराम्। तत्र मन्त्रस्यावृत्तिरेकलिङ्गत्वात्। अन्ये त्वाहुः. माहिर्भूरिति मेखलाया मन्त्रः. मा पृदाकुरिति कृष्णविषाणाया इति। तदयुक्तं. मा पृदाकुरित्यस्य विभक्तस्याख्याताकाङ्क्षिणो ऽपूर्णत्वात्. अध्यापाठेन कृष्णविषाणायामेव कृत्स्नविनियोगाच्च॥

अग्निना देवेन पृतना जयामीति यजमानो जागतान्विष्णुक्रमान्क्रामति।८।

सौमिका एते विष्णुक्रमा जागता नाम ये विष्णुतिक्रमैर्मन्त्रैः क्रम्यन्ते॥

सर्वैर्भिर्देवेभिः पृतना जयाम्यानुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना वषट्कारेण वज्रेण सर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदे ऽस्मिन्क्षये ऽस्मिन्भूमिलोके यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामीति चतुर्थमेके समामनन्ति।९।

विष्णुक्रममिति शेषः ॥

इन्द्रेण सयुजा वयमित्याहवनीयं यजमान उपतिष्ठते ।१०।

अनुवाकशेषेणोपतिष्ठते । यदापि न आगता विष्णुक्रमास्तदापि नित्यमुपस्थानम् ॥

इत्यष्टादशी कण्डिका ।

इति पञ्चमः पटलः ॥

---

अवभृथस्य तन्त्रं प्रक्रमयति ।१।

बर्हिराहरणादि तन्त्रं प्रक्रमयति वेदिपक्षे. परिस्तरणादि त्ववेदिपक्षे । नेध्मो भवत्युभयत्र . अर्थलोपात् ॥

वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्रयोगः ।२।

व्याख्यातः प्राक् ॥

निर्वपणकाले वारुणमेककपालं निर्वपति ।३।

समानमा निर्वपनात् । ततो वारुणं निरुप्याज्यनिनयनान्ते कृते यदन्यद्दिभ्यात्पत्न्याश्च संप्रेष्यति वेदिपक्षे । अन्यत्र तु स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्येतावानेव संप्रैषः । समानमाज्यानां ग्रहणात् ॥

चतुर्गृहीतान्याज्यानि वारुणं चालंकृत्योत्तरवेद्यंस आसादयति । ४ ।

आज्यानि सर्वाणि चतुर्गृहीतान्येव भवन्ति । तत्र ये विशेषास्ते वरुणप्रघासेष्वेव दर्शिताः । आज्यानि गृहीत्वा पुरोडाशोद्वासनम् । यदापि वेदिस्तदापि वेदिप्रोक्षणादि परस्तादेव क्रियते वेदेरत्राभावात् । वारुणमुद्वास्यालंकरणमेव. नाभिपूरणादय एककपालधर्माः. अलंकृत्येति वचनात्. निष्कासवदित्यवदानातिदेशात्. स्विष्टकृदतिदेशाच्च । तमलंकृतं वारुणमाज्यानि चोत्तरवेद्यंसे तूष्णीमासादयति ॥

अत्र यजमान औदुम्बरीमुत्खिदत्युपसृजन्धरुणं मातरं मातरा* धरुणो धयन्निह पुष्टिं पुष्टिपतिर्नियच्छतु रायस्पोषमिषमूर्जमस्मासु दीधरदिति । ५ ।

उत्खिदति उत्पाटयति ॥

तामधिषवणचर्मफलके सर्वाणि च सोमलिप्तान्यन्तरा चात्वालोत्करावुत्तरे वा वेद्यंस औदुम्बर्यामासन्द्यां सादयति । अन्यत्र चतसृभ्यः सोमस्थालीभ्यः । ६ ।

आसन्द्यां राजासन्द्याम् ॥

अव ते हेडो वरुण नमोभिरिति यजमानश्चात्वाले कृष्णाजिनं प्रास्यति । ७ ।

---

* Sic, cf. Vâjas. Saṃh. 8. 51.

गतः॥

पुनर्वैनेन दीक्षेत वसीत वैनद्धस्तां* वैनत्सुषामव-धानार्थां कारयेत्। हविरवहननार्थं वा स्यात्।८।

पुनरुपयोगपक्षे न चात्वाले प्रास्यति। भस्ता भस्त्रा. वर्णव्यत्ययश्छान्दसः। हविरवहननार्थमप्युलूखलाधिवर्तनार्थम्॥

अवभृथादुदेत्य पुत्राय ब्रह्मचारिणे वा दद्यादित्येके।९।

अवभृथात्पुनरेत्य पुत्राय ब्रह्मचारिणे वान्यस्मै दद्यात्॥

आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवेष्यञ्जुहुयात्। अवभृथ निचङ्कुणेति च।१०।

इत्येकोनविंशी कण्डिका।

नमो रुद्राय वास्तोष्पतय आयने विद्रवण उद्याने यत्परायण आवर्तने विवर्तने यो गोपायति तं हुव इति च।१।

आऊतिचयमेतद्यस्मिन्हविः अर्पितं तस्मिन्नप्याविच्छन्नि. आहत्याते वा एतद्यजमानो ऽग्निभ्यामिति लिङ्गात्. सत्याषाढमताच्च। न किञ्चायं सूत्रकृतो ऽभिप्रायः. विशेषावचनात्। तथा आह्वनीये जुहोत्यायुर्दा इति भारद्वाजः॥

* Thus all MSS.

उरुं हि राजा वरुणश्चकारेति वेद्या अभिप्रयान्तो वदन्ति। चात्वालाद्वा। २।

वेद्या निर्गच्छन्तो वदन्ति ॥

प्रस्तोतः साम गायेति। ३।

संप्रेष्यतीत्यध्याहारः सामर्थ्यात्। अथवा व्यवहितकल्पनया सर्वत्र संप्रेष्यतीति वक्ष्यमाणेन संप्रैषप्रकारेण नष्टाश्वदग्धरथवत्संबन्धः। तं च तत्रैव दर्शयिष्यामः ॥

सर्वे सहपत्नीकास्त्रिः साम्नो निधनमुपयन्ति। अर्धाध्वे द्वितीयम्। प्राप्य तृतीयम्। ४।

निधनं साम्नो ऽन्तिमा भक्तिः. तां त्रिरुपयन्ति त्रिराहुः। एवमध्वनो ऽर्धे द्वितीयपर्याये ऽप्युपयन्ति. तथा प्राप्यावभृथं तृतीये ॥

सर्वत्र संप्रेष्यति। ५।

यथा प्रथमे पर्याये संप्रैष उक्तः प्रस्तोतः साम गायेति तथोत्तरयोरपि संप्रेष्यतीत्यर्थः। अथवा व्यवहितेनापि प्रस्तोतः साम गायेत्यनेनैकसूत्रमेतद्योज्यं. परस्पराकाङ्क्षत्वात् उभयोर्योग्यान्वयत्वाच्च। तथा चायमर्थस्त्रिष्वेतेषु देशेषु एवं संप्रेष्यतीति ॥

सर्वा दिशो ऽवभृथगमनमाम्नातमित्येतदाद्या चर्यायाः। ६।

सर्वा दिशो ऽवभृथगमनमाम्नातमित्यादि यदुक्तं वरुणप्रघासेषु तत्स-

मानमचाष्या निष्कासप्रचारागात्। तत्र यतं ते राजन्निति प्रागुतीयात्संप्रैषादृष्टमाचास्वप्सु जपति ॥

**निष्कासवद्वारुणेन प्रचर्यापबर्हिषावनूयाजौ यजति। न वा।७।**

वारुणचर्या निष्कासचर्यया व्याख्याता. अनूयाजविकल्पो ऽपि तद्वदेवेत्यर्थः। तत्रानूयाजपक्षे ये विशेषास्ते ऽपि तत्रैव दर्शिताः. यथा अग्नीदपः सकृत्संमृड्ढीति संनामादयः ॥

**यत्ते ग्रावणाप्यायस्व सं त इति सौमीभिर्द्रप्सवतीभिः पञ्चभिः सप्तभिस्त्रयोदशभिर्वा दध्नौदुम्बरशाखयर्जीषं प्रोक्षति।८।**

यत्ते ग्रावणा आप्यायस्व सं त इत्याद्यन्तगद्दौते त्रयोदशर्चे अस्मिन्ननुवाके पञ्चभिः सप्तभिः सर्वाभिरेव वा प्रोक्षतीत्यर्थः। कथं तासां द्रप्सवत्त्वं. नह्यासु द्रप्सस्कन्देत्यादिवत् द्रप्सशब्दः श्रुतः। सत्यं. अर्थतस्त्वासां द्रप्सवत्त्वमुक्तं. न तु शब्दतः। तत्रास्त्येव. छिन्नभिन्नसोमावयवाप्यायनलिङ्गत्वादासां. यथा यत्ते ग्रावणा चिच्छिदुरङ्गानि यत्ते त्वचं बिभिदुरित्यादि ॥

**प्रहृत्य वाभिजुहुयात्।९।**

अप्सु प्रहृत्यर्जीषं तस्योपरि दध्ना जुहुयात्। आज्येनेति केचित्. तत्संधत्स्वाज्येनेति लिङ्गात्। तदयुक्तं. दध्नेत्यधिकारात्. प्रोक्षणपक्षवदेवाज्यशब्दस्य दध्न्यप्युपपत्तेश्च। तथा दध्नर्जीषमभिजुहोतीत्येव

सत्याषाढभारद्वाजौ। तत्र च प्रत्यृचमभिहोमः, यदेकया जुहुयाद्दर्विहोमं कुर्यादिति लिङ्गात्॥

ऋजीषस्य स्रुचं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति। १०।

स्रुचं प्रचरणीमन्यां वा लौकिकीमृजीषस्य पूर्णामप्सु निमज्जयति॥

ततो यो बिन्दुरुत्प्लवते तमुपस्पृशेद्भक्षयेद्वाप्सु धौतस्य सोम देव त इति। ११।

तत ऋजीषात् यो बिन्दुः बुद्बुदः उत्तिष्ठेत्तं स्पृशेद्भक्षयेद्वा। भक्षयामीति लिङ्गविरोधात् बौधायनमताच्चोपस्पर्शनेन मन्त्र इत्येके॥

समुद्रं वः प्रहिणोमीति सर्वाणि च सोमलिप्तान्यवभृथे प्रविध्यति। १२।

समुद्रं व इत्यस्या अच्छिद्रः प्रजयेत्युत्तरार्धर्चः॥

विचृत्तो वरुणस्य पाश इति यजमानो मेखलां विचचृते। इमं विष्यामीति पत्नी योक्त्रम्। १३।

विचचृते विस्रंसयति। विचचृत इति प्रमादपाठः, लेडर्थे वा लिड्द्रष्टव्यः॥

अथ योक्त्रमेखले वाससी जालं कृष्णाजिनं चावभृथे प्रविध्य। १४।

इति विंशी कण्डिका।

देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमज्जन्तौ स्नातः पत्नी यजमानश्च। १।

यथा स्वं योक्त्रावसनादुभौ प्रविश्यतः. अवभृथानुमन्त्रणं यजमानस्यैव. प्रगाहनादुभयोः। कृष्णाजिनस्यावभृथे क्षेपो ऽपि चात्वालप्रासनादिभिर्विकल्पते॥ अनुपमज्जन्तौ अनुपमज्जन्तौ। तथा अनुपमज्जन्तावित्येव बौधायनः। एतदुक्तं भवति. अनुपमज्जन्तावप्सूदकोत्क्षेपेण सशिरस्कौ स्नात इति। तथा च गृह्यधर्मेषु वक्ष्यति. सशिरावमज्जनमप्सु वर्जयेदिति। द्राह्यायणस्त्वेवाह. अप उपस्पृश्य शिरस्युच्येति। सत्याषाढस्त्वेवमेव स्नानमुक्त्वा पुनराह. प्रतीपमाप्लवमानौ गाहेते इति॥ केचित्तु व्याचक्षते. अनुपमज्जन्तौ अशोधयन्तावङ्गानि स्नात इति। तत्रेदं प्रष्टव्यं. किमर्वाक् स्नानादङ्गशोधनस्यायं प्रतिषेधो ऽत्यन्तस्य वेति। यद्यर्वाक् स्नानात् तदस्तु विरोधः। यद्यत्यन्तस्य तन्तु नाद्रियामहे। यथा च तदनादृत्यं तथोत्तरसूत्रे व्यक्तं भविष्यति॥

अन्योऽन्यस्य पृष्ठे प्रधावतः। २।

धावनं शोधनम्। तस्य स्वपृष्ठे स्वयं दुष्करत्वादन्येन कर्तव्यम्। कर्तृनियमार्थमिदं न तु धावनविधानार्थं. तस्येच्छाप्राप्तत्वात्. अनिच्छतो ऽपि त्रिः पादौ प्रक्षालयेत् त्रिरात्मानमित्यादिस्मृतिप्राप्तत्वाच्च। तथात्रापि नवनीतदीक्षादिजन्मनो ऽङ्गमलस्य शोध्यतामाह भारद्वाजः. यथा अत्रैव सर्वाणि दीक्षितवसनान्यपप्लावयत इति।

मन्त्रवर्णश्चात्र भवति. युक्ता दीक्षायै तपसो विमोचनीरिति।
तस्माच्छोध्यान्येव सर्वाण्यङ्गानि॥

यद्दिदीक्षे मनसा यच्च वाचा यद्वा प्राणैश्चक्षुषा यच्च श्रोत्रेण। यद्रेतसा मिथुनेनाप्यात्मनाद्भ्यो लोका दधिरे तेज इन्द्रियम्। शुक्रा दीक्षायै तपसो विमोचनीरापो विमोक्त्रीर्मयि तेज इन्द्रियम्॥ यदृचा साम्ना यजुषा पशूनां चर्मन्हविषा दिदीक्षे। यच्छन्दोभिरोषधीभिर्वनस्पतावद्भ्यो लोका दधिरे तेज इन्द्रियम्। शुक्रा दीक्षायै तपसो विमोचनीरापो विमोक्त्रीर्मयि तेज इन्द्रियम्॥ येन ब्रह्म येन क्षत्रं येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा। विश्वे देवा ऋषयो येन प्राणा अद्भ्यो लोका दधिरे तेज इन्द्रियम्। शुक्रा दीक्षायै तपसो विमोचनीरापो विमोक्त्रीर्मयि तेज इन्द्रियमिति शिरस्यञ्जलिना विषिच्योन्नेतर्वसीयो न उन्नयाभि। उदिन्नु वसुवित्तमा गिरः स्तोमास ईरते। सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव। कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुरिति यजमानः संप्रेष्यति। ३।

सर्वमन्त्रान्ते त्रिरपः शिरसि सिञ्चति मन्त्रभूयस्त्वे ऽपि. त्रिरिति

वचनात्. प्रतिमन्त्रमित्यवचनाच्च। उन्नेतरुदकादस्मानुन्नय उन्ना-रयेति संप्रैषार्थः ॥

इत्येकविंशी कण्डिका।

उदेत प्रजामायुर्वर्चो दधाना अध स्याम सुरभयो गृहेषु। गायत्रीं छन्दांस्यनुसंरभन्तामस्मान्राय उत यज्ञाः सचन्ताम्। सुप्रीतः सुवरप आविवेशेत्युन्नेतोन्नयति। १।

उन्नेता सर्वान्हस्ते गृहीत्वोन्नयति। सकृदेव मन्त्रः. उदेतेति लिङ्गात्। तत्र होतृप्रथमान्यजमानप्रथमान्वेति सत्याषाढभारद्वाजौ ॥

अहते वससावुदितः। २।

अहते वाससी वसित्वैव सलिलादुत्तरतः पत्नीयजमानौ ॥

सोमोष्णीषं यजमानः परिधत्ते। सोमोपनहनं पत्नी सोमपरिश्रयणं वा। ३।

क्षौमेणोपसंगृहीतः सोमो येन वेष्ट्यते तत्सोमोष्णीषम्। यत्र मितः सोम उपनह्यते तत्सोमोपनहनम्। येनान्ततः पर्याणह्यते तत्सोम-परिश्रयणम् ॥

ते उदवसानीयायामध्वर्यवे दत्तः। ४।

गतः ॥

उदयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यसित्वा समित्पाणय उन्नेतारं पुरस्कृत्याप्रतीक्षमायन्त्यपाम सोममिति महीयां वदन्तो यान्यपामित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि। इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्॥ अनृणा अस्मिन्ननृणाः परस्मिंस्तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आ क्षीयेमेति* च। ५।

अपाम सोममित्यृचः समाख्या महीयेति। तामुत्तरतो वदन्तः प्रतियन्ति। व्याख्यातः शेषो वरुणप्रघासेषु॥

एधो ऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते। ६।

व्याख्यातः पशौ॥

इति द्वाविंशी कण्डिका।

इति षष्ठः पटलः॥

प्रायणीयावदुदयनीया। १।

उदयनं उत्थानं. तदनयात्मशेषस्य यज्ञस्येत्युदयनीया। तस्याः सर्वः कल्पः प्रायणीयावत्॥

* Thus like Taitt. Br. 3. 7. 9. 9., चियेम Ath. V. 6. 117. 3.

तस्यामेव स्थाल्यामनिष्कसितायां* श्रपयति। तद्ब-र्हिः। तन्मेक्षणम्॥२॥

उक्तं प्राक्, प्राग्वंशे बर्हिः स्थालीमनिष्कसितां मेक्षणमित्युदय-नीयार्थं निदधातीति। तस्यामेव श्रपणं चरोः, निष्कसनमिदानी-मपि मा कारीति पुनरनिष्कसितग्रहणम्। बर्हिरपि तदेव, प्रस्तर-स्त्वन्य आहार्यः, प्रहृतत्वात्। दर्व्यपि सैवानिष्कसिता। तथा ये ऽन्ये ऽप्युदयनीयस्य विशेषास्ते ऽपि सर्वे प्रायणीयवैव† व्याख्याताः। पत्नीसंनहनं चात्रेष्यते, त्यक्तत्वात्पूर्वयोक्त्रस्य॥

शालामुखीये प्रचरन्ति॥३॥

प्राग्वंशिक एव विहारे कृत्स्नतन्त्रमित्युक्तं भवति॥

तेष्वेव देशेष्वग्निमाज्यभागानां प्रथमं यजति। पथ्यां स्वस्तिमुत्तमाम्॥४॥

यत्र देशे या देवता प्रागिष्टा तत्रैव तां यजति। अत्र त्वाज्य-भागानां देवतानां मध्ये ऽग्निः प्रथमो भवति। पथ्यां स्वस्ति-मुत्तमामिति विशेषः॥

याः प्रायणीयस्य याज्या इत्युक्तम्॥५॥

याज्यानुवाक्यानां विपर्यासो ऽपि ब्राह्मणोक्तो ऽनुसंधेय इत्यर्थः। शंय्वन्तेष्टिः संस्थाप्या वा॥

---

* L only •निष्कासितायां; cf. VIII. 11. 15 and the List of Errata.

† Thus all MSS.

मैत्रावरुणीं गां वशामनूबन्ध्यामालभते।६।

वशा बन्ध्या, यज्ञमनु बध्यत इत्यनूबन्ध्या॥

तस्या निरूढपशुबन्धवत्कल्पः।७।

गतः॥

मित्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि मित्रावरुणाभ्यां गोर्वपाया मेदसः प्रेष्येति संप्रैषौ।८।

वपायामिति शेषः। निगमेषु पश्वभिधाने गोशब्दस्यैव प्रयोगः, न उस्राशब्दस्य वशाशब्दस्य वेति॥

एवमवदानेषु हविष इत्यन्तौ नमति।९।

अङ्गावदानविषययोरपि संप्रैषयोरयमेव प्रकारः। तत्र तु हविष इति संनाम एव विशेषः॥

तिस्रोऽनूबन्ध्या एके समामनन्ति।१०।

गतः॥

मैत्रावरुणीं वैश्वदेवीं बार्हस्पत्यामिति।११।

स्पष्टम्॥

द्विरूपा मैत्रावरुणी। बहुरूपा वैश्वदेवी। रोहिणी बार्हस्पत्या।१२।

द्विरूपा द्विवर्णा। रोहिणी लोहितवर्णा॥

उपांशु वैश्वदेव्या मध्यतश्चरन्ति।१३।

उपांशुत्वमेवात्र विधेयं मध्यत इत्यनुवादः ॥

ता न सर्वत्रालभेत वाजपेये राजसूये सत्त्रे सहस्रे सर्ववेदसे वा ।१४।

ता न सर्वासु प्रकृतिषु विकल्पेनालभ्यन्ते. किं तु वाजपेयादिष्वेव विकृतिष्वित्यर्थः । प्रकृतावपि लभ्यन्त इत्यर्थः ॥

यः कामयेत सर्वो मे यज्ञः स्यात्सरस इति स एतास्तिस्रो ऽनूबन्ध्या आलभेत ।१५।

अनेन तु कामेन सर्वत्रैवालभेत । सरसः वीर्यवान् ॥

अनूबन्ध्यावपायां हुतायां दक्षिणे वेद्यन्ते यजमानः केशश्मश्रु वापयते ।१६।

गतः ॥

अनूबन्ध्यायाः पशुपुरोडाशम् ।१७।

इति त्रयोविंशी कण्डिका ।

---

देविकाहवींषि निर्वपति ।१।

पशुपुरोडाशमनुनिर्वपतीत्यर्थः. समानं तु स्विष्टकृदिडमिति लिङ्गात्। कान्येतानि देविकाहवींषि नाम. तान्याह ॥

धात्रे पुरोडाशं द्वादशकपालमिति पञ्च ।२।

केचित्त्वीजानं प्रकृत्य उत्तमं धातारं करोतीति श्रुतेः धात्रे ऽन्ततो निर्वपन्ति। नायं सूत्रकृतो ऽभिप्रायः. क्रमान्तरावचनात्. उत्तरत्र तासूत्तराणि चत्वारीति वचनाच्च। यदि ह्युत्तमो धाताभिप्रेतः स्यात्तदोत्तरत्ववचनं चरुरूपाणां व्याहन्येत। न च तत्राप्याम्नानक्रमापेक्षयोत्तरत्ववचनं नानुष्ठानापेक्षयेति वक्तव्यं. अनुष्ठानानुपयुक्तक्रमवचनानर्थक्यात्। यदि चैनमुपयोगं नाभिप्रैष्यत्तदा तासु चरूञ्श्रपयतीत्येतावदेवावक्ष्यत्. न च तथावोचत्। तस्माद्यथादर्शित एव क्रमो न्याय्यः। तथा यथासमाम्नातं निर्वपतीत्येव सत्याषाढः॥

यासु स्थालीषु सोमा भवन्ति तासूत्तराणि चत्वारि हवींषि श्रपयति।३।

अनुमत्यादीनि हवींषि प्रयोगक्रमादाग्रयणोक्थ्यादित्यध्रुवस्थालीषु श्रपयति॥

समानं तु स्विष्टकृदिडम्।४।

पशुपुरोडाशस्य देविकानां चेति शेषः॥

देविका निर्वपेत्प्रजाकाम इति काम्याः।५।

देविका निर्वपेदित्यस्मिन्ननुवाके बहिस्तन्त्रवर्तिनो ऽप्यनेके काम्याः प्रयोगा उक्ताः। ते ऽप्यनुसंधेया इत्यर्थः॥

अनूबन्ध्यायां स्वरुं जुहोति। हृदयशूलमुदासयति।६।

आमिक्षापक्षे तु सवनीय एव पशावुभयं क्रियते॥

विष्णुक्रमान्क्रामति । ७ ।

सोमविधित्वे पशोरनूबन्ध्यायां नित्यं* विष्णुक्रमाः ॥

राज्ञो राजंभव्यस्य वानूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपत्यग्नये गृहपतय इति । ८ ।

राजा अभिषिक्तः । राजंभव्यः राज्यार्हो युवराजः । तथा च श्रुतिः. यो राजा सन्राज्यो वा सोमेन यजत इति । तयोर्द्वैविकानां स्थाने देवसुवां हवींषि निर्वपतीति ॥

समानं तु स्विष्टकृदिडम् । ९ ।

गतः ॥

मैत्रावरुणीमामिक्षामनूबन्ध्यायाः स्थाने बह्वृचाः समामनन्ति । तस्या अग्रेण हविर्धानमासीनो ऽनवानं होता यजति । हविराहुतिप्रभृतीडान्ता संतिष्ठते । प्रयाजप्रभृत्याज्यभागप्रभृति वा । इडान्तामेके समामनन्ति । १० ।

लौकिकेन दध्नाचामिक्षाक्रमः स्यात्. सायंदोहावचनात् ॥ बौधायनस्त्वाह. सह सवनीयैर्वत्सापाकरणं सह सायंदोह इति । पुनश्चाह. मन्त्रवती स्यादिति बौधायनः. तूष्णीकेति शालीकिरिति ॥ तस्मात्समानसंस्थमेवोभयमिष्यते । केचित्त्विडान्तपक्षे ऽपि मार्जनान्तं वाजि-

* b मित्या.

मेच्छामिच्छन्ति. निष्पन्ने द्रव्ये यागो मा लोपीति. यथोक्तं भारद्वाजेन. कृते द्रव्ये न कर्मलोप इति। अत एवोक्तमाश्वलायनेनापि. आज्यभागप्रभृतिवाजिनान्तेति ॥

कृत्स्नसंस्थामेके।११।

आखापहरणादिब्राह्मणभोजनान्तेति ॥

तामनु देविकाहवींषि निर्वपति।१२।

आमिक्षापक्षे ऽपि तान्यनुनिर्वपति। दर्शितश्चैषामनुनिर्वापप्रयोगः। बौधायनस्त्वत्रानुग्रहमाह. आज्येनैव देविका यजेदित्याश्मरथ्यगवेरिति। भारद्वाजश्चाह. आमिक्षां करिष्यन्नाज्येन देविका इति। तदा त्वामिक्षयेष्ट्वोपांशुयाजधर्मेण धात्रादीन्यजति ॥

समानं तु स्विष्टकृदिडम्।१३।

गतः ॥

सदसो हविर्धानस्य हविर्धानयोरिति प्रथमग्रथितान्यग्न्योर्विस्रस्योदीची हविर्धाने बहिर्वेदि निर्वर्तयति।१४।

हविर्धानयोर्दक्षिणमग्रेणाहवनीयमुदङ् नीत्वा बहिर्वेदि निर्गमयति. तस्यान्तराग्नीध्रीयादविरोधात्. अभितः पृष्ठ्यामन्ववनयन्निति लिङ्गाच्च ॥

आहवनीयादुल्मुकमादाय यजमानो वेदिमुपोषति यत्कुसीदमप्रतीत्तमिति।१५।

वेदिमुपोषतीति वचनात् वेद्यां स्तीर्णं बर्हिरेव दहति. न ह्यदीं-
ष्यपि । तथा च ब्राह्मणं. यदोषधीभिर्वेदिं स्तृणाति यदनुपोष्य
प्रयायादिति ॥

यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहु-
याद्दिश्वलोप विश्वदावस्य त्वेति । १६ ।

यदि साध्वसाधु मिश्रमिव यज्ञे चरितवानस्मीति मन्यते तदा प्रदाव्ये
वेद्युपोषणे ऽग्नौ सक्तूँल्लौकिकाञ्जुहुयात् ॥

यदाकूतादिति तिसृभिर्धूममनुमन्त्रयते । १७ ।

धूमं सक्तुहोमजम् ॥

अक्ष्णां विधान्यामित्युक्तम् । १८ ।

यो ऽर्वाक् संवत्सरादात्मनः शुभाशुभे जिज्ञासते तस्यायमयज्ञसंयुक्तः
कल्पः क्रमप्राप्तो ब्राह्मणस्थः प्रदर्श्यते । उक्तं हि ब्राह्मणे अक्ष्णां विधा-
न्यामेकाष्टकायामपूपमित्यादि । तत्रैकाष्टकां स्वयं व्याख्यास्यति या
माघ्या इत्यादिना । तस्या एव विशेषणमक्ष्णां विधान्यामिति । सा
हि संवत्सरस्याहानि विदधाति प्रक्रमयति । कथम् । संवत्सराय
दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्निति श्रुतेः ॥ तस्यां प्रातश्चतुः-
शरावव्रीहिसंमितमपूपं पक्त्वाङ्गारमाहृत्य तेनारण्ये कक्षं दहेत् । स
चेदपूपः प्रदीप्तो दहति कक्षं तदा पुण्यसमं शुभं भविष्यतीति विद्यात्.
विपर्यये अशुभमिति । एतन्मृषयः पुरा परीक्ष्य दीर्घसत्त्रमेव
दीक्षयन्तीति ॥

अयं नो नभसा पुर इत्येतैर्यथाब्राह्मणमुपस्थाय। १९।

इति चतुर्विंशी कण्डिका।

वेदमुपस्थ आधायान्तर्वेद्यासीनो ऽतीमोक्षाञ्जपति। १।

यथाब्राह्मणमिति अयं नो नभसा पुरः, स त्वं नो नभसस्पते, देव संस्फानेति त्रिभिर्मन्त्रैः क्रमादग्निवाय्वादित्यानित्यर्थः। वेदो ऽत्रानूबन्ध्यायां स्तीर्णशेषो ऽभिप्रेत आनन्तर्यात्॥

अथ विष्णुक्रमानेके समामनन्ति। २।

ये सौमिका विष्णुक्रमा आगता नाम तानत्रैके ऽधीयते। तथात्रैव सोमार्थो यज्ञ शं च म इति जपो वृष्टिरसीत्यपामुपस्पर्शनं च, तन्त्रपृथक्त्वादुदवसानीयायाः। तच्च तत्रैव वक्ष्यति॥

प्राजहितं समारोप्य शालामुखीयं द्वितीयं गतश्रियः प्राङुदङ्वोदवसायेदमू नु श्रेयो ऽवसानमागन्म शिवे नो द्यावापृथिवी उभे इमे। गोमद्धनवदश्ववदूर्जस्वत्सुवीरा वीरैरनुसंचरेमेति देवयजनमध्यवसाय निर्मन्थ्योदवसानीयायास्तन्त्रं प्रक्रमयति। ३।

समारोप्येत्यनेनारणीसमारोपणमेवाभिप्रेतं, निर्मन्थ्येत्युत्तरत्रवचनात्। तत्र च शालामुखीयं द्वितीयमिति वचनात् यदा दक्षिणाग्निरपि निर्मन्थ्य योनिरजस्रस्तदापि शालामुखीय एव द्वितीयः, न त्वाधा-

नक्रमाद्दक्षिणाग्निः. यथाहतुः सत्याषाढभारद्वाजौ. ग्रामात्सुखीयं तृतीयं गतश्रिय इति॥ उदवसानाध्यवसाने व्याख्याते। उदवसाये-ज्यत इत्युदवसानीया॥

अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षा-लनादि कर्म प्रतिपद्यते। यथार्थं पात्रयोगः।४।

अन्यन्वाधानवचनात् दक्षिणावचनाच्च ज्ञायते. नात्र सोमाङ्गानि प्रसज्यन्त इति। तेनाग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं सर्वमेव तन्त्रं क्रियते॥

निर्वपणकाल आग्नेयं पञ्चकपालं निर्वपति। अष्टा-कपालं वा। यदि पञ्चकपालो गायत्र्यौ संयाज्ये। यद्यष्टाकपालः पङ्क्त्यौ।५।

व्याख्यातः पुनराधेये॥

अनड्वान्दक्षिणा। अनडुद्दं वा हिरण्यम्।६।

यावता मूल्येन क्रेयोऽनड्वांस्तदनडुद्दम्॥

सिद्धमिष्टिः संतिष्ठते। वैष्णवीं पूर्णाहुतिमुदवसा-नीयायाः स्थाने वाजसनेयिनः समामनन्ति।७।

गतौ॥

द्वादशगृहीतेन स्रुचं पूरयित्वेदं विष्णुर्विचक्रम इत्य-न्तर्वेद्यूर्ध्वस्तिष्ठञ्जुहोति।८।

ऊर्ध्वंतिष्ठन् न प्रसङ्गः ॥

सा यावद्रात्रेष्टिः संतिष्ठतेऽथ सायमग्निहोत्रं जुहोति। काले प्रातर्होमम् । ९ ।

सा इष्टिरुदवसानीया यावति रात्रिभागे संतिष्ठते तावत्येव सायमग्निहोत्रमतिपन्नकालमपि जुहोति. गौणकालानतिपातात्। प्रातर्होमं त्वागामिनं स्वकाल एव जुहोति। नन्वस्मिन्काले कः प्रसङ्गः। अस्ति प्रसङ्गः. उदवसानीयान्ते सायंप्रातराहुतिरिति श्रुतेः. सूत्रान्तरकारमताच्च. यथाह बौधायनः. सायंप्रातरग्निहोत्रे प्रतिजुहोतीति ॥ सूत्रकाराभिप्रायस्तु. सायमाहुतिश्रुतिस्तावन्नित्याया एव सायमाहुतेरतिपन्नकालाया गौणकालानुज्ञार्था. प्रातराहुतिश्रुतिरपि प्रसङ्गाद्भाविन्याः प्रातराहुतेरनुवादिका. न त्वपूर्वाग्निहोत्रविधायिकेति। अत एवोक्तं. काले प्रातर्होममिति ॥ केचित्तु सोमाङ्गमेवोभयमिच्छन्ति. संतिष्ठतेऽग्निष्टोम इत्युत्तरत्रवचनात्। तथा चोदवसानीयां प्रकृत्याह कात्यायनः. तदन्ते सायमाहुतिः. सोमाङ्गं संनिध्यविरोधाभ्यां. नित्या वा प्रातराहुतिश्रुतेरिति ॥ यदा तु दैवान्मानुषाद्वा विलम्बादुत्तरेद्युरुत्कृष्टोदवसानीया तदोत्तरस्यैवाह्नः सायं होमः कार्यः. न पूर्वस्य. अर्वागुदवसानीयेष्टेरग्निहोत्रेऽनधिकारात्। यथोक्तं श्रुतौ. एतया पुनराधेयसंमितयेष्ट्वाग्निहोत्रं जुहुयादिति ॥ सर्वप्रायश्चित्तं तु होतव्यमुदवसानीयोत्कर्षात्। यत्र तु क्रतुवशादुत्कर्षस्तत्र न प्रायश्चित्तं. यथातिरात्रादौ। भारद्वाजस्त्वाह. सुत्या यदाग्निहोत्रकालमतीयात् सायमग्निहोत्रप्रभृतीन्यग्निहोत्राण्यतिपन्नानि प्रतिजुहुयात्. न वा प्रतिजुहुयादिति ॥

संतिष्ठते ऽग्निष्टोमो ऽग्निष्टोमः ।१०।

गतः ॥

इति पञ्चविंशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां सप्तमः पटलः ।

इति त्रयोदशः प्रश्नः॥

ओम् ॥

एवं तावत्स्वर्गकामो ज्योतिष्टोमेन यजेतेति सर्वकाम्याद्यीनसत्त्रमूल-प्रकृतिभूतज्योतिष्टोमं प्रकृत्य तस्याग्निष्टोमसंस्था व्याख्याता । इदानीं संस्थान्तराणि व्याख्यायन्ते ॥ तत्रेदं तावद्वक्तव्यं. कियत्यो ऽस्य संस्था इति । तिस्र इत्येकं. चतस्र इत्यपरम् । तत्र चिह्ने तावल्लिङ्गानि । यद्यग्निष्टोमो जुहोति. यद्युक्थ्यः परिधौ निमार्ष्टि. यद्यतिरात्रः. यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत. यद्युक्थ्यः स्यादतिरात्रं कुर्वीत. यावदग्निष्टोमेनोपाप्नोतीत्यादि द्रष्टव्यम् । अथ चतुष्ट्वे ऽपि । नाग्निष्टोमो नोक्थ्यः न षोडशी नातिरात्रः. एतद्वा अग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रं. तानग्निष्टोमेन नाप्नोत् तानुक्थ्येनेत्यादि द्रष्टव्यम् ॥ तत्र कैश्चित्कल्पकारैस्त्रिकल्प आश्रितः. यथा द्राह्यायणादिभिरुक्तं. स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पा आग्निष्टोम्यमुक्थ्यतातिरात्र्यमित्यादि । अन्यैस्तु चतस्र एताः संस्थाः प्रकृत्यधिकारे ऽनुक्रान्ताः. यथाश्वलायनादिभिः ॥ एवं मतभेदे संभ्रमाने स्वमतेनाचार्यः प्रकृतिसंस्था दर्शयति ॥

## उक्थ्यः षोडश्यतिरात्रो ऽप्तोर्यामश्चाग्निष्टोमस्य गुण-विकाराः ॥ १ ॥

अयमभिप्रायः । अग्निष्टोम एव तावत्सर्वसोमानां मौलिकी प्रकृतिः. यथा वक्ष्यति. सर्वक्रतूनां प्रकृतिरग्निष्टोम इति । संस्थान्तराणि तु

द्राघायणयज्ञादय इव दर्शपूर्णमासयोः तस्यैव गुणविकारमात्राणि. न तु चिकद्रुकादिवत्स्वतन्त्राणि॥ स एव पुनरग्निष्टोमो गुणविकारभेदैः पञ्चधा भूतस्तेनतेन गुणविकृतेन रूपेण तस्यतस्य वैकृतस्य सोमस्य प्रकृतितां प्रतिपद्यते. यथा अग्निष्टोमो ज्योतिरादेरग्निष्टोमस्य. उक्थ्यो गवादेरुक्थ्यस्य. षोडशी वाजपेयादेः षोडशिनः. अतिरात्रो विश्वजिदादेरतिरात्रस्य. अप्तोर्यामः सर्वात्मकस्या*प्तोर्यामस्य. यं वक्ष्यति यस्मात्पश्चवः प्रपैव भ्रंशेरन् .अप्तोर्यामेण सर्वमाप्नोति सर्वं जयतीति। एवञ्च ये सर्वपृष्ठासर्वस्तोमादिसंज्ञितस्य क्रतोरप्तोर्यामनाम्नो वैकृतादतिरात्रविशेषादृते नाप्तोर्यामो नाम ज्योतिष्टोमो ऽस्तीति संगिरन्ते ते प्रत्युक्ता भवन्ति. तस्यापीह ज्योतिष्टोमसंस्थाधिकारे वचनात्. प्रकृत्यधिकाराच्च। तथा भारद्वाजेनाप्यत्र ज्योतिष्टोमं प्रकृत्य पञ्चैताः प्रकृतिसंस्था उक्ता ततो यज्ञपुच्छमभिधायान्तत उपसंहृतं संतिष्ठते ज्योतिष्टोम इति। अतो ऽस्त्येव प्रकृतिभूतो ज्योतिष्टोमो ऽप्तोर्यामः॥ ननु सप्त संस्थाः सोमस्योपदिशन्त्याचार्याः. यथा अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्था इति। तासु चोत्तराः षडप्याद्यस्याग्निष्टोमस्य गुणविकाराः। एतच्चेन विशेषेणात्यग्निष्टोमवाजपेययोरनुपादानमिति वक्तव्यम्। प्रकृतिभूतानां ज्योतिष्टोमसंस्थानामत्रानुक्रमणमभिप्रेतं. न तु सोमसंस्थामात्रस्य अग्निष्टोमगुणविकारमात्रस्य वा। तत्र न तावदत्यग्निष्टोमः कस्यचित्क्रतोः प्रकृतिः. वाजपेयस्तु† न प्रकृतिः। नापि ज्योतिष्टोमः

* Thus only ū; all other MSS. सर्वात्मकस्य.

† Thus (तु in the meaning of च) all MSS.

सर्वः सप्तदशत्वात्। अतो युक्तमनयोरनुपादानम्। तस्मात्सिद्धं एवं पञ्चशाखाग्निष्टोमात्मा ज्योतिष्टोम एव सर्वसोमानां प्रकृतिरिति॥ तथा सर्वक्रतूनां प्रकृतिरग्निष्टोम इत्यप्येतदभिप्रायं द्रष्टव्यम्। अत्र केचित् अग्निष्टोम उत्तरवेदिः उत्तरेषु क्रतुष्वग्निरिति वचनात् उक्थ्यादीनामग्निष्टोमगुणविकारत्वाच्च उक्थ्यादिष्वप्यग्निचित्यां निषेधन्ति। तत्र ब्रूयामहे. गुणविकृतेन रूपेण तेषामनग्निष्टोमत्वात् उत्तरक्रतुत्वाच्च। न च वाच्यं अग्निष्टोम उत्तरवेदिरित्यपि पञ्चशाखप्रकृत्यभिप्रायं. उत्तरेषु क्रतुष्विति च तद्विकाराभिप्रायमिति. अन्यच्च साद्यस्केभ्यो वाजपेयात्षोडशिन इति षोडशिपर्युदासानुपपत्तेः। न च षोडशिविकाराद्वाजपेयादिति वाजपेयविशेषणतया षोडशी योज्यः. व्यभिचाराभावेन विशेषणवैयर्थ्यात्। न ह्यषोडशिविकारो ऽपि वाजपेयो ऽस्ति येन तद्व्यवच्छेदाद्विशेषणमर्थवद्भवेत्॥ किमिदानीमुक्थ्यादिषु न लभ्यत एवोत्तरवेदिः। नैवम्। सर्वास्वेव विकृतिषु लभ्यते. विकल्पेन साग्निचित्यो भवति. पचिभ्यां साग्निचित्याभ्यामिति क्वचिन्नियमदर्शनात्। तथा अनग्निकाश्चा यज्ञक्रतूनामुत्तरवेदिरित्येव बौधायनः। तस्मात्सिद्धं. उक्थ्यादिष्वपि भवत्येव पक्षे ऽग्निचित्येति॥ उक्थपर्यायैः सह संस्थास्येत्युक्थ्यः. षोडशेन स्तुतशस्त्रेणेति षोडशी. रात्रिमतीत्येत्यतिरात्रः। यदाप्नोत्तदप्तोर्यामस्याप्तोर्यामत्वमित्युक्तमप्तोर्यामनिर्वचनम्। अथवाप्तुः सोमः आग्रयणाद्दप्सु प्रस्कन्दयतीति बौधायनीये दर्शनात् तस्यातिरिक्तस्य यापनमस्मिन्नित्यप्तोर्यामः। तदुदाहृतं बौधायनेन. यथा सोमो वा अयं. अतिरिच्यमानमनुपायं ते देवा अब्रुवन्नप्तोर्या अयमत्यरेचि तस्य को

याम इति. तदप्तोर्यामस्याप्तोर्यामत्वं. तस्मा एतान्यतिरिक्तस्तो-त्राण्यवकल्पयांचक्रुरितीति ॥

उकथ्येन पशुकामो यजेत । षोडशिना वीर्यकामः । अतिरात्रेण प्रजाकामः पशुकामो वा । अप्तोर्यामेणा-तिरात्रेण सर्वान्कामानवाप्नोति ।२।

गुणविकारास्त्वेते काम्याः. तेनामत्त्तु कामेषु न भवन्ति । अप्तोर्यामे-णातिरात्रेणेति विशेषणं तत्प्रकृतित्वख्यापनार्थं । अतस्तदीया एव सदःक्रतुकरणादयो ऽप्तोर्यामस्य भवन्ति ॥

तेषामग्निष्टोमवत्कल्पः ।३।

तेषामग्निष्टोम एव ध्रुवा प्रकृतिः । तत्र परतो ऽग्निष्टोमाद्ये विकारास्ते वक्ष्यन्ते. तदन्तर्गतास्तु प्रागेवोक्ता इत्याह ॥

उक्ताश्च विकाराः ।४।

के पुनः । ते ॥

यथा सदः क्रतुकरणं क्रतुपशवः षोडशिनः सोम-क्रयणी पात्रमिति ।५।

पञ्चदशोक्थ्य इत्यादिना सद उक्तम् । यद्युक्थ्य इत्यादिना क्रतुक-रणम् । ऐन्द्राग्नमुक्थ्य इत्यादिना क्रतुपशवः । शुण्ठ्येत्यादिना षोडशिनः सोमक्रयणी । खादिरं चतुःस्रक्त्यादिकं षोडशिनः पात्रम् ॥

उक्थ्यश्चेदग्निष्टोमचमसानुन्नयंस्त्रिभ्यश्चमसगणेभ्यो राजानमतिरेचयति। ६।

अथ परतोऽग्निष्टोमाद्विकारा उच्यन्ते। तत्रोक्थ्यसंस्थश्चेत्क्रतुस्तदा यज्ञायज्ञिये चमसगणात्परतो गणत्रयाय राजानमतिशिनष्टि॥

अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतुश्चमसमनून्नय होतृचमसे ध्रुवायावकाशं कुरुताच्छावाक पत्नीं संख्यापयाप उपप्रवर्तयेति संप्रैषः। ७।

अन्तिमचमसगणविशेषणत्वात् आन्त्यामा क्रतोरन्तमायात्विति पुनरनुक्रमणं संप्रैषस्य॥

अग्निष्टोमचमसैः प्रचर्य प्रातःसवनवदुक्थ्यं विगृह्णाति। ८।

विगृह्णाति विभज्य पर्यायैर्गृह्णाति। ग्रहणकालस्तु प्रागेवोक्तः। उक्थ्यसंस्थश्चेदत्रोक्थ्यं गृह्णातीति॥

एतावन्नाना। इन्द्रावरुणाभ्यां त्वेति प्रथमे ग्रहणसादनौ संनमति। इन्द्राबृहस्पतिभ्यां त्वेति द्वितीये। इन्द्राविष्णुभ्यां त्वेति तृतीये। ९।

प्रथमे पर्याय इति शेषः॥

उन्नेतः सर्वं राजानमुन्नय मातिरीरिचो दशाभिः

कलशौ मृष्ट्वा न्युब्जति सर्वसंस्थास्तृत्तमे गण एतत्सं-
प्रेष्यति। १०।

सर्वसंस्थासु न केवलमुक्थ्ये किं तूत्तरास्वपि संस्थास्वित्यर्थः। केचित्तु सर्वग्रहणादग्निष्टोमे ऽपीच्छन्ति। तत्र य आधवनीये राजा तं सर्वं पूतभृत्यवनीयेत्येतावति स्रुते संप्रेष्यति॥

इति प्रथमा कण्डिका।

---

अग्नीदौपयजानङ्गारानाहरेत्येतदाद्याग्निष्टोमिकं कर्म सर्वसंस्थासु समानम्। १।

गतः॥

यद्यु वै षोडश्युक्थ्यचमसानामुत्तमं गणमुन्नयन्ने-
कस्मै चमसगणाय राजानमतिरेचयति। २।

षोडशिसंस्थस्तत्क्रतुः समानमुक्थ्यान्तं कर्म। राजानं चैकस्मै चमसगणायातिरेचयति॥

षोडशिनो ग्रहणम्। ३।

व्याख्यास्यत इति शेषः॥

प्रातःसवन उत्तमो धाराग्रहाणाम्। ४।

गृह्यत इति शेषः॥

सवनेसवने वा।५।

उत्तमो धाराग्रहाणामित्येव॥

अथैकेषाम्। पूर्वयोः सवनयोः पुरस्तादुत्तमादुक्थ्यपर्यायादुक्थ्याद्गृह्णीयात्सर्वैः प्रचरिते। तृतीयसवन आग्रयणात्।६।

सर्वैः प्रचरिते सर्वैरुक्थ्यपर्यायैः प्रचरिते॥

अपि वा तृतीयसवन एवाग्रयणात्पशुकामस्य।७।

अपि वा शब्दः पक्षनिवृत्तौ। न पूर्वयोरिदं पशुकामस्य किं तु तृतीयसवन एव सर्वैरुक्थ्यपर्यायैः प्रचरिते सकृदाग्रयणाद्गृह्णीयादित्यर्थः। अस्मिंस्तु पक्षे षोडशिनो ग्रहावकाशस्तंकारलोपः प्रातःसवन एव दर्शितः॥

नोक्थ्ये गृह्णीयात्। गृह्णीयाद्वा।८।

उक्थ्ये ऽप्यसौ पक्षे ग्राह्यः। तत्र ग्रहणपक्षे फलविशेषः कल्पनीयः। अन्यथोपदेशानर्थक्यात्। किं च यदा गृह्यते तदाप्युक्थ्यस्यैव षट्क्रतुकरणादयो धर्मा भवन्ति। तेनोक्थ्यव्यपदेशमेव लभते॥

अतिरात्रे पशुकामस्य। अतिरात्रे ब्रह्मवर्चसकामस्य।९।

गृह्णीयादित्यन्वयः। अनयोरपि कामयोरतिरात्रे ग्रहणमुपरिष्टाद्दर्शयिष्यते॥

अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् ।१०।

अग्निष्टोमे ऽपि नित्यो राजन्यस्य । अपिशब्दादुक्थ्यादिसंस्थासु च । सो ऽयं राजन्यकर्तृकः षोडशिग्रहरस्को ऽग्निष्टोमो ऽत्यग्निष्टोम इत्याख्यायते ॥

सस्तुतशस्त्रो भवति ।११।

सर्वत्र च स्तुतशस्त्रवानेव भवति . न क्वचिदुद्ग्राह्यामात्रम् ॥

आतिष्ठ वृत्रहन्निति ग्रहणसादनौ ।१२।

आतिष्ठ वृत्रहन्निति प्रदर्शनार्थमुत्तरेषामपि पञ्चानामनुवाकानां . तेषामपि विकल्पार्थत्वादाम्नानस्य बौधायनमतात्तु सवनेसवने ऽभिगृह्णातीति पक्षे प्रथमे त्रयः क्रमात्तत्तत्र सवने ग्रहणार्थाः . उत्तरे तु त्रयस्तैरेव विकल्पन्ते ॥

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी ॥ एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे । प्र ते महे विदथे शंसिषं हरी ॥ य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् । इन्द्रो नाम घृतं न यः ॥ हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिर इत्येताभिश्चतसृभिः सन्नमभिमन्त्र्य ।१३।

इति द्वितीया कण्डिका ।

समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोत्रमुपाकरोति । १ ।

यदापि सवनेसवने ऽभिग्लायति तदापि सन्नंसन्नमेताभिरभिमन्त्रयते । समयाविषित इत्यग्निहोत्रे व्याख्यातं. असमये प्रवृत्त इत्यर्थः ॥

बर्हिःस्थाने भवति । २ ।

हिरण्यं बर्हिषोः स्थाने भवति. न तु ताभ्यां समुच्चीयते ॥

श्वेतमश्वं पुरस्ताद्धारयन्ति । अरुणपिशङ्गं वा । ३ ।

पुरस्ताद्गृहाद्भ्यो धारयन्त्यश्वम् । अरुणता रक्तवर्णता. पिशङ्गता गोरोचनावर्णता ॥

ओथा मोद इव मदे. मदा मोद इवोमथेति व्यतिषक्त उभयतोमोदः प्रतिगर आनुष्टुभ्यः । ४ ।

षोडशिशस्त्रे ऽयमानुष्टुभ्यः प्रतिगरः. आनुष्टुभीष्वृक्षु शस्यमानासु प्रतिगर इत्यर्थः । स एवं व्यतिषक्त उभयतोमोदश्च भवति । यथा ओथा मोद इव मदे इत्यर्धर्चेषु । मदा मोद इवोमथेत्यवसानेषु । एवमनुष्टुप्सु । ताभ्यस्त्वन्यत्र प्रकृतिवदेव भवति ॥

इन्द्राधिपते ऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति हुत्वेन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं

भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति षोडशिनं भक्षयति । आदित्यवद्गणेन चमसान् । ५ ।

षोडशिनस्तु इन्द्रस्य त्वपाविष्ठेत्येव नित्यं भक्षमन्त्रः, न तु प्राकृतमन्त्रविकल्पः । चमसांस्तु मन्द्राभिभूतिरित्यादिभिः प्राकृतैरेव मन्त्रैर्भक्षयन्ति यजमानादयः, न तु इन्द्रस्य त्वपाविष्ठेत्यादिना ॥

अनुष्टुप् छन्दस इति भक्षमन्त्रं नमति । ६ ।

तत्र यदा मन्द्राभिभूतिरिति भक्षमन्त्रस्तदा अनुष्टुप् छन्दस इति संनमति, न तु जगतीछन्दस इति भवति ॥

अरुणपिशङ्गोऽश्वो दक्षिणा । अश्वतरी वा । ७ ।

अश्वतरी गर्दभादश्वायां जाता । ततोऽश्वादौपयजानित्यादि ॥

अतिरात्रश्चेत्षोडशिचमसानुन्नयंस्त्रयोदशभ्यश्चमसगणेभ्यो राजानमतिरेचयति । ८ ।

गतः ॥

षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति । ९ ।

ननु पूर्वसूत्रे चात्र च नित्यवदनुवादान्नित्यः षोडशी प्रतीयते । पूर्वत्र च काम्यतयोक्तः । कथमिदं घटिष्यते । नात्र किंचिद्दुर्घटं, दधिग्रहादिवन्नित्यस्यापि काम्यत्वाविरोधात् । केचित्पुनरत एव विरोधात् शास्त्रान्तरदर्शनाच्च वैकल्पिकमत्र षोडशिनमातस्थिरे ॥ रात्रौ भवाः पर्याया रात्रिपर्यायाः । के । ते ॥

होतृचमसमुख्यः प्रथमो गणः। मैत्रावरुणचमस-मुख्यो द्वितीयः। ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयः। अच्छावाकचमसमुख्यश्चतुर्थः। १०।

चतुश्चमसगणास्तावदेकः पर्यायः। तेषु चमसगणेष्वेते मुख्या भवन्ति॥

इन्द्राय त्वापिशर्वरायेति मुख्यंमुख्यं चमसमनू-न्नयति। ११।

अनुः मुख्यंमुख्यमित्यस्या एव वीप्साया द्योतकः. नार्थान्तरवचनः। अनु मुख्यं चमसमनेन मन्त्रेणोन्नयतीत्यर्थः॥

सर्वैन्द्री रात्रिः। १२।

सर्वे ऽपि रात्रिपर्याया ऐन्द्राः। तेन यथादेवतपक्षे ऽपीन्द्रपीत-स्येत्येव भवति भक्षमन्त्रः॥

अनुष्टुप् छन्दस इति सर्वत्र भक्षमन्त्रं नमति। १३।

व्याख्यातः प्राक्॥

प्रथमाभ्यां गणाभ्यामध्वर्युश्चरति। उत्तराभ्यां प्रति-प्रस्थाता। १४।

उभौ स्वेस्वे गणे मुख्यंमुख्यं चमसमादाय प्रचरतः॥

एष प्रथमः पर्यायः। १५।

गतः॥

एवं विहितो द्वितीयस्तृतीयश्च। १६।

अयमेव पर्यायो द्विः पुनरावर्तेत इत्यर्थः॥

इति तृतीया कण्डिका।

---

अथ प्रतिप्रस्थाताश्विनं द्विकपालं निर्वपति। १।

एवं त्रिभिः पर्यायैः प्रचरिते पाणिप्रक्षालनादिविधिना द्विकपालं निरुप्यासादनान्तं करोति॥

होतृचमसमुख्यान्संधिचमसानुन्नयति। २।

संधौ तायन्त इति संधिचमसाः। तानुन्नयत्युन्नेता॥

त्रिवृद्राथंतरः संधिः। ३।

संधिरिति संधिस्तोत्रं लक्ष्यते। स त्रिवृद्राथंतरो भवति। नवस्वृक्षु रथंतरं गातव्यमित्यर्थः॥

आश्विनं परःसहस्रं शस्त्रं भवति। ४।

शस्त्रं चाश्विनीभिः सहस्रादधिकाभिः संधितं भवति॥

तदुदित आदित्ये परिधीयते। ५।

तस्य परिधानीयोदित आदित्ये शस्यते॥

तस्मिन्परिधिते होतृचमसमध्वर्युरादत्ते । चमसां-श्चमसाध्वर्यवः । पुरोडाशं प्रतिप्रस्थाता । ६ ।

पुरोडाशं कृत्स्नं तूष्णीमादाय द्विरभिघारयति. चतुरवत्तत्वाय ॥

अश्विभ्यां तिरोअह्नियानां सोमानामनुब्रूह्यश्विभ्यां तिरोअह्नियानां सोमानां प्रेष्येति संप्रैषौ । ७ ।

संधिना तिरोहिते अह्नि तायन्त इति तिरोअह्न्याः सोमाः ॥

तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति वा । ८ ।

अश्विभ्यामित्येव । द्वितीयसंप्रैषस्य चायं विकल्पः. प्रथमस्त्वविकृतः ॥

न वा प्रस्थापयेत् । ९ ।

अथवा स एव द्वितीयः संप्रैषः प्रस्थितशब्दं हित्वा अश्विभ्यां तिरोअह्न्यान्सोमान्प्रेष्येति भवेदित्यर्थः ॥

सह सोमैः पुरोडाशं प्रतिप्रस्थाता सर्वहुतं जुहोति । १० ।

पुरोडाशस्यैन्द्राग्नवद्धुतानुमन्त्रणम् ॥

पङ्क्तिश्छन्दस इति भक्षमन्त्रं नमति । ११ ।

अनुष्टुप् छन्दस इत्यनेन व्याख्यातः । ततोऽग्नीदौपयजानित्यादि ॥

अग्नीध्रीयमश्वेत्संधिचमसानुन्नयंश्चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति । १२ ।

दृष्टः प्रागप्तोर्यामो ऽपि प्रकृतिसंस्थासु । स इदानीं क्रमप्राप्तो व्याख्यायते । अनेनापि विस्पष्टीकृतं. अस्ति प्रकृतिभूतो ज्योतिष्टोमो ऽप्तोर्याम इति ॥

यथा प्रथमे रात्रिपर्याये तथा मुख्या भवन्ति । १३ ।

होतृचमसमुख्यः प्रथमो गण इत्यादिक्रमेण मुख्यचमसा भवन्ति ॥

आग्नेयान्प्रथमानुन्नयति । ऐन्द्रान्द्वितीयान् । वैश्वदेवांस्तृतीयान् । वैष्णवांश्चतुर्थान् । १४ ।

आग्नेयान्प्रथमानुन्नयति. प्रथमोन्नीतो गण आग्नेयः कार्यः. स्तुतशस्त्रमेषां यथाज्यमाग्नेयं स्यादित्यर्थः । एवं ऐन्द्रानित्यादि । तानग्निस्त्रिवृता स्तोमेनेत्याद्यर्थवादोक्ता अग्न्यादय एव तस्यतस्य गणस्य देवता इति भावः ॥

तेषां संधिचमसवत्प्रचरणकल्प इत्येके । १५ ।

अथवा संधिचमसवद्देवाश्विनान्येव सर्वेषां स्तुतशस्त्राणि भवन्ति । संधिचमसविवारत्वादुत्तरेषां गणानामिति भावः । तदुक्तं बौधायनेन. तद् वा आहुः. सर्वाण्येवाश्विनानि स्तुतशस्त्राणि स्युः यच्च किंच रात्रिमतिरिच्यते सर्वं तदाश्विनमिति चैकं. अथापरं. त्रिवृत्पञ्चदशं सप्तदशमेकविंशं. अथैतेषां देवता अग्निरिन्द्रो विश्वे देवा विष्णुरिति । भारद्वाजश्चाह. तत्र चत्वारि स्तोत्राणि शस्त्राण्याश्विनानि यथाज्यान्याम्नातानि भवन्तीति । आश्वलायनेनापि : स्तुतशस्त्राणि यथाज्यान्याश्विनान्येवोक्तानि. स्तोत्रियानुरूपास्त्वाग्नेयादयः कृताः.

यथोभयमनुगृहीतं स्यादिति ॥ तत्र संधिचमसवत्कल्पे अग्निभ्यां सोमानामनुब्रूहीति संप्रैषः. न तु उक्थशा यज सोमानामिति । स च तिरोअह्न्यानामिति भवति. संधितिरोधानाभावादेषां सोमानाम् ॥

अतिच्छन्दाश्छन्दस इति सर्वत्र भक्षमन्त्रं नमति ।१६।

अनुष्टुप् छन्दस इतिवद्व्याख्या । अतिच्छन्दसि भवितव्ये दीर्घश्छान्दसः । ततो ऽश्वादीपयजानित्यादि ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

क्रतुपशव ऐकादशिनाश्च विकल्पन्ते ।१।

एवं सर्वसोमप्रकृतिभूता ज्योतिष्टोमा व्याख्याताः । इदानीं सर्वपशुगणप्रकृतिभूता ऐकादशिना व्याख्यायन्ते । एकादशसंख्यां पशव इत्यैकादशिनीज्या. तत्रभवा ऐकादशिनाः । के पुनः । ते आग्नेयः कृष्णग्रीव इत्यादयः पेत्वान्ताः । क्रतुपशवस्तु प्रागेव दर्शिताः. यथा आग्नेयं सवनीयं पशुमुपाकरोत्यैन्द्राग्नमुक्थ्य इत्यादयः । उभये चैते प्रकृतावेव पृथक् शाखास्वाम्नातास्तुल्यार्थत्वाद्विकल्पन्ते ॥

तेषां समवाये यथाचोदितं संस्काराः ।२।

तेषामैकादशिनानां समवाये सहप्रयोगे येन क्रमेण पशवश्चोदितास्तेनैव क्रमेणोपाकरणनियोजनादयः संस्काराः कार्याः ॥

तन्त्रमङ्गानि विभवन्ति ।३।

तत्र यान्यङ्गानि सकृत्कृतान्येव सर्वेषामुपकर्तुं प्रभवन्ति तानि तन्त्रं भवन्ति। सकृदेव क्रियन्ते यथारादुपकारकाणि प्रयाजादीनि ॥

प्रत्यक्षार्थानि प्रतिसंस्कारमभ्यावर्तन्ते ।४।

यानि तु प्रत्यक्षोपकारकाणि संनिपातीनि तान्यावर्तन्ते. आवर्तमानानि च तानि संस्कारंसंस्कारं प्रत्यावर्तन्ते। किमुक्तं भवति। पदार्थानुसमयेनैकैकः संस्कारः सर्वेषां कार्यः. न तु काण्डानुसमयेनैकैकत्र सर्व इत्यर्थः। तद्यथा सर्वानुपाकृत्य सर्वान्नियुनक्ति ततः सर्वान्प्रोक्षतीत्यादि ॥

यथार्थमूहः ।५।

विकृतौ यथार्थमूह इति परिभाषणात् प्रकृतावूहनिवृत्तिर्मा शङ्कीति पुनरूहवचनम्। तेन पशुभिरेहि पशुषु संवदस्व पशवो मायुमक्रषतेत्यादूह्यन्ते ॥

यूपाहुतिं हुत्वाग्निष्ठप्रथमांस्त्रयोदश यूपान्मन्त्रेण छिनत्ति ।६।

पुनर्यूपाहुतिवचनात् दीक्षितस्यापि हूयते. सा चैकैव आरादुपकारित्वात्। उपशयस्यापि याजुषत्वार्थं मन्त्रवचनम् ॥

सर्वेषां शकलाहरणाव्रश्चनहोमाः ।७। : .

शकलस्यावटसंस्कारार्थत्वात् अनवटस्योपशयस्य शकलो नाहार्यः ॥

सर्वमुपशयं तक्षति।८।

यूपसमीपे शेते न स्थाप्यत इत्युपशयः। तं सर्वं सोपरं तक्षति॥

तथा पालीवतं छिनत्ति यथाधो नाभिसंमितो भविष्यतीति।९।

पालीवतः परस्ताद्व्याख्यास्यते। तं तथा छिनत्ति यथा निखातो ऽधो नाभेर्भविष्यतीति मन्यते॥

यत्प्राग्वेदिसंमानात्तत्कृत्वा दशरथाक्षामेकादशोपरां रज्जुं मीत्वा तस्याश्चतुर्विंशेन भागेन वेदिं मिमीते।१०।

वेदिमानकाले चतुरधिकशताङ्गुलां तावद्रज्जुं दशकृत्वो ऽभ्यस्तां कृत्वा तस्यां पुनरेकादशोपरां रज्जुमुपसमस्यति। यावति देशे एकादश यूपमूलानि स्थास्यन्ति तावती रज्जुरेकादशोपरा। ततो ऽस्याश्चतुर्विंशेन भागेन वेदिं मिमीते। कथमनेन मिमीत इति चेत्॥

प्रक्रमस्थानीया भवति।११।

सा चतुर्विंशांशसंमिता रज्जुः प्रक्रमस्थानीया भवति। तया पूर्ववदेव मिमीते॥

अग्निष्ठं द्वाभ्यां रशनाभ्यां परिवीयैकादशिनी रशनाः परिव्ययाग्निष्ठे वासयति।१२।

यूपकाले ऽग्निष्ठमेकं संमाय तं द्वाभ्यां रशनाभ्यां युगपत्परिव्ययति।

तत्र रशनादाने द्विवदूहः। परिवीरसीति नोह्यते. यूपाभिधानात्। ततो ऽन्या यूपरशनाः परिवीय परिवेष्ट्य तदहरग्निष्ठे वासयति॥ केचित्तु यूपान्परिवीयेति व्याचक्षते। तदयुक्तं. यूपानुपादानात्. रशनाभिरित्यवचनाच्च॥

द्विरशना यूपाः।१३।

सर्वे ऽपि यूपा द्विरशनाः कार्याः॥

श्वोभूत आश्विनं गृहीत्वा यूपान्संमिनोति।१४।

गतः॥

सह वाग्निष्ठेन।१५।

पूर्वेद्युरग्निष्ठेन सहैवोपस्थापयति। नास्मिन्पक्षे ऽग्निष्ठे रशना वासयति। परिवीता एव तु यूपास्तिष्ठन्ति. अन्यथाच्छिनाया परिव्ययणाद्यजमानस्य यूपानुत्सर्गविरोधात्॥

तन्त्रमभ्रेरादानं परिलेखनो ऽभ्यावर्तते।१६।

तन्त्रमङ्गानीत्युक्तस्यैव न्यायस्य दर्शनार्थं वचनम्॥

रथाक्षमात्राणि यूपान्तरालानि।१७।

रथाक्षः चतुरधिकशताङ्गुलः॥

अग्निष्ठाद्दक्षिणं परिलिख्योत्तरमग्निष्ठात्परिलिखति।१८।

यूपावटमिति शेषः॥

## एवं व्यत्यासमुदगपवर्गान्यूपान्संमिनोति ।१९।

एवं दक्षिणस्यदक्षिणस्य कृत्वोत्तरस्योत्तरस्य क्रिययोदगपवर्गान्संमिनोति. न तु पशुक्रमानुसारेण दक्षिणापवर्गानिति भावः॥ तत्रायं कर्मक्रमः। परिलेखनक्रमेणैवावटखननयूपप्रक्षालनप्रोक्षणाद्येकैकमेकैकस्य करोति। ततः प्रोक्षणशेषनिनयनादि शकलाभिहोमान्तमेकैकस्य करोति. अवटसंस्कारार्थत्वेनैककर्मत्वात्। तथाञ्जनादि परिव्ययणान्तमपि कर्म काण्डानुसमयेनैकैकस्यैव करोति. मध्ये यूपोत्सर्गविरोधाद्यजमानस्य. व्यक्तवचनाच्च कल्पान्तरकारैः। मीमांसकाश्चाहुः. वचनात्तु परिव्ययणान्तमञ्जनादीति। तत्र चोपशयस्य निखननाभावात् अवटसंस्कारा निवर्तन्ते. पात्नीवतस्य सर्वे ऽप्युत्तरत्र भविष्यन्ति॥

## प्रतियूपं स्वरवः।२०।

यूपः स्वरोः प्रयोजकः. न तु पश्वञ्जनमतो न प्रतिपशु भवतीति भावः॥

## दक्षिणत उन्नता भवति।२१।

यूपैकादशिनी दक्षिणत उन्नता भवति। उत्तरं आरभ्य दक्षिणोदक्षिण उन्नतो भवतीत्यर्थः॥

## उत्तरत उन्नतां मिनुयात्पितृलोककामस्य।२२।

उत्तरत उन्नता विपरीता॥

इति पञ्चमी कण्डिका।

सर्वान्समान्प्रतिष्ठाकामस्य । १ ।

समान् समानशिरसः ॥

ये चयो मध्यमास्तान्समान्पशुकामस्य । व्यतिष-जेदितरान् । २ ।

अग्निष्ठमनन्तरौ द्वाविति चीनेतान्मध्यमान्समान्कुर्यात्। ततो ऽन्या-न्व्यतिषजेत्। ततश्चैकैकान्तरितान्समान्कुर्यात्. इतरान्विषमानित्यर्थः॥

आराग्रामभिचरतः । ३ ।

केयमाराग्रा नाम। अत आह ॥

मध्य उन्नता भवति। अनुपूर्वमन्तौ निनतौ । ४ ।

अग्निष्ठ उन्नतो भवति. ततः प्रभृत्यन्ता निनता भवन्ति। दक्षिणत उत्तरतश्चैषा आराग्रा ॥

समवसाविणीं वृष्टिकामस्य। मध्ये निनता भवति। अनुपूर्वमन्तावुन्नतौ । ५ ।

पूर्वनिप्रणीता समवस्राविणी नाम ॥

व्यतिषक्तां भ्रातृव्यतः । ६ ।

उभयोः पार्श्वयोरग्निष्ठादेकैकान्तरितास्तेन समा भवन्ति. इतरे विषमाः। एष व्यतिषङ्गः ॥

गर्तमितमित्युक्तम् । ७ ।

ब्राह्मणे यं कामयेत प्रमायुकः स्यादित्यादिना कामद्वयमुक्तं. तद-प्यनुसंधेयमित्यर्थः। तत्र प्रमायुकः स्यादिति तावत्प्रतिषेधार्थं द्रष्टव्यम्॥ ननु उत्तरत उन्नतामित्यादिना पितृलोककामस्योक्तेयं गर्तमित्। तत्कथं प्रतिषिध्यते। सत्यं. पितृलोककामस्यादरार्थः प्रतिषेधः। नन्वनयोर्द्वितीयो विधिः पूर्वं दक्षिणत उन्नता भवतीति नित्यवदुक्तः। कथमिदानीं काम्यतयोच्यते। नायमस्ति दोषः. नित्यस्यापि दधिग्रहादिवत्कामवचनाविरोधात्॥

यदि कामयेत क्षत्रं विश ओजीयः स्यादित्यग्निष्ठाद्दक्षिणान्वर्षीयसो मिनुयात्।८।

क्षत्रं क्षत्रियजातिः। विट् वैश्यजातिः। दक्षिणानग्निष्ठादुच्छ्रितान्कुर्यात्. उत्तरानग्निष्ठेन समान्॥

विट् स्यादित्येतद्वा विपरीतम्।९।

विपरीतं उत्तरे वर्षिष्ठाः दक्षिणे समाः॥

उपरसंमितां मिनुयात्पितृलोककामस्य। मध्येन संमितां रशनसंमितां च मनुष्यलोककामस्य। चषालसंमितामिन्द्रियकामस्येति।१०।

मुक्तो* वात्र लोके बुभूषुः मनुष्यलोककामः। इतिकरणेन व्याख्येयब्राह्मणोपादानस्य दर्शनात् यद्व्याख्येयं तदाह॥

* Corrected; be मुक्तो, ık तुको; h differs altogether: लोके इव मनुष्यलोके बुभूषु. मनुष्यलोककामः.

आयामत उपराणि समानि स्युः। तिर्यञ्चो मध्यानि रशनाश्च। प्रथिम्नश्चषालानि। ११।

यद्येोपरसंमितत्वमुक्तं तदुपराणामायाममात्र्यमवगन्तव्यम्। यन्मध्यसंमितत्वं *रशनसंमितत्वं च तद्यूपमध्यानां रशनानां च तिर्यक्त्वाप्येतत्साम्यम्। यच्चषालसंमितत्वं तच्चषालानां पृथक्त्वसाम्यम्॥

उपशयं द्वाभ्यां रशनाभ्यां परिवीयाग्रेण दक्षिणं यूपं प्राञ्चं निदधाति। दक्षिणेन वा। इदमहममुमामुष्यायणमिन्द्रस्य वज्रेणाभिनिदधामीति द्वेष्यं मनसा ध्यायन्। १२।

उपशयं स्वकाले परिव्ययणानन्तरमेव दक्षिणयूपस्य पुरस्ताद्दक्षिणतो वा निदधाति। असुमामुष्यायणमिति नामगोत्रयोर्निर्देशः॥

आग्नेयं कृष्णग्रीवमग्निष्ठ उपाकरोति। उत्तरे सारस्वतीं मेषीम्। दक्षिणे सौम्यं बभ्रुम्। १३।

कृष्णं ग्रीवासु यस्य स कृष्णग्रीवः। अग्निष्ठ अग्निष्ठसमीपे। कपिलो बभ्रुः॥

एवं व्यत्यासं दक्षिणापवर्गान्पशूनुपाकरोति। १४।

एवमुत्तरमुत्तरमुपाकृत्य दक्षिणंदक्षिणमुपाकुर्वन् इतरान्पौष्णादीनपि पशूनुपाकरोति। तत्र व्यत्यासक्रमादर्थसिद्धं दक्षिणापवर्गत्वे पुनर्वचनं यत्राप्येकयूपे पश्वेकादशिनी तत्राप्येवमपवर्गार्थम्॥ प्रशवस्य ब्राह्मण

* Thus only h; the other MSS. have रशना॰.

एव क्रमादाम्नाता:। तत्र शितिपृष्ठो ऽसितपृष्ठः। शिल्पो लवणवर्णः। कल्माषो नानावर्णः। संहितो ऽन्येन वर्णेन मिश्रः। अधोरामो ऽधस्तादसितः। पेलो विगतपुंस्को मेषः॥

वारुणमन्ततो दक्षिणत उदञ्चम्।१५।

अन्तत इति नित्यानुवादः। दक्षिणत उदञ्चं न पुरस्तात्प्रत्यञ्चं न चोत्तरतो दक्षिणं. यथा निन्दितं श्रुतौ. यदभिवाहतो ऽपां वारुणमालभेतेति॥

यदि कामयेत यो ऽवगतः सो ऽपरुध्यतामित्युक्तम्।१६।

यदि कामयेत यो ऽवगतः सो ऽपरुध्यतामित्यादिब्राह्मणोक्तः कामो ऽनुसंधातव्यः। तत्रावगत इत्यादि ध्रुवे व्याख्यातम्। एवंकाम ऐन्द्रस्य स्थाने सप्तमे यूपे वारुणं दक्षिणत उदञ्चमेवोपाकरोति. एकादश ऐन्द्रम्॥

इति षष्ठी कण्डिका।

आरण्यं पशुमाखुं वोपशये निर्दिशेत्।१।

उपशये त्वारण्यं पशुं गवयादिं आखुं वा पशुत्वेन बुद्ध्वा निर्दिशेत्. यथा गवयस्ते पशुः. आखुस्ते पशुरित्यादि॥

असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन्।२।

अथवा द्वेष्यं पशुत्वेन निर्दिशेत्. देवदत्तस्ते पशुरिति ॥

यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात्। ३।

यस्तु सन्तमपि द्वेष्यं न विवाधिषते तस्याखुस्ते पशुरित्येव निर्देशः। न गवयादिर्विकल्पते। तदियमत्र निष्ठा. पूर्वतर एव विधिः सति द्वेष्ये द्विष्यमाणे च. पूर्वः पूर्वतरस्य विकल्प्यते. सत्यपि तस्मिन्न-द्विष्यमाणे त्वयमेव विधिरिति ॥

प्रतिपशु बर्हींषि वपाश्रपण्यः कुम्भ्यो हृदय-शूलाश्च। ४।

पशुसमुदायापेक्षं बर्हिरादिषु बहुवचनम्। बर्हिरादीनि यथाविहि-तया संख्यया प्रतिपशु भवन्तीत्यर्थः॥ नन्वेकजातीये पशुगणे कुम्भ्यादीनां तन्त्रत्वं नानाजातीये भेदश्च परिभाषायां सिद्धः। कुम्भीशूलवपाश्रपणीप्रभुत्वात्तन्त्रं स्यात् जातिभेदे तु भिद्येत पक्ति-वैषम्यादिति न्यायविद्भिश्चोक्तम्। पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तत्र भावः स्यादिति. तथा जात्यन्तरेषु भेदः स्यात्पक्तिवैष-म्यादिति च। तत्को ऽस्य विधेर्विषय इति वक्तव्यम्। उच्यते. यत्रैकजातीया अपि पशवो नानादेवता भवन्ति यथाग्नेयसौम्यादय ऐकादशिनाः तत्रायं विधिः. यत्र त्वेकजातीयाः समानदेवताश्च भवन्ति यथा सप्तदश प्राजापत्याः तत्र तन्त्रत्वमिति विवेकः। युक्तं चैतत्. अन्यथा नानादेवतेषु तस्यतस्य यान्याया ऊर्ध्वं तत्तद्वपा-होमानुपपत्तेः. एकीभूतानां वसानां पृथक्करणायोगाच्च॥ तत्र

तन्त्रत्वे कुम्भ्यादीनां यथाप्रं महत्त्वमवगन्तव्यं सामर्थ्यात्। अथ प्लक्षशाखामपि प्रतिपश्विच्छन्ति. एकस्याः पशुगणधारणासामर्थ्यात्. प्लक्षशाखाभिरितरान्पशूनिति च लिङ्गात्. कण्ठोक्तेश्च सत्याषाढेन। विकल्पं त्वाह भारद्वाजः. यथा प्रतिपशु वा प्लक्षशाखेति ॥

तन्त्रमग्नेर्हरणं तथाध्रिगुः संज्ञप्तहोमो रशनानामुद्सनं परिवप्यौ वपाश्रपणीनामनुप्रहरणमभिहोमो मार्जनं च। ५।

एतान्यङ्गानि सर्वेषां पशूनां तन्त्राणि भवन्ति। तत्रायं कर्मक्रमः। उपाकृतेषु पशुष्वारण्ये निर्दिष्टे उपहोमाः. तत्र पश्वभिधानानां बहुवदूहः. यथा स्वर्गं यात प्रतितिष्ठतेत्यादि। ततो नियोजनकाले रशनादानादिविधिनैकैकं नियुनक्ति दक्षिणतो यूपस्य। ततः प्रोक्षणं पायनं सर्वतःप्रोक्षणमिति सेध्यकरणं नामैकं कर्म. तदेकैकस्य करोति। तथा पश्वञ्जनकाले शिरोऽञ्जनादि श्रोण्यञ्जनान्तमेकैकस्य करोति। तथा द्वितीये पश्वञ्जने तत्तत्सर्वाञ्जनाद्येकैकस्य। ततः पर्यग्निकरणं तन्त्रेण भवति। परितो ऽग्निर्यस्य स पर्यग्निरिति पश्वभिधायी बहुव्रीहिः। व्यक्तं च तत् पर्यग्नि करोति पशुं. पर्यग्निकृतानारण्यानित्यादौ। अतः पर्यग्निभ्यः क्रियमाणेभ्य इत्यूह्यः संप्रैषः। परितः क्रियमाणायाग्नय इत्यग्न्यभिधानादनूह इति केचित्। तदयुक्तं. पर्यग्नि करोति पर्यग्नि कृत्वेत्यादौ नपुंसकलिङ्गानुपपत्तेः. बहुव्रीहौ तु क्रियाविशेषणत्वेनोपपत्तेश्च। ननु तथापि गर्भिण्यां पशौ पर्यग्नौ क्रियमाणे जुहोतीति पुंलिङ्गानु-

पपत्तिः। पर्यग्नौ क्रियमाणायामिति तदा स्यात्। नायमस्ति दोषः. तत्र पशोर्विशेष्यत्वेन पुंलिङ्गाविरोधात्। तस्मादूह एव न्याय्यः। ततो वपाश्रपणीभ्यां मुख्यमन्वारभ्य मक्तदग्निरवे संप्रैषः। ततस्त्वमग्नेर्हरणम्। ततः शमिता पशुमेकैकं मुक्त्वा नयति. तंतमन्वारभेते चाध्वर्युर्यजमानश्च। ये बध्यमानं. प्रमुञ्चमानाः. नाना प्राण इति चावर्तन्ते ऽनूहेन। बौधायनस्तु तन्त्रेण नयनमाह. यथा आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते. पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त इति। ततः पृथक्पृथक् बर्हिरुपास्य तन्त्रेण संप्रेष्यत्यमायुं कृण्वतः संज्ञपयतेति। अथ स्वर्विदसीत्यादीनामूहः. यथा स्वर्विद स्थ. न वा उवेतन्म्रियध्व इत्यादि। वाशनादिनिमित्ते तु यथार्थमूहः. यथा अनु तं रवस्व अनु तं रवेथां अनु तं रवध्वं. अवाशिष्ठाः अवाशिषाथां अवाशिढ्वमित्यादि। ततः संज्ञप्तहोमस्तन्त्रेण. यत्पशवो मायुमकृषतोरोभि वा पद्भिराहत इति। ततः सर्वाभिर्वपाश्रपणीभिः पशूनुपेतः. पाशेभ्यः पशूनित्यूहेन। ततो ऽदितिः पाशमित्येकैकस्मात् पाशविमोको ऽनूहेन। ततो मुख्यस्यैकशूलया रशनानामुद्सनं तन्त्रेण। ततः पश्वाप्यायनमेकैकस्य कृत्वा शपनिनयनं तन्त्रेण। ततो दर्भान्तर्धानादि वपोत्कर्तनान्तमेकैकस्य कृत्वा प्रतितपनादि श्रपणान्तं तन्त्रेण। ततस्तत्तद्बर्हिषो ऽयं तस्यास्तस्या वपाया अधस्तादुपास्य त्वामु त इत्यभिहोमस्तन्त्रेण। ततः सुशृतास्वभिघारणमुद्वासनमासादनं च तन्त्रेण. तेषु चोहो मन्त्राणां. यथा ये व आत्मानः* पशुषु प्रविष्टा

* Corrected; the MSS. read आत्मन.

देवानां विष्ठामनु ये वितस्थिरे. आत्मन्वन्नः सोमा घृतवन्त इत्यादि । ततः प्रयुता द्वेषांसीत्यावर्तते । ततः परिवर्यौ तन्त्रेण । तथा वपाश्रपणीप्रहरणादि मार्जनान्तं च तन्त्रेण. मारुतं गच्छतेति चोहः । ततो विभज्य शामित्रे* पशुपाकः. ततः पशुषु संवद्- ध्वेत्यूहः. शृतं हवीः३ शमितरित्यनूहः. वपावच्चर्या हविष इत्यन्तौ नमतीति लिङ्गात्. नाभिरूपमा मेदो हविरित्यनूह्यानीत्याश्वला- यनवचनाच्च । ततः सकृदेव गमनमन्त्रेण गत्वा एकैकस्य हृदयम- भिघारयति । तथान्यः पृषदाज्यात्स्रुवानानयति । ततः पर्यायेण पशूनभिघार्योद्वासनानुमन्त्रणं तन्त्रेण । तत उद्वासनाद्यासादनान्तमे- कैकस्य । ततस्त्ववदानादीज्यान्तमेकैकस्य । तत्र च

अभ्यावर्तते मनोता । ६ ।

अवदानसमकाला तावन्मनोता. हविषो ऽवदीयमानस्येति लिङ्गात् । अत इज्याकालेन व्यवायात् प्रतिपश्वावर्तते. यथोक्तं. मनोतस्या- वृत्तिर्भिन्नकालेष्विति ॥

तन्त्रं वा । ७ ।

आग्नेयीयं मनोता पश्ववदानकाले ऽनुवाच्या हविषो देवतायां वा संस्कारार्था । अतः सकृदेवानुवचनमेकस्य पशुतन्त्रस्येति भावः ॥

सर्वेषां त्र्यङ्गानि समवत्तं च । ८ ।

---

* Corrected; the MSS. शामित्रं.

उत्तमे पशौ स्विष्टकृतं यजतीति वक्ष्यति। तत्र सर्वेषां यथाप्रत्य-वदेयानि. नोत्तमस्यैव पशोः। तथा समवत्तमिडापि सर्वेषामङ्गिर्नां भवति ॥

उद्रेकान्समवनीय दिशः प्रति यजति।९।

तस्यतस्य वसाहोमस्योद्रेकमेकत्र संभृत्यान्तिमस्योद्रेके समवनीय दिशः प्रति यजति ॥

उत्तमे पशौ वनस्पतिं यजति। स्विष्टकृतं च।१०।

उत्तमस्य पशोर्दैवतैरिष्ट्वा नारिष्ठाः ततो वनस्पतिस्विष्टकृतौ तत इडादि समानम् ॥

सर्वेषां गुदकाण्डैरुपयज उपयजति। जाघनीभिश्च पत्नीः संयाजयन्ति।११।

तत्र समुद्रं गच्छतेत्यस्योहः। तथा स्वरुहोमे द्यां वः पृणध्वमित्यूहः। न चाग्निष्ठस्वरोर्होमो ऽनूबन्ध्यापक्षे ॥

अनूबन्ध्यावपायां हुतायामग्रेण शालामुखीयं पात्नीवतं मिनोत्यधोनाभिमनवस्तीर्णे ऽचषालम्।१२।

अनूबन्ध्याया वपायां हुतायां आमिक्षाया वा प्रधाने हुते त्वाष्ट्रस्य पशोस्तन्त्रमारभ्यते। स एव च पशुः पात्नीवतः समाख्यायते. यथा हुतं वपया भवति अनिष्टं वशयाथ पात्नीवतेन प्रचरति. तीर्थ एव प्रचरति अथो एतर्ह्येवास्य यामस्त्वाष्ट्रो भवति. यत्पर्य-

ग्निकृतं पात्नीवतमुत्सृजतीत्यादि। समाख्यानिबन्धनं च पत्नीसंबन्धः। स च देवा वै त्वष्टारमजिघांसन्नित्यादिश्रुतावेव द्रष्टव्यः। एवं पात्नीवतपशुसंबन्धात् यूपो ऽपि पात्नीवतः। तमचषालमग्रेण शालामुखीयं बर्हिषा नवस्तीर्णे ऽवटे मिनोति। निखननादिवशादपि न्यूनाधिकभावो मा भूदिति पुनरधोनाभिवचनम्॥

**तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं पशुमुपाकृत्य पर्यग्निकृतमुत्सृज्याज्येन शेषं संस्थापयेत्। १३।**

तस्मिन्नेवंभूते पशुमुपाकृत्य नियुज्य पर्यग्निकरणान्तं कृत्वा पशुमुत्सृज्याज्येन प्रतिनिधिना तन्त्रशेषं संस्थापयेत्। एवं च कुम्भीशूलादयः मन्त्रप्रहोमादयश्चार्थलुप्ता द्रव्यक्रिया निवर्तन्ते॥

**यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आज्यस्यावद्येत्। १४।**

यद्यत्पशोरवदानं वपाहृदयादि तस्यतस्य स्थाने ध्रौवादाज्यस्याज्यावद्येत्। चोऽस्योन्पशावत्तिनः। हिरण्यशकलास्तु सर्वत्राविशिष्टा एव॥

**पशुधर्माज्यं भवति। १५।**

तदाज्यं पशुधर्मकं भवति, तत्प्रतिनिधित्वात्। वचनानि च तद्धर्मा स्यादिति। अतो वपास्थानस्याज्यस्य त्वष्ट्रे छागस्य वपाया मेदस इति संप्रैषः। तथा पुरोडाशहविषोरपि द्रष्टव्यम्। तथा जातवेदो वपया गच्छ देवानित्येव होमः। एवं प्रयाजानूयाजसमिष्टयजुरादयश्च पाशुका भवन्ति, न प्राकृताः॥

शालामुखीये प्रचरन्तीति विज्ञायते। १६।

एवं चोदयनीयवत्सार्वंग्निके विहारे सर्वं तन्त्रमित्युक्तं भवति। तत्राग्नेर्विहृतत्वात् उत्तरवेद्यादीन्यर्थलुप्तानि निवर्तन्ते। वेदिस्तु दार्शिकी क्रियते। ये चान्ये ऽनूबन्ध्यार्थमहृताः संस्कारास्ते ऽपि क्रियन्ते. यथा प्राजहितस्य परिस्तरणमुलपराजीरित्यादयः॥

अपि वा पर्यग्निकृतमेवोत्सृजेत्। न संस्थापयेत्। १७।

अपि वा पर्यग्निकरणान्तं कृत्वा पशुतन्त्रमत्यन्ततयोत्सृजेत्। न त्वाज्येन शेषं संस्थापयेत्॥

पशुपुरोडाशाद्यनूबन्ध्यायाः शेषं संस्थापयेत्। १८।

एवं पर्यग्निकरणान्ते कृत्स्नसंस्थे वा संस्थिते पात्नीवते ऽनूबन्ध्यायाः शेषं संस्थापयेत्॥

यदि कापेयी पश्वेकादशिनी स्यादाग्नेयमभित ऐन्द्रौ पशू भवतः। उत्तरतः सारस्वतं सौम्यं पौष्णं बार्हस्पत्यमिति। दक्षिणतः सावित्रं वैश्वदेवं मारुतं वारुणमिति। १९।

एवं स्वशाखोक्ता पश्वेकादशिनी व्याख्याता। इदानीं तस्यामेवैकादशिन्यां कियानपि शाखान्तरोक्तो विशेषः प्रदर्श्यते। कपयो नाम ऋषयः. तैर्दृष्टा कापेयी। सा चेच्चिकीर्षिता स्यात्तदाग्नेयमग्निष्ठ उपाकृत्य तस्य दक्षिणोत्तरयोर्यूपयोरैन्द्रावुपाकृतौ भवतः. तत उत्तरेषु यूपेषु क्रमात्सारस्वतादींश्चतुर उपाकुर्यात्. दक्षिणेषु

सावित्रादीन्। व्यत्यासो दक्षिणापवर्गत्वं च पूर्ववत्। नात्रैन्द्राग्नो विद्यते ॥

**तामेतां कापेया विदुः। तामतिरात्रचरम आलभेत। २०।**

इतिकरणो ऽन्ते द्रष्टव्यः। कपीनामन्तेवासिनः कापेयाः. कापेयव्यापिनो वा। तामेतामधिकृत्य एवं विदुः. तामतिरात्रचरम आलभेतेति। ननु को ऽयमतिरात्रचरमो नाम क्रतुर्यत्रेयमालभ्या। तत्रैव व्यनक्ति ॥

**साह्नीनेषु शब्दसंयोगात्। २१।**

सा कापेयी अह्नीनेष्वेवालभ्या भवति। तेष्वेव ह्ययमतिरात्रचरमशब्दो ऽर्थतः संयुज्यते. यस्मादतिरात्रा एव चरमास्तेषां. यथा वक्ष्यति द्विरात्रप्रभृतय उपरिष्टादतिरात्राः सत्राह्नीना ऐकादशरात्रादिति। ननु सत्रेष्वप्यविशिष्टमतिरात्रचरमत्वं. उभयतोऽतिरात्रत्वात्तेषां. यथा वक्ष्यति उभयतोऽतिरात्राणि भवन्तीति। तत्रेष्वप्यनयैव भवितव्यम्। तत्राह.

**सत्रीयेतरा भवति। २२।**

सत्राण्यर्हतीति सत्रीया। सत्रेष्वितरैवैकादशिनी भवति। येषां ह्यतिरात्रचरमत्वमेव विशेषकं नातिरात्रप्रथमत्वमपि तेषामपीयमेव युक्ततरेति भावः ॥

इति सप्तमी कण्डिका।

इति द्वितीयः पटलः ॥

**वासिष्ठो ब्रह्मा ज्योतिष्टोमे । १ ।**

उक्तं प्रागिष्टिपशुबन्धानां ब्रह्मत्वं. सोमस्येदानीमुच्यते। तत्र वासिष्ठो वसिष्ठगोत्रजो ब्रह्मा कार्यः ॥

**यो वा कश्चित्स्तोमभागान्विद्यात् । २ ।**

एवं चान्यो ऽपि यः* स्तोमभागान् रश्मिरसि क्षयाय त्वेत्यादीनि यजूंषि सार्थं सविनियोगं च वेद स ब्रह्मा स्यादित्यर्थः ॥

**आध्वर्यवेषु कर्मसु स्तुतशस्त्रयोश्च वाचं यच्छति। अन्तर्धौ च । ३ ।**

यथा च भवति छान्दोग्यं. ब्रह्मण्येव तावद्यज्ञो यत्रोपरताः. तस्मिन्नन्तर्धौ ब्रह्मा वाचंयमो बभूषेदिति। सत्याषाढश्चाह. यत्र क्व च यज्ञस्य विततं ब्रह्मण्येव तावद्यज्ञो भवति. तस्मादेतस्मिन्नन्तर्धौ ब्रह्मा वाचंयमः स्यादिति ॥

**यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् । ४ ।**

गतः ॥

**राजनि मीयमाने महावेद्यामुत्तरवेद्यां च क्रियमाणायामग्नौ मीयमाने क्रष्यमाण आप्यमाने चिते-**

---

* यः is missing in the MSS; only h has च before एवं.

श्चितेरुपधीयमानायाः संचितकर्मसूखाकर्मसु च क्रिय-माणेषु दक्षिणत आस्ते। ५।

अग्नौ अग्निचित्रे। ओण्यमाने औषधौ। संचितकर्मसु दाभ्यां संचित-मग्निमभिमृशेदित्यादिषु। उखाकर्मसु उखाकरणार्थेषु॥

राजन्योह्यमानेऽग्नौ प्रणीयमान उखामच्छ गच्छ-तामोह्यमानायां वसतीवरीः सवनीयाश्चाच्छ गच्छता-माह्रियमाणासु नैर्ऋतीरुपधास्यतां चित्यग्नीनां च प्र-णीयमानानां दक्षिणत एति। ६।

ओह्यमाने क्रीते राजन्यनमोह्यमाने। अग्नावौत्तरवेदिके प्रणीय-माने। उखामच्छ प्राप्तुं मृत्खननार्थं गच्छतां। ओह्यमानायां आनीयमानायां मृदि। सवनीयाः एकधनाः। चित्यर्था इष्टकाः चित्याग्नयः॥ दक्षिणत एति अध्वर्य्वादीनां दक्षिणतो गच्छति। तेषां दक्षिणं पार्श्वमासाद्य गच्छतामित्येके। तदा तु प्रत्यग्गच्छतामुत्तरो भवति, उदग्गच्छतां पुरस्तादित्यादि द्रष्टव्यम्॥

सदोहविर्धानेषु संमीयमानेष्वन्तरा चात्वालोत्करा-वन्ववेत्यापरेणोत्तरवेदिं दक्षिणातिक्रम्योपविशति। ७।

अन्ववेत्य प्रपद्य॥

आ वैसर्जनकालादास्ते। ८।

अर्वाक् समग्निव्रताज्ञानादत्रैवास्ते* ॥

* Cf. XI. 16. 12.

छोद्यमानेषु प्रत्यतिक्रम्योत्तरेण हविर्धानं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्यापरेण शालामुखीयं दक्षिणातिक्रम्योपविशति। ६।

छोद्यमानेषु वैसर्जनेष्विति शेषः। प्रत्यतिक्रम्येति येन पथा प्रविष्टस्तेनैव पथा प्रतिगच्छेदित्यर्थः॥

इत्यष्टमी कण्डिका।

एवावन्दस्वेत्युपस्थे राजानं कुरुते। १।

गतः॥

हुते पूर्वो निष्क्रम्यान्वङ्ङग्नेरेति। २।

हुते गार्हपत्यहोमे सर्वेभ्यः पूर्वो निष्क्रम्य प्राग्वंशात्परमध्वानमग्नये गच्छति, सोमप्रथमकल्पे। यदा त्वग्निप्रथमास्तदान्वगेवाग्नेर्निष्क्रम्य गच्छति, अन्यथा अग्निप्रथमाः सोमप्रथमा वा प्राञ्चो ऽभिप्रव्रजन्तीत्यनेन विरोधात्। गमनमन्त्रश्च ब्रह्मणो ऽपि समानः॥

आग्नीध्रीयं प्राप्य प्रतिप्रस्थात्रे राजानं प्रदायोत्तरेणाग्नीध्रीयं दक्षिणातिक्रम्योपविशति। पूर्ववदुपस्थे राजानं कुरुते। हुते पूर्वो निष्क्रम्यापरया द्वारा हवि[illegible]र्धानं राजानं प्रपाद्याध्वर्य[illegible]े प्रदायोत्तरेण [illegible]धा[illegible] गत्वापरेणोत्तरवेदिं दक्षिणा[illegible]तिक्रम्योपवि[illegible]। अग्नी-

षोमीयस्या वपाया होमादास्ते। हुतायां मार्जयते। वसतीवरीषु परिह्रियमाणासु दक्षिणत आस्ते। महारात्रे बुध्यमानेषु बुध्यते। उपाकृते प्रातरनुवाके वाचं यच्छत्या परिधानीयायाः। सवनीयासु प्रपाद्यमानासु पूर्वया द्वारा हविर्धानं प्रविश्याग्रेण खरं दक्षिणातिक्रम्योपविशति। ३।

सवनीयासु एकधनासु ॥

राजनि मीयमाने ऽभिषूयमाणे ग्रहेषु च गृह्यमाणेषु वाचं यच्छत्याग्रयणस्य ग्रहणात्। ४।

आध्वर्यवेषु कर्मस्विति वचनादेव सिद्धत्वादादरार्थं पुनर्वचनम्। आग्रयणावधिवचनं च कर्मान्तराणामपि परिग्रहार्थम्। केचित्तु आध्वर्यवान्तरपरिसंख्यानार्थं मानादिपरिगणनं मन्यन्ते। तदयुक्तं. आध्वर्यवेषु कर्मस्वित्यस्य वैयर्थ्यप्रसङ्गात्. कर्मणिकर्मणि वाचं यच्छतीत्यन्यत्रापि दर्शनाच्च ॥

वैप्रुषान्हुत्वा जुहोति। ५।

सप्तहोतारं च जुहोति. सप्तहोतारं च हुत्वा सर्पन्तीति सत्याषाढवचनात् ॥

पवमानेषु समन्वारब्धः सर्पति। ६।

गतः ॥

ब्रह्मन्स्तोष्यामः प्रशास्तरित्युच्यमाने देव सवितरेतत्ते प्राहेत्यनुद्रुत्य। ७।

इति नवमी कण्डिका।

रश्मिरसि क्षयाय त्वा क्षयं जिन्वों स्तुतेति प्रसौति। १।

बहिष्पवमानार्थमुद्गातृभिरेवमुक्ते आमन्त्रणं देव सवितरित्यादि सवितुः प्रसव इत्यन्तमनुद्रुत्य रश्मिरसीत्यादिना प्रसौति ॥

सर्वस्तोत्राणामेष कल्पः। २।

गतः ॥

उत्तरमुत्तरं स्तोमभागानां दधाति। ३।

उत्तरोत्तरत्र तु प्रसवे उत्तरमुत्तरं स्तोमभागानां दधाति ॥

द्वादशाग्निष्टोमे। पञ्चदशोक्थ्ये। षोडश षोडशिनि। सप्तदश वाजपेये। एकान्नत्रिंशतमतिरात्रे। त्रयस्त्रिंशतमप्तोर्यामे। ४।

एकत्रिंशदेव भवन्ति स्तोमभागाः।' अतोऽप्तोर्यामे षोडशैकत्रिंशयोरावृत्तिः। एवं सर्वत्र संख्यानियमे सत्यपि सामातिरेकनिमित्ते स्तोत्राधिक्ये तस्यतस्य क्रतोस्तत एव स्तोमभागाः। अत्र सवनान्त्यस्यावृत्तिः पूर्वयोः सवनयोः। तृतीयसवने त्वधिका एव निविशन्ते. क्रतोरेव तत्रोत्तरक्रतुभावित्वात् ॥

स्तुते पवमाने यथेतं गत्वापरेणोत्तरवेदिं दक्षिणातिक्रम्योपविशति । सवनीयस्या वपाया होमादास्ते । ५ ।

गतः ॥

हुतायां मार्जयित्वा प्रातःसवनायसंप्रसर्पत्सु ग्रहावकाशैः शृतंकारैश्चोपस्थायोत्तरेण हविर्धानं गत्वा दक्षिणेन मार्जालीयं धिष्णियं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण प्रशास्तुर्धिष्णियं दक्षिणातिक्रम्योपविशति । ६ ।

ग्रहावकाशशृतंकारैरेवात्रोपस्थानं. नेतरैः ॥

यत्रास्मै ब्रह्मचमसमाहरति तं प्रतिगृह्य भक्षयति यथेतरे चमसान् । ७ ।

येनैव कल्पेनेतरे चमसिनश्चमसान्भक्षयन्ति तेनैव भक्षयति ॥

उपाकृते स्तोत्रे वाचं यच्छत्या शस्त्रयाज्यायाः । ८ ।

स्तुतशस्त्रयोर्वाग्यमनमुक्तम् । तस्येदानीमवधिरुच्यते . स्तोत्रोपकरणादारभ्य शस्त्रयाज्यान्तमेव वाग्यमनमिति ॥

संस्थिते सवने यथेतं प्रतिनिष्क्रामति । ९ ।

यथेतं येन पथा सदः प्रविष्टस्तेनैव ॥

एवं विहित उत्तरयोः सवनयोः संचरो ब्रह्मत्वं च। १०।

यो ऽयमासनदेशानां प्रवेशनिर्गमयोः प्रातःसवने संचर उक्तः यथा-सनवाग्यमनवैप्रुषादि ब्रह्मत्वमुक्तं तदुभयमप्येवमेव विहितमुत्तरयोः सवनयोः॥

आध्वर्यव एवातो ऽन्यानि कर्माणि ब्रह्मण आम्नातानि भवन्ति। ११।

उक्तेभ्यो ऽन्यान्यपि यानि ब्रह्मणः कर्माणि तान्यप्याध्वर्यवविधिष्वेव सामान्यतो विशेषतश्चोक्तानि। सामान्यतः. यथा मन्त्रेषु नाराशंसेषु चमसिनः. प्रत्यञ्चश्चमसिनो दधिद्रप्सान्भक्षयन्तीत्यादि। विशेषतः. यथा ब्रह्मा मैत्रावरुणो वा पदापगृह्णाति. उपोत्तिष्ठति ब्रह्मा. ब्रह्मा वा मनसा ध्यायन्नित्यादि॥

अवभृथं गच्छतां दक्षिणतो गच्छति। १२।

दक्षिणत्वं पूर्ववत्॥

एवं विहितं सर्वसोमानां ब्रह्मत्वम्। १३।

सर्वसोमानामप्येतदेव ब्रह्मत्वम्। यत्तु किंचित्तेषां वैशेषिकं तदपि तत्रतत्रैव वक्ष्यते. ययावर्तमाने ब्रह्मा गायति. ब्रह्मा यजमानस्य हस्तं गृह्णातीत्यादि॥

इति दशमी कण्डिका।

इति तृतीयः पटलः॥

दक्षिणां प्रतिग्रहीष्यन्सप्तदशकृत्वो ऽपान्य व्यावृत्य प्रतिगृह्णीयात्। १।

वायोरन्तर्नयनं अपाननम्। आत्मनो ऽन्यं प्रतिग्रहीतारमपदिश्य प्रतिग्रहः व्यावृत्य प्रतिग्रहः। एतदुक्तं भवति. या यस्य दक्षिणा-द्रव्यस्य देवता तां तस्य प्रतिग्रहीत्रीं वक्ष्यमाणैर्मन्त्रैरपदिश्य प्रति-गृह्णीयादिति। तथा च ब्राह्मणं. अग्नये हिरण्यमित्याह. आग्नेयं वै हिरण्यं. स्वयैवैनद्देवतया प्रतिगृह्णातीति। तमेव व्यावृत्य प्रति-ग्रहप्रकारं निदर्शयति ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणे। अग्नये हिरण्यं तेनामृतत्वमश्याम्। वयो दात्रे मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता कामः प्रति-ग्रहीता। कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णा-मि। कामैतत्ते। एषा ते काम दक्षिणा उत्तानस्त्वाङ्गी-रसः प्रतिगृह्णात्विति। २।

गतः ॥

सोमाय वासः। रुद्राय गाम्। वरुणायाश्वम्। प्रजा-पतये पुरुषम्। मनवे तल्पम्। त्वष्ट्रे ऽजाम्। अग्नये वा। पूष्णे ऽविम्। निर्ऋत्या अश्वतरगर्दभौ हिमवतो

हस्तिनम्। गन्धर्वाप्सराभ्यः स्रगलंकरणे। विश्वेभ्यो देवेभ्यो धान्यम्। वाचे ऽन्नम्। ऊर्जे वा। ब्रह्मण ओदनम्। समुद्रायापः। उत्तानायाङ्गीरसायानः। वैश्वानराय रथम्। ३।

यथालिङ्गं वस्त्रादीनामेते मन्त्राः. तेषामप्यनुषङ्गः साम्यात्। उत्तरत्र स्वयं वक्ष्यति॥ अग्नये वा. अग्नये ऽजामिति वा मन्त्रः। अत्र-स्त्वाजाप्रकृतावप्यनियतेषूपात्तः. अविं ददात्यजां गामिति। अतो विकृतौ यत्राजो देयस्तत्रोह्यते॥ गर्दभाश्वतरयोर्व्यस्तयोरपि दाने निर्ऋत्या अश्वतरं निर्ऋत्यै गर्दभमिति मन्त्रः। स्रगलंकरणयोर्व्यस्त-योर्दाने गन्धर्वेभ्यः स्रक् अप्सरोभ्यो ऽलंकरणमिति भवति। धान्यं व्रीहियवादि। अन्नं अदनीयं मन्थादि. न त्वोदनः. तस्य पृथगु-पादानात्॥

वैश्वानर्यर्चा रथं प्रतिगृह्णीयाद्वैश्वानरः प्रत्नथा नाकमारुहद्दिवः पृष्ठं भन्दमानः सुमन्मभिः। ४।

इत्येकादशी कण्डिका।

---

स पूर्ववज्जनयज्जन्तवे धनं समानमज्मा परियाति जागृविरिति। १।

रथे वैश्वानर्याः समुच्चयः॥

यत्किंचाप्राणत्सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णा त्वित्येव प्रतिगृह्णीयात् । यदनाम्नातमन्त्रम् । २ ।

यत्किंचान्यदप्राणि द्रव्यं तदनेनैव प्रतिगृह्णीयात्. यदनाम्नातमन्त्रं वा स्यात् । आम्नातमन्त्रं तु हिरण्यादि तेनतेनैव मन्त्रेणेत्यर्थः ॥

सर्वंच पुरस्तात्साविच उपरिष्टादन्वाधिः । ३ ।

प्रथमवद्द्वितीयमन्त्रेष्वपि देवस्य त्वेत्यादि-देवि दक्षिण इत्यन्तः सावित्रः पुरस्तादनुषज्यते । तथोपरिष्टात् तेनामृतत्वमश्यामित्यादि-प्रतिगृह्णात्वित्यन्तो ऽन्वाधिः । अन्वाधीयत इत्यन्वाधिः । अथानुषङ्गः ॥

आत्वाक्रन्तन्नपसस्त्वातन्वत वरूत्रयस्त्वावयन्नित्येत-द्वासस्यनुषजति पुरस्ताद्दैवतात् । ४ ।

वासपि परस्तात्सावित्रस्य पुरस्ताच्च सोमशब्दस्यैतदनुषजति. यथा देवि दक्षिणे आत्वाक्रन्तन्नित्यारभ्य त्वावयन्सोमाय वास इति ॥

त इमे तान्त्रीणां दक्षिणानां प्रतिग्रहणाः स्युः । ५ ।

त इमे मन्त्रा यज्ञतन्त्रार्थानामेव दक्षिणानां प्रतिग्रहणाः. न तु लौकिकानां नापि होमाधानाद्यर्थानाम् । कुत इति-चेत् तत्र प्रमाणमाह ॥

विज्ञायते च । देवा वै वरुणमयाजयन् । स यस्यै-यस्यै देवतायै दक्षिणामनयत्तामव्रीनात् । ते ऽब्रुवन्व्या-वृत्य प्रतिगृह्णाम तथा नो दक्षिणा न व्रेष्यतीति । ते

व्यावृत्य प्रत्यगृह्णन्। ततो वै तान्दक्षिणा नाव्रीनात्। य एवंविद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्रीनातीति॥ तान्वीरेवाधिकुरुते। ६।

येयं प्रतिग्रहणमन्त्रविधायिका श्रुतिस्तान्वीरेवाधिकुरुते। कथम्। देवा वै वरुणमयाजयन्निति याजनं प्रकृत्य तन्निमित्ताया दक्षिणाया व्यावृत्य प्रतिग्रहविधानात् तदर्थत्वाच्च मन्त्राणाम्। अतोऽधिकाराद्यज्ञतन्त्रार्थदक्षिणाविषया एव मन्त्राः नेतरार्थविषया इति सिद्धम्। तथा तान्वीणामिति वचनात् साङ्गप्रधानकृत्स्नतन्त्र-दक्षिणाविषयाः नाङ्गदक्षिणाविषया इत्यपि सिद्धं भवति॥ अस्यार्थस्तु। देवा वै वरुणस्त्विज आसन्। स यस्मै यस्मै ऋत्विग्भूताय देवतापरपर्यायाय देवाय दक्षिणां दत्तवान् तां देवतां सा दक्षिणा हिंसितवती। ततो देवा व्यावृत्य प्रतिग्रहीष्यामेति मन्त्रयित्वा तथा चक्रुः। व्यावृत्य प्रतिग्रहस्तु प्रागेव व्याख्यातः। शेषः सुगमः॥

बर्हिषा प्रतीयाद्गां वाश्वं वा। ७।

बर्हिः तृणं। गां वाश्वं वा दीयमानं ग्रासार्थेन तृणमुष्टिना प्रतिगच्छेदित्यर्थः॥

अन्नेन पुरुषं हस्तिनं वा। ८।

पुरुषो मनुष्यजातीयो दासो दासी वा॥

गन्धैः प्रियवद्येन च तल्पम्। ९।

गन्धद्रव्यैर्माल्यानुलेपनादिभिः प्रियवादेन च तल्पं प्रतीयात्। तल्प-

ब्रह्मः शास्त्रेषु भार्यायां प्रयुक्तो लक्षणया. दैवेन विवाहविधिना कन्यां दीयमानामित्यर्थः। तथा च वक्ष्यति. दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेदिति। तथा दक्षिणाधिकार आश्वलायनः. अभिन्नयोद्-प्राणि कन्यां चेति॥

इति द्वादशी कण्डिका।

इति चतुर्थः पटलः॥

अथोत्तरेण पटलेन चतुर्होतॄणां काम्यनैमित्तिकान्प्रयोगान्वक्ष्यंस्तद-ध्ययनव्रतमपि प्रसङ्गादाह॥

संवत्सरं चतुर्णामेको नाश्नीयात्। तद्व्रतमिति वि-ज्ञायते चतुर्होतॄणामनुब्रुवाणस्य। १।

चतुर्णामेकपङ्क्तौ भुञ्जानानामन्यतमः संवत्सरं नाश्नीयात्. ततो ऽधीयीत। तच्चतुर्होतॄनधीयमानस्य व्रतमिति विज्ञायते॥

एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः। २।

इष्टिः यज्ञः। एतदुक्तं भवति. श्रौता अप्येते चतुर्होतृप्रयोगा अनाहिताग्नेरपि भवन्तीति॥

यः प्रजया पशुभिर्न प्रजायेत स द्वादशाहानि तप्त-मुदकं पिबन्बरासीं वसानो ऽधः शयीत। ३।

प्रजापश्वोः कामसमुच्चयो वक्ष्यमाणो विधिः। तस्येदं पुरश्चरणं. तप्तोदकं पिबत्यशनार्थे। बरासी स्थूलशाटी॥

द्वादश्याः प्रातः प्राङुत्क्रम्य प्राण्यापान्येन्द्रं गच्छ स्वाहेत्यपान्य दशहोतारं व्याख्याय चतुर्होतारं जुहुयाच्चतुर्गृहीतेनाज्येन । ४ ।

असमाप्ते सप्तव्रते द्वादश्या रात्रेः प्रातः साग्निः प्राङ्मुखो गत्वा प्राण्यापान्य पुनर्मन्त्रेणापान्य दशहोतारमग्रहं जपित्वा चतुर्होत्रा सग्रहेण जुहुयादाहवनीय औपासने वा ॥

अर्धं वा पूर्वेण ग्रहेण। अर्धमुत्तरेण। ५ ।

अथवा अर्धमाज्यस्य चतुर्होतुः पूर्वेण भागेन जुहोति. अर्धं पश्चा-त्येनोत्तरेण भागेन वाचस्पत इत्यादिना ॥

यः कामयेत प्रजायेयेति स द्वादशगृहीतेन स्रुचं पूरयित्वा दशहोतारं मनसानुद्रुत्य दर्भस्तम्बे सग्रहं जुहुयात्। अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण । ६ ।

अत्र ब्राह्मणो दक्षिणत उपास्त इत्युक्तं ब्राह्मणे। तदनादृतं सूत्रकृता ॥

यं ब्राह्मणं विद्यां विद्वांसं यशो नर्च्छेत्सोऽरण्यं परेत्य दर्भस्तम्बमुद्ग्रथ्य ब्राह्मणं दक्षिणतो निषाद्य चतुर्होतॄन्व्याचक्षीत । ७ ।

ब्राह्मणग्रहणात् क्षत्रियविशोर्नायं विधिः। विद्या वेदः। यशः श्रोत्रियत्वख्यातिः। परेत्य गत्वा। उद्ग्रथ्य बद्ध्वा। व्याचक्षीत वदेत्॥

सर्वान्त्ससंभारयजुष्कानित्याश्मरथ्यः। होतॄनित्यालेखनः । ८ ।

संभारयजुर्ग्रहणं संभारयजुरादि-हृदयान्तानामनुवाकानां प्रदर्शनार्थं ये चातुर्होत्रे ऽग्नौ प्रयुज्यन्ते। एतदुक्तं भवति. आश्मरथ्यमतात्तु चातुर्होत्रमन्त्राश्चतुर्होतार इति गुणकल्पेनेति ॥

**यो दक्षिणत आस्ते तस्मै वरं ददाति। ९।**

गतः ॥

**अथैता देवानां पत्नयः*। ताभिः प्रजाकामं पशुकामं वा याजयेत्। १०।**

सेनेन्द्रस्येत्यादिभिर्यजुर्भिरेवंकामस्य जुहुयादित्यर्थः ॥

**अन्तरा त्वष्टारं देवानां च पत्नीश्चत्वारिचत्वारि पदानि प्रतिसंख्याय यजेत। ११।**

पदमिति यजुरुच्यते। दर्शपूर्णमासयोः पत्नीसंयाजेषु त्वष्टरीष्टे पर्वणिपर्वणि चत्वारिचत्वारि यजूंषि गणयित्वा जुहुयात्। समाप्ते त्वनुवाके पुनःपुनरावर्तयेत् ॥

**यदि संवत्सरं न जायेत तत्परो न स्तृक्षेत्। १२।**

संवत्सराद्यदि न जायेत कामस्ततः परं स तं विधिमाद्रियेत। न क्लिश्नीयादित्यस्य लघूपाय इति भावः ॥

**दशहोत्राभिचरन्यजेत। १३।**

यजतिरत्रापि जुहोत्यर्थः। व्यक्तं चात्र ब्राह्मणे. अभिचरन्दशहोतारं जुहुयादिति ॥

* Cf. XIV. 15. 3.

स्वकृत इरिणे प्रदरे वा जुहुयात्। १४।

इरिणं ऊषरो देशः. तत्स्वयंकृतं भवति न तु पुरुषप्रयत्नेन। प्रदरः भूमिच्छिद्रम्॥

इति त्रयोदशी कण्डिका।

---

यद्वाचः क्रूरं तेन वषट्करोति। वाच एवैनं क्रूरेण प्रवृश्चति। ताजगार्तिमार्छतीति विज्ञायते। १।

वाचः क्रूराणि श्रुत्यैव दर्शितानि. यथा खट् फडित्याद्यनुक्रमेण वाचः क्रूराणीति। तेषामन्यतमेन वषट्करोति. स्वाहाकारस्थाने खडादिना जुहोतीत्यर्थः। ताजक् सद्यः॥

यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयाच्चतुर्गृहीतेनाज्येन। अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण। अस्य वीरो जायते। २।

वीरः सत्पुत्रः॥

न त्वेनमपरोऽनुजायते। ३।

अयं तस्य दोषः. नैनं पुत्रमन्वपरः पुत्रो जायते॥

वरो दक्षिणा। ४।

दक्षिणावचनात्स्वयंकर्तृको होमः॥

एतेनैव चतुर्होत्रा राजानं संग्रामे संयत्ते याजयेत्। ५।

एतेनैव चतुर्गृहीतेनाज्येनेत्यादिविधिना प्रवृत्तयुद्धस्य राज्ञो जुहुयात्॥

यत्तच विन्देरंस्ततो द्वादशशतं दक्षिणाः। ६।

संग्रामं जित्वा यत्तत्र धनं लभेरंस्ततो ऽपकृष्य द्वादशाधिकं शतं दक्षिणाः॥

पञ्चहोत्रा पशुकामं याजयेत्। ७।

एतेनैवेत्यनुवर्तते॥

चतुर्गृहीतेनाज्येन। अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण। चतस्रो दक्षिणा ददात्यश्वं हिरण्यं गां वास इति। ८।

नैतासु चतसृषु दक्षिणासु प्रतिग्रहमन्त्राः, दर्विहोमत्वात्॥

एतेनैव दक्षिणावर्जमामयाविनं स्वर्गकामं वा याजयेत्। ९।

एतेनैव पञ्चहोत्रा यथोक्तविधिकेन॥

मनसा स्वर्गकामस्य जुहुयात्। १०।

मनसानुद्रुत्य जुहुयात्॥

सप्तहोत्रा यज्ञविभ्रष्टं याजयेच्चतुर्गृहीतेनाज्येन। अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण। ११।

यज्ञविभ्रष्टः पूर्वप्रायश्चित्ते व्याख्यातः। तत्रेष्टिपशुविभ्रष्टस्येष्टिरेव प्रायश्चित्तं यो यज्ञविभ्रष्टः स्यादिति. सोमविभ्रेषस्य तु सोमः. सप्तदशेनाग्निष्टुता यज्ञविभ्रष्ट इति। अयं तु दर्विहोमत्वसामान्यादग्निहोत्रविभ्रष्टस्य भवति अर्वाक् चतुरहविभ्रेषात्। ततः परं तन्तुमत्युक्ता. तच्चेदं तन्तुमतीविधावेव दर्शितमस्माभिः। पिण्डपितृयज्ञभ्रेषे पार्वणादिपाकयज्ञभ्रेषे चायमेव विधिर्द्रष्टव्यः॥

यः कामयेत बहोर्भूयान्स्यामिति स दशहोतारं प्रयुञ्जीत। यः कामयेत वीरो म आजायेतेति स चतुर्होतारम्। यः कामयेत पशुमान्स्यामिति स पञ्चहोतारम्। यः कामयेतर्तवो मे कल्पेरन्निति स षड्ढोतारम्। यः कामयेत सोमपः सोमयाजी स्यामा मे सोमपः सोमयाजी जायेतेति स सप्तहोतारम्। १२।

बहोर्भूयान् प्रजापश्वादिबहोर्बहुतरः। प्रयुञ्जीत जुहुयात्. चतुर्गृहीतेनचतुर्गृहीतेनेति वचनात्। ऋतवो मे कल्पेरन् स्वं स्वं गुणं पोषयन्तः शिवाः गच्छन्तु। सोमयाजी जायेतेति धातुसंबन्धे प्रत्यया इति भविष्यदर्थे भूतवत्प्रत्ययः। सोमेज्यावत्सोमपानस्यापि पुरुषार्थत्वात् पृथक् सोमपवचनम्। अत एवोक्तं शास्त्रेषु. तावेवास्मै सोमपीथं प्रयच्छतः. सोमं पातुमर्हतीत्यादि॥

अथैष ऋतुमुखीयः षड्ढोता वाग्घोतेति। तस्य वदत्यृतुमुखऋतुमुखे जुहुयादिति। स सार्वकामः।१३।

य एष प्रायश्चित्ती वाग्घोतेति ऋतुमुखऋतुमुखे जुहोतीत्यादि शुद्धिकामस्यर्तुमुखेषूक्तः षड्ढोता । तमधिकृत्य ब्राह्मणान्तरमविशेषेण वदति, ऋतुमुखऋतुमुखे जुहुयादिति, न प्रायश्चित्तिं विशिनष्टि । तस्मात्स विधिः सर्वकामार्थः न परं शुद्धिकामस्येत्यर्थः ॥

इति चतुर्दशी कण्डिका ।

यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन पुरस्तात्प्रत्यङ्‌तिष्ठन्प्रतिलोमं विग्राहम् । प्राणानेवास्योपदासयति ॥ यद्येनं पुनरुपशिक्षेयुराग्नीध्र एव जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन पश्चात्प्राङासीनो ऽनुलोममविग्राहम् । प्राणानेवास्मै कल्पयतीति विज्ञायते । १ ।

यद्येनं पुरुषमार्त्विज्ये वृतं मन्त्रममति दोषे ततो भ्रंशयेयुर्यजमानकिंकराः तदाग्नौ तं जिघांसन्दशहोतारमेव जुहुयात् । उत्तमादारभ्य प्रतिपदं यजुषामनुद्रवणं प्रतिलोमता । यजुषियजुष्यवसानानुद्रवणं विग्राहः । उपदासः क्षपणम् । पुनरार्त्विज्ये स्थापनं उपशिक्षणं, यथाधीतो दशहोता ऽनुलोममविग्राहं च भवति ॥

स यः कामयेत प्रियः स्यामिति यं वा कामयेत प्रियः स्यादिति तस्मा एतं स्यागरमलंकारं कल्पयित्वा दशहोतारं पुरस्ताद्व्याख्याय चतुर्होतारं दक्षिणतः

पञ्चहोतारं पश्चात्षड्ढोतारमुत्तरतः सप्तहोतारमुपरिष्टात्संभारैश्च पत्निभिश्च* मुखे ऽलंकृत्याश्याधं व्रजेत्। प्रियो हैव भवतीति विज्ञायते। २।

यः आत्मनः परस्य वा किंचित्प्रतिप्रियत्वं कामयते स तस्मै यं प्रियं चिकीर्षति तदर्थं स्थागरं स्थगराख्येन द्रव्येण कृतं अनुलेपनाद्यर्थमलंकारं पात्रे स्थापयित्वा तस्य प्रागादिषु दिक्षु तदभिमुखः स्थितो दशहोत्रादीनुदित्वा तथा संस्कृतेन तेन अग्निर्यजुर्भिः सेनेन्द्रस्येत्यनुवाकाभ्यां मुखे पुण्ड्रकादिरूपमलंकारं कृत्वास्य वशीकार्यस्याधं स्थानमाव्रजेत्। स्वयं वा परो वा यः प्रिय इष्यते सो ऽलंकृतः. तस्य प्रिय एव भवति ॥

अथ प्रकृतीप्रकृतविषयाणां चतुर्होतॄणां सामान्यव्याख्या क्रियते ॥

त इमे चतुर्होतारो यत्र होमार्थाः सग्रहाः सस्वाहाकारास्तत्र प्रयुज्येरन्। यत्राहोमार्था अग्रहा अस्वाहाकाराः। ३।

त इमे चतुर्होतारो यत्र क्वच ब्राह्मणे होमार्थाश्चोद्यन्ते. यथा अभिचरन्दशहोतारं जुहुयात्. दर्शपूर्णमासावालभमानश्चतुर्होतारमित्यादौ. तत्र सग्रहाः प्रयुज्येरन्। यत्र त्वहोमार्थाः. यथा यं ब्राह्मणं विद्यां विद्वांसं पञ्चहोत्रा पशुमुपसादयतीत्यादौ. तत्राग्रहाः प्रयुज्यन्ते॥ स्वाहाकारविधिनिषेधौ विस्पष्टार्थौ ॥

* Thus all MSS. and Taitt. Br. 2. 3. 10. 2.

ये च जपा याजमानाः । ४ ।

अहोमार्थेषु मध्ये ये च जपार्थाश्चोद्यन्ते ते याजमाना भवन्ति न त्वाध्वर्यवाः. यथा चतुर्होतॄन्व्याचक्षीत. बहिष्पवमाने दशहोतारं व्याचक्षीतेत्यादिषु । येषां तु विशिष्टकर्तृकैव चोदना ते तत्तत्कर्तृका एव भवन्ति. यथा हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत. सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीतेत्यादिषु दशहोत्रादयः । व्यक्तोऽप्ययमर्थः सत्याषाढेन. यथा ये जपा याजमानास्त इत्यादि ॥

तेषां ये विहारसंयुक्ता आहिताग्नेस्तान्प्रतीयात् । उभयोरितरान् । ५ ।

तेषां चतुर्होतॄणां मध्ये ये विहारसंयुक्ता भवन्ति यथा अर्थैता देवानां पत्नयः. दर्शपूर्णमासावालभमानश्चतुर्होतारमित्यादिषु पत्नयश्चतुर्होत्रादयश्च. ते आहिताग्नेरेव भवन्ति । ये तु विहारेणासंयुक्ताः. यथा यः कामयेत प्रजायेयेति. यं ब्राह्मणं विद्यामित्यादिषु दशहोत्रादयः. ते आहिताग्नेरनाहिताग्नेश्च भवन्ति । तत्राहिताग्नेराहवनीय औपासने वा होमः. अनाहिताग्नेस्त्वौपासने ॥

इति पञ्चदशी कण्डिका ।

इति पञ्चमः पटलः ॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥ अग्निनाग्निः समिध्यते । सम ते अग्ने । मनो ज्योतिर्जुषताम् । चय-

स्त्रिंशत् ॥ यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः। अयं देवो बृहस्पतिः सं तत्सिञ्चतु राधसा ॥ विश्वकर्मा हविरिदं जुषाणः संतानैर्यज्ञं समिमं तनोतु। या व्युष्टा उषसो याश्च निम्रुचस्ता संदधामि हविषा घृतेन ॥ अयाश्चाग्ने ऽसि। त्वं नो अग्ने। स त्वं नो अग्ने ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः*। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ प्रेद्धो अग्ने दीदिहीत्येषा। १।

इति षोडशी कण्डिका।

अश्लकर्णाय कवये वेद्याय नमोभिर्नाकमुपयामि

* Corrected according to Rigveda 1.89.7; all MSS. read जग्मवः.

शंसन्। यतो भयमभयं तन्नकृधी नो ऽग्ने देवानामव हेड इयक्ष॥ अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्। यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः॥ घृतप्रतीको घृतपृष्ठो अग्निर्घृतैः समिद्धो घृतमस्यान्नम्। घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्यजतादिव देवान्॥ आयुर्दा अग्ने। इमो अग्ने। सप्त ते अग्ने। मनो ज्योतिर्जुषताम्। त्रयस्त्रिंशत्। यन्मे मनसः। विश्वकर्मा। अग्निं युनज्मि। इन्धानास्त्वा॥ अग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु। वायुर्न ईडित ईडितव्यैर्देवैरान्तरिक्ष्यैः पातु। सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु। विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पातु। अग्निर्यजुर्भिः पूषा स्वगाकारैस्त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभे ऽनु मारभध्वं स्वाहेत्येतैस्त्रिभिरनुवाकैरविज्ञातप्रायश्चित्ते सोमे त्रयस्त्रिंशतमाहुतीर्जुहोति। १।

अथ सोमप्रायश्चित्तान्युच्यन्ते। तत्राश्रुतानि विशेषप्रायश्चित्तानि यत्र दोषाणां सो ऽविज्ञातप्रायश्चित्तः सोमः। एतदुक्तं भवति. पुरुषप्रमादालस्यादिभिस्तत्र प्रायशो भवन्त्येवान्येऽन्ये दोषाः. न च ते सर्वे श्रुतप्रायश्चित्तविशेषा एव भवन्ति. विचित्रत्वात्तेषां. तस्माददृष्टदोषविघातार्था एता आहुतीर्जुहोतीति॥ तत्र अग्निर्न ईडित

इत्यादीनां त इमं यज्ञमित्यादिरनुषङ्गः । यथा पार्थिवैः पातु त इमं यज्ञमित्यादि. तथा अग्निर्यजुर्भिस्त इमं. पूषा स्वगाकारैस्त इममिति च ॥

त्रयस्त्रिंशत्तं चाग्नीध्रे यज्ञतनूः । २ ।

नात्र पूर्वपूर्वानुद्रवणं. अवचनात् ॥

पृथिवि भूवरि सिनीवाल्युरन्ध्र* आचित्ते मनस्ते भुवो विवस्व इति वसतीवरीषु सवनीयासु वा विषिक्तासु सप्ताहुतीर्हुत्वा । ३ ।

इति सप्तदशी कण्डिका ।

य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं व आध्यासम् । सोमस्याज्यमसि हविषो हविर्ज्योतिषां ज्योतिः । विश्वेषां वो देवानां देवताभिर्गृह्णामीत्यभिमन्त्र्य सं वः सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं वो ऽयमग्निः सिञ्चत्वायुषा च धनेन च । सर्वमायुर्दधातु मे । मान्दा वाशाः । आपो भद्राः । आदित्पश्यामि । आपो हि ष्ठा मयोभुव इत्येताभिः सप्तभिः संसिञ्चेदभि वा मन्त्रयेत । १ ।

* Thus all MSS.

प्रतिपदमेकैकाहुतिः। भुवो विवस्त इति सप्तमी। सवनीयासु एकधनासु। विषिक्तासु स्कन्नासु॥ संसिञ्चेत् ता एव पुनराददीत। यदा त्वादानायोग्यास्तदाभिमन्त्रयेत॥

यदि प्रातःसवने प्राग्घोमात्सोममतिरिक्तं पश्येत्तं चमसेष्वभ्युन्नयेदुपजुहुयाद्वा। २।

प्रातःसवने ऽग्निमस्य चमसगणस्य प्राग्घोमाद्यदि कलशादिषु पश्ये-दतिरिक्तं चमसेष्वानयेत् उपजुहुयाद्वा पत्निवतादिना अर्वागनुवष-ट्कारात्। उपहोमात्तु परतो होमाद्दर्शने ऽपि यावदनुवषट्कारं लभ्यन्ते. उपहोमकालानत्ययात्। प्राग्घोमादिति चानुवषट्कारहोमो ऽभिप्रेतः॥

हुते दृष्ट्वा स्तुतशस्त्रवन्तं कुर्यात्। ३।

निर्वृत्ते सानुवषट्कारहोमे दृष्ट्वा ततः स्तुतशस्त्रवन्तं सोमं कुर्यात्॥

होतृचमसमुख्यांश्चमसानुन्नीय बृहतः स्तोत्रमुपाक-रोति। ४।

अतिरिक्तादेवोपस्तरणं चमसानाम्। अत्र चमसानुन्नीयेति वचनात् चमसगणाय पर्याप्तसोमातिरेक एवातिरिक्तविधिः. अन्यथा अग्नि-नरादिविधिरेवेति सिद्धं भवति। केचित्त्वाहुतिमात्रातिरेके ऽप्येकध-नाभिर्वर्धयित्वातिरिक्तविधिं कुर्वन्ति॥

गौर्धयति मरुतामिति धयद्वतीषु स्तुवीरन्। ५।

पञ्चमो ऽत्र स्तोमभाग इति ब्रह्मत्वविधावेव दर्शितम् ॥

अस्ति सोमो अयं सुत इति वैतासु बृहता गौरिवीतेन वा स्तुवीरन्। ६।

एतासु वा स्तुवीरन्, नेतरयोरन्यतरेण साम्ना ॥

ऐन्द्रावैष्णवं होतानुशंसति। ७।

गतः ॥

इन्द्राविष्णुभ्यां पीतस्येति भक्षमन्त्रं नमति। ८।

यथादेवतपत्त एवं संनामः ॥

यदि माध्यंदिन एतदेव। ९।

यदि माध्यंदिने ऽतिरिक्तं पश्येदेतदेव प्रायश्चित्तम् ॥

स्तोत्रे विकारः। बण्महाँ असि सूर्येति सौरीषु बृहता गौरिवीतेन वा स्तुवीरन्। १०।

गतः ॥

तथैव होतानुशंसति। तथा भक्षमन्त्रः। ११।

तथैन्द्रावैष्णवमेव शंसति, न तु स्तुतानुसारेण सौरमिति भावः ॥

यदि तृतीयसवने ऽतिरिच्येतोक्थ्यं कुर्वीत। १२।

तृतीयसवने ऽपि प्राग्घोमाद्दृष्ट्वा स एवाभ्युन्नयनविधिर्दर्पहोमो वा। हुते तु दृष्ट्वा अग्निष्टोमश्चेत्क्रतुस्तमुक्थ्यं कुर्वीत। तत्रातिरिक्तं स्व-

माध्यन्दिने प्रकृतिवद्धारां कृत्वा स्थाल्योक्थ्यं गृह्णाति। तत एकधनानां यथार्थमित्येतदाद्या पञ्चहोतुः क्रियते। ग्रहावकाशप्रभृतं-कारास्तु लुप्यन्ते. प्रसर्पणान्तो ग्रहानवेक्षन्ते इति वचनात्। ततः प्रातःसवनवदुक्थ्यं विगृह्णातीत्याद्युक्तेतः सर्वं राजानमित्यन्तं तन्त्रं तायते। स्तोत्रेषु चोक्थ्यवदेव स्तोमभागः. न तु द्वादशस्यावृत्तिः उक्थ्यत्वविधानात्॥

यद्युक्थ्ये षोडशिनम्। यदि षोडशिन्यतिरात्रम्। यद्यतिरात्रे द्विरात्रम्। यदि द्विरात्र एकस्तोत्रमेव।१३।

तृतीयसवने ऽतिरिच्येतेति कुर्वीतेति चानुषङ्गः. सर्वः प्रयोगस्त्वेषां ग्रहग्रहणादिरुक्थ्यवद्द्रष्टव्यः। एकस्तोत्रमेवेति तृतीयसवने ऽपि सवनान्तरवदेकस्तोत्रमेव. न तूत्तरः क्रतुरित्यर्थः। अत्र सूत्रकारेण शाखान्तरानुसारादतिरात्रातिरेके द्विरात्रः ततः परमेकस्तोत्रं चोक्तम्। तैत्तिरीयके ऽतरात्रातिरेके ऽप्येकस्तोत्रमेवोच्यते यस्यातिरात्रे ऽतिरिच्यते तं वै दुष्प्रज्ञानमित्यादिना। छन्दोगबह्वृचैरपि तदेवाम्नातं अनुमतं च तत्सत्कल्पकारैः. वचनानि तु विस्तरभयान्न लिख्यन्ते। अतो ऽतिरात्रातिरेके ऽप्येकस्तोत्रं युज्यते विकल्पयितुम्। कात्यायनस्तु तत्रैकस्तोत्रमुक्त्वाह. अप्तोर्यामो वेति। अप्तोर्याम्ने ऽप्येकस्तोत्रमेवाहोपग्रन्थकारः. अथाप्तोर्यामे गौरिवीतमेव शिपिविष्टवतीषु कुर्युरिति॥ अथ विकृत्येकाहानां यथास्वं प्रकृत्युक्त एवातिरिक्तविधिरनुसंधातव्यः। वाजपेये त्वेकस्तोत्रमेवोक्तवानुपग्रन्थकारः. तथा तासु हृत्स्निधनं वा जन्मं* कुर्युरिति॥ अत्र पुनः सर्वस्यास्य सोमातिरेक-

* Corrected conjecturally; h वाग्जन्मं, the other MSS. वा जन्मं.

विधेरनुग्रहमाचष्टे बौधायनः. यथा यस्य प्रातःसवन इत्यादि यथा-ब्राह्मणमुक्ताह. इति छन्दोगबह्वृचेषु कामयमानेषु ते चेन्न कामयेरन् प्रातःसवने ऽतिरिक्ते यां स्थालीं राज्ञ ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति तं त्रिरभिविष्यन्दयति. सो ऽभिविष्यन्दमानः सर्व एवाग्रयणः संपद्यते. तं त्रिरभिहिङ्कृत्य परिमृज्यासादयतीति । तथा माध्यंदिने ऽप्येतमेव विधिमविशतमुक्ताह. तृतीयसवने ऽतिरिक्ते हारियोजनमेवात्राभिविष्यन्दयति. नहि पुनर्ग्रहणं विद्यत इति ॥ कात्यायनो ऽप्याह. पूर्वात्सवनादतिरिक्तस्योत्तरे संपादनमेके*. तं निकामयमानो ऽप्यतिरिच्यत इति श्रुतेः. तृतीयसवनाच्चेद्धारियोजने ऽवनीय होमः. असमृताहजीषमिश्रस्यापवहरणमिति ॥ अथ यदा सूत्रकारमतादतिगात्रे द्विरात्रः क्रियते तदा पूर्वमहः पत्नीसंयाजान्तं संस्थाप्य द्वितीयो ऽप्यतिरात्रः कार्यः । उपरिष्टादतिरात्रत्वादहीनानां व्युष्टिद्विरात्रप्रकृतित्वाच्च द्विरात्राणां एवमन्ये ऽप्यहीनधर्मा द्विरात्रधर्माश्च यथाप्रकृति द्रष्टव्याः ॥

**तत्र वैष्णवीषु शिपिविष्टवतीषु बृहता गौरिवीतेन वा स्तुवीरन् । १४ ।**

तार्तीयसवनिक एकस्तोत्रे ॥

---

* Corrected according Kâty. S'r. 25. 13. 16; my MSS. have संपादनमेके, only h सवनमेके.

तथैव होतानुशंसति । तथा भक्षमन्त्रः । १५ ।

तथैवानुशंसति ऐन्द्रावैष्णवमेवानुशंसति यथा सवनान्तरे ॥

इत्यष्टादशी कण्डिका ।

इति षष्ठः पटलः ॥

---

The commentary to the following paṭala, comprising the kanḍikâs 19, 20, 21 and 22, is unfortunately lost; at least, all my MSS. have a lacuna here, and, in most of them, the reader's attention is directed to it by some special remark, such as त्रुटितं पटलपत्रं (b) or सप्तमः पटलस्त्रुटितः (c) or पटलं त्रुटितं (ik). I regret exceedingly not to be able to insert here Dhûrtasvâmin's commentary to the four kanḍikâs in question, because the MS. of this comment the use of which I owe to the invaluable kindness of the late Dr. Burnell,—and which, I may add, is the most extensive MS. of Dhûrtasvâmin's work hitherto discovered, but still breaking off at the 7th kanḍikâ of pras'na XVIII—lacks pras'na XIV altogether.

यदि सोमौ संसुतौ स्यातामादितश्चतुर्भिः संभारयजुर्भिर्हुत्वा महारात्रे प्रातरनुवाकमुपाकृत्यान्वारब्धे यजमाने जुहोति संवेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहेति । १ । एवं सवनादौसवनादावुत्तरैरुत्तरैश्चतुर्भिः संभारयजुर्भिश्छन्दसा चोत्तरेणोत्तरेण पाङ्क्तात् । २ । पञ्चसवनो यज्ञः । त्रीणि सवनान्यवभृथो ऽनूबन्ध्येति ।

पञ्च समिद्धे ऽग्नौ हूयन्ते प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टमिति। ३। पुरस्तात्प्रागु-कात्स्विष्टकृतो ऽध्वर्युर्जपत्येतिवन्ति प्रेतिवन्ति वाज्यानि। ४। मरुत्वतीर्वृषण्वतीर्वा प्रतिपदः। ५। अभीवर्तो ब्रह्मसाम। ६। उभे बृहद्रथंतरे भवतः। ७। यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत। यद्युक्थ्यः षोडशिनम्। यदि षोडश्यतिरात्रम्। यद्यतिरात्रो द्विरात्रम्। यदि द्विरात्रस्त्रिरात्रम्। यदि त्रिरात्र एकस्तोत्रमेव। ८। अभिजित्कार्यो ऽभिजित्यै। विश्वजित्कार्यो विश्वजित्यै। सर्वपृष्ठः सर्वस्तोमो ऽतिरात्रो भवति सर्वस्याप्त्यै सर्वस्यावरुद्ध्या इति विज्ञायते। ९। सजनीयं शस्यं विहव्यं शस्यमगस्त्यस्य कयाशुभीयं निष्केवल्यम्। तानि शंसेत्। १०। सजनीयं प्रातःसवनिके वैश्वदेवे ऽनुप्रोहेत्। विहव्यं माध्यंदिनीये मरुत्वतीये। अगस्त्यस्य कयाशुभीयं निष्केवल्यं तार्तीयसवनिके वैश्वदेवे ऽनुगृह्णेत्। ११।

इति चतुर्विंशी कण्डिका।

तत्रेमाः सामचोदना भवन्ति। तैरश्रवसं कार्यम्। वसिष्ठस्य निहवः कार्यः। अभीवर्तं ब्रह्मसाम कुरु-

तात्। उभे बृहद्रथंतरे कुरुतात्। अभिजितं विश्व-
जितं वा यज्ञक्रतुं कुरुतात्। क्रोशानुक्रोशे कुरुता-
दिति ।१। पुरस्तात्प्रातःसवनात्संप्रेष्यति ।२। पूर्वः
संस्थाप्यः। अत्यभिषुत्यं वा। दक्षिणाभिर्वा वर्षीयांसं
यज्ञक्रतुं कुर्वीत ।३। यावद्रथाह्नमन्तरा गिरिर्गिरि-
भिद्वा नदी व्यवेयात्पर्वतान्तरये वा नानाराज्ययोर्वा
संसवो नाविद्विषाणयोः संसवो विद्यत इति कङ्कति-
ब्राह्मणं भवति ।४। यत्र दीक्षितानामुपतापः स्याद्य-
जमानायतने शयीत ।५। तं परिगृह्याग्नीध्रं नयेत् ।६।
परीमं परि ते ब्रह्मणे ददामि ब्रह्म परिददातु देव-
ताभ्यः। वषट्कारस्त्वा भिषज्यतु सह विश्वैर्देवैः।
वसव एतद्वः प्रातःसवनं रुद्रा एतद्वो माध्यंदिनं सवनं
विश्वे देवा एतद्वस्तृतीयसवनम्। तद्रक्षध्वं तद्भिषज्यत
तद्गोपायत तद्वो मा विगादिति सर्वत्रानुषजति ।७।
आग्नीध्रीयमुपसमाधाय संपरिस्तीर्य ब्राह्मणं दक्षिण-
तो दर्भेषु निपाद्योत्तरत उदपात्रमुपनिधाय तस्मि-
न्नेकविंशतिं* यवान्दर्भपुञ्जीलांश्चावधाय जीवा नाम
स्थ ता इमं जीवयत जीविका नाम स्थ ता इमं

* Corrected according to Âs'valâyana's S'rauta Sûtra 6. 9. 1; all my MSS. have एकविंशति.

जीवयत संजीविका नाम स्थ ता इमं संजीवयतेति प्रतिब्रूयात् । ८ ।

इति विंशी कण्डिका ।

या जाता ओषधय इत्योषधिसूक्तेनैनमेताभिरद्भिरभिषिञ्चति । १ । आपः प्रजापतेः प्राणा यज्ञस्य भेषजमिति चैनमाचमयन्ति । २ । अथैनमभिमृशन्ति । ३ । उपांश्वन्तर्यामौ ते प्राणापानौ पातामुपांशुसवनस्ते व्यानं पातु वाचं त ऐन्द्रवायवः पातु दक्षक्रतू ते मैत्रावरुणः पातु चक्षुषी ते शुक्रामन्थिनौ पातां श्रोत्रं त आश्विनः पात्वात्मानं त आग्रयणः पात्वङ्गानि त उक्थ्यः पात्वायुष्टे ध्रुवः पात्वसावसा-विति सर्वत्रानुषजति । ४ । अथात्मानं प्रत्यभिमृशत्युपांश्वन्तर्यामौ मे प्राणापानौ पातामिति । ५ । एवं क्रामत्या ध्रुवात् । ६ । पुष्टिपतये पुष्टिश्चक्षुषे चक्षुः प्राणाय प्राणमात्मन आत्मानं वाचे वाचमस्मै पुनर्धेहि स्वाहेत्याहुतिं हुत्वा पूर्ववदभिमर्शः । ७ । यदि म्रियेत प्रागवभृथादग्न्यवभृथं कुर्वीरन् । ८ । अवभृथं वा गमयित्वा प्रोक्ष्यैनमभ्युदाहृत्य स्वैरग्निभिर्यथालोकं

दहेयुः । ९ । एतावदेकाहे । १० । अहर्गणेष्वाहर दहे-त्युक्त्वा दक्षिणाग्नेरग्निमाहृत्य निर्मन्थ्येन वा दग्ध्वा दक्षिणेन मार्जालीये मृतस्य दहनम् । ११ । तूष्णीं तदहः परिसमाप्य पत्नीसंयाजान्ते कुम्भे ऽस्थीनि संभृत्य मार्जालीये निदधाति । १२ । उद्गातारस्ति-सृभिः सर्पराज्ञीभिरप्रतिहृताभिः स्तुवीरन् । १३ ।

इत्येकत्रिंशी कण्डिका ।

---

ऋत्विजो होतृप्रथमाः प्राचीनावीतिनो यामी-रनुब्रुवन्तः सर्पराज्ञीनां कीर्तयन्तो दक्षिणान्केशपक्षा-नुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः सिग्भिर-भिधून्वन्तस्त्रिः प्रसव्यं परियन्त्यप नः शोशुचदघमि-ति । १ । सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य सव्यानूरूना-घ्नाना अनभिधून्वन्तस्त्रिः प्रतिपरियन्त्यप नः शोशुच-दघमिति । २ । ते यदोदञ्चः संपद्यन्ते ऽथैभ्यो ऽध्वर्यु-र्दक्षिणतो ऽश्मानं परिधिं दधातीमं जीवेभ्यः परिधिं दधामि मा नो नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेनेति । ३ । अ-ग्निष्टोमः सोम ऐन्द्रवायवाग्रो मैत्रावरुणाग्रो वा* । ४ ।

---

* C adds यदा here which is to be supplied per se.

यामीभिः स्तुवते। ५। स्तोत्रेस्तोत्रे ऽस्थिकुम्भमुपनि-
दधाति। ६। मार्जालीये भक्षान्निनयन्ते। ७। अग्न
आयूंषि पवस इति प्रतिपदं कुर्वीरन्। ८। रथंतरसा-
मैषां सोमः स्यात्। ९। आयुरेवात्मन्दधते ऽथो
पाप्मानमेव विजहतो यन्तीति विज्ञायते। १०। यद्यु
वै नाथवान्स्यादृग्ध्वैनं कृष्णाजिने ऽस्थीन्युपनह्य नि-
धाय यो ऽस्य स्वो नेदिष्ठी स्यात्तत्स्थाने.तं दीक्षयित्वा
तेन सह यजमाना आसीरन्। ११। संवत्सरे ऽस्थीनि
याजयेयुः। १२। व्यापातादित्याश्मरथ्यः। आदवसा-
नीयादित्यालेखनः। १३। अग्निष्टोमः सोम इत्येत-
दादि। १४। पूर्ववद्द्वादशं शतं दक्षिणाः। १५।

इति द्वाविंशी कण्डिका।

इति सप्तमः पटलः॥

यदि सत्त्रायागूर्य न यजेत विश्वजितातिरात्रेण
सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत। १।

आगोरणं मनसा संकल्पः, वाचा चेत्यपरे. यो यज्ञ इत्युक्त्वा न
यजत इति लिङ्गात्॥

त्रैधातवीयामेके सहस्रदक्षिणां समामनन्ति। २।

यात्र यो यस्य इत्युक्तेति विधिप्राप्ता वैधातवीया सा सहस्र-दक्षिणा कार्या ॥

**सत्त्रे दीक्षित्वा यदि साम्युत्तिष्ठासेत्सोममपभज्य विश्वजितातिरात्रेण पूर्ववद्यजेत । ३ ।**

यः सत्त्रे दीक्षित्वा रोगादिना निमित्तेन मध्य एवोत्थातुमिच्छेत्स सोमस्य स्वांशं गृहीत्वा स्वाग्नींश्च समारोप्य गत्वा कृतात्मादेव प्रक्रम्य विश्वजिद्विधिना क्रतुः समापनीयः। पूर्ववदिति सर्वपृष्ठ-त्वाद्यतिदेशः। न चास्य सत्रदशो ऽग्निष्टुद्भवति, अत एव विधे-रयज्ञविशेषात् ॥

**यदि दीक्षासूत्तिष्ठासेदवलिख्योखायास्तैरन्यां मृदं संसृज्योखां कारयेत् । ४ ।**

दीक्षासूत्तिष्ठेत् सत्त्रोखायाः पांसूनपादाय तैरन्यां मृदं संसृज्य तूष्णीमुखां कृत्वा तस्यामुख्यमुत्पादयेत् ॥

**अवलिख्य पशुशिरसां तूष्णीकेष्वाश्लेपयेत् । ५ ।**

तथा पञ्चपशुशिरोभ्यो लेशानपादाय लौकिकेषु पशुशिरःस्वाश्लिष्य मृदा प्रलिप्य निदधाति ॥

**यद्युपसत्सु या चिता चितिः स्यान्न तामावर्त-येत् । ६ ।**

अथ यद्युपसत्सूत्तिष्ठासेत्तदा सत्त्रे या चितिश्चिता स्यान्न तां पुनः कुर्यात्, पूर्वचितयैवादृष्टोपकारसिद्धेरिति भावः ॥

तूष्णीकामावर्तयेत्। ७।

अथवा तामपि मन्त्रवर्जमावर्तयेत्। जानुदघ्नं चिन्वीतेति दृष्टार्थत्वात् चितेरावृत्तिः। मन्त्रास्तु सकृत्प्रयुक्ता एवादृष्टमुपकारं कुर्युरिति भावः॥

मन्त्रवतीमित्यपरम्। ८।

चितेः समन्त्राया एव क्रत्वङ्गत्वात् चित्यावृत्तौ चित्यङ्गमन्त्राणा-वृत्त्ययोगादिति भावः॥

चिते ऽग्नावुत्तिष्ठतो नाग्निचित्या विद्यते। तूष्णीं वाग्निं चिन्वीत। मन्त्रवन्तमित्यपरम्। ९।

पूर्ववद्व्याख्यातः॥

प्रणीते ऽग्नौ तूष्णीमन्यं प्रणयेत्। मन्त्रवन्तमित्य-परम्। १०।

प्रणीते ऽग्नावुत्तिष्ठत इत्यनुषङ्गः। शेषं पूर्ववत्॥

करणेभ्यो ऽपाददीत महावेदेरुत्तरवेदेर्धिष्ण्येभ्योपर-वखरसदो ऽविधानेभ्य इति। तानीतरेष्वप्यर्जयेत्। ११।

अयमर्थः। महावेद्यादिष्वङ्गेषु कृतेषूत्तिष्ठतो नैतानि पुनः कुर्यात्. किं तु तेभ्य एव करणपर्यायेभ्यो यज्ञसाधनेभ्यः किंचित्किंचि-ल्लोष्टाद्युपाददीत. तानि चेतरेषु स्वीयेषु करणेषु तूष्णीमेवापि-सृजेदिति॥

यदि सर्वैं रात्रिपर्यायैरस्तुतमभिव्युच्छेत्षड्भिरैन्द्रावैष्णवीभिर्होत्रे स्तुयुः। तिसृभिस्तिसृभिरितरेभ्यः। १२।

अतिरात्रे त्रयो रात्रिपर्यायाश्चतुश्चममगणाः। तैस्त्रिभिरप्यस्तुते यदि व्युष्टा रात्रिः स्यात्तदा त्रिष्वपि पर्यायेषु होतृशस्त्रार्थानि स्तोत्राणि षड्भिःषड्भिः स्तुयुः. इतराणि मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकशस्त्रार्थानि तिसृभिस्तिसृभिः। एवं द्वादशस्वपि रात्रिस्तोत्रेषु ह्रासः कार्यः॥

यदि द्वाभ्यां होत्रे मैत्रावरुणाय च पूर्वस्मिन्पर्याये स्तुयुः। ब्राह्मणाच्छंसिने ऽच्छावाकाय चोत्तरस्मिन् । १३।

यदि द्वाभ्यां पर्यायाभ्यामस्तुते प्रथममात्रेण स्तुते व्युच्छेत्तदा मध्यमपर्याये होतृमैत्रावरुणार्थे द्वे एव स्तोत्रे स्तुयुः। ब्राह्मणाच्छंस्यच्छावाकार्थे तु लुप्येते। एतदेव विपरीतमुत्तरपर्याये। मध्यमोत्तमयोः पर्याययोरितरेतरापेक्षायां पूर्वोत्तरत्वं वेदितव्यम्॥

यद्येकेन पञ्चदशभिर्होत्रे स्तुयुः। पञ्चभिःपञ्चभिरितरेभ्यः। १४।

यद्येकेन पर्यायेणास्तुते व्युच्छेत्तदा होतुः स्तोत्रं यथाप्रकृत्येव पञ्चदशभिः स्तुयुः. इतराणि पञ्चभिः। अत्रेयं मीमांसा. किमयमभिव्युष्टिशङ्कायामेव विधिरुताभिव्युष्टौ सत्यामिति। शङ्कायामिति ब्रूयात्। कुतः। ब्राह्मणेष्वभिव्युच्छेदित्येवाम्नानात्. नियतपरिमाण-

भूतासु स्तोमवचनानुपपत्तेश्च । नहि नियतकालपरिमाणा सर्वत्राभिव्युष्टिर्येन तत्परिमिताः स्तोमा नियम्येरन् । अतः सत्यामभिव्युष्टौ नैमित्तिको होमः. न त्वनभिव्युष्ट्यर्थ इति सांप्रतम् ॥ तदुक्तमुपग्रन्थकारेण. अभिव्युच्छेदित्येव शाख्यायनिब्राह्मणं भवति । तथा भाल्लविनां तथा कालविनां तथा तैत्तिरीयाणां तथा सर्वेषां विभक्त्युपनिपात एव स स्यात् । अथापि चेदनभिविवासार्थो ऽभविष्यद्परिमितस्तोमो ऽभविष्यत्. यथा नाभिविवसत् * तथा स्तुवीरन्नित्येवाभविष्यत् । नह्यनभिविवासार्थे परिमाणमुपपद्यते । तेन तु परिमाणग्रहणेन जानीमः. अभिव्युष्ट्या संयुक्त एवायं कल्पो भवतीति ॥

अग्ने विवस्वदुषस इत्याश्विनस्य प्रतिपदं दध्यात् । १५ ।

त्रिष्वप्युक्तेषु निमित्तेष्वेवं प्रतिपत् ॥

इति त्रयोविंशी कण्डिका ।

यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेत । १ ।

यदा सूर्यो न प्रकाशते मेघादिच्छन्नः तदा संधिचमसेषु भक्षितेषु नानावर्णश्छाग आलभ्यते. प्रसज्यते च तत्र सवनीयतन्त्रम् ॥

* Thus all MSS., except h which has नाभिविवसेत्.

सर्वा अपि दाशतयीरनुब्रूयात्। २।

दश मण्डलान्यवयवा अस्या इति दाशतयी ऋक्संहिता. तस्या ऋचो दाशतयीर्दाशतयीरित्याद्यन्तविभेदात्। ता बह्वीरप्यनुब्रूयाद्वा यावत्सूर्यः प्रकाशते ॥

येषां दीक्षितानामाहवनीय उद्वायेदाग्नीध्रादुद्धरेत्। यदाग्नीध्रो गार्हपत्यात्। यद्गार्हपत्यो ऽत एव पुनर्मन्थेत्। ३।

दीक्षितानामिति जात्याख्यायामिति बहुवचनं. न तु सत्त्रार्थम्। औत्तरवेदिकस्याग्नीध्रीयो ऽग्निर्योनिः. तस्यापि शालामुखीयः. तस्य लवचाणमन्थनम्। प्रागग्नीधप्रणयनादौत्तरवेदिकस्यान्वाहितविधिना प्रणयनं शालामुखीयात्. तस्य तु तेनैव विधिना मन्थनं. प्रगौत्तरवेदिकप्रणयनात्तेनैव विधिनास्य प्रणयनं प्राजहितात्। प्राजहितदक्षिणाग्निसभ्यावसथ्यानां तु यथाप्रकृत्यन्वाहितविधिरेव सर्वत्र ॥

यस्माद्दारोरुद्वायेत्तस्यारणी कुर्यात्। ४।

अत एव पुनर्मन्थेदित्युक्तम्। तत्र यद्दारुमतो ऽग्निरन्ततो ऽनुगच्छेत्तच्छित्त्वारणी परिकल्प्य मन्थेत् ॥

क्रमुक उपज्वलनः। ५।

धनुरादिनिर्लेखनप्रभवाः शकलाः क्रमुकः तत्रेन्धनार्थे भवति ॥

महर्त्विग्भ्यश्चतुरो वरान्दद्यात्। ६।

मुख्याश्चत्वारो महर्त्विजः ॥

यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यार्धमन्तर्धायर्जीषेण सहाभिषुणुयात्। अर्धमभ्युन्नायं ग्रहैः प्रचरेयुः। ७।

यदाग्रयणे कलशे वानुपदस्तः सोमस्तदा तत एवेतरेषामुत्पत्तिं वक्ष्यति। अतः सर्वसोमशोषणेऽयं विधिः। रजतादिहिरण्यव्यावृत्त्यै सुवर्णं हिरण्यमिति परिमाणार्थोऽत्र सुवर्णशब्द इति केचित्। अभ्युन्नायमिति ऊताद्ग्रहादुद्धृत्य होष्यमाणग्रहमभितो नीत्वानीत्वेत्यर्थः ॥

महर्त्विग्भ्यश्चतुरो वरान्दद्यात्। ८।

गतः ॥

यस्याक्रीतं सोममपहरेयुः क्रीणीयादेव। ९।

प्राक्क्रयादपहरणे पुनराहृत्य क्रय एव कार्यः नान्यत्प्रायश्चित्तमित्यर्थः ॥

यदि क्रीतं यो नेदिष्ठी स्यात्तत आहृत्याभिषुणुयात्। १०।

क्रीतस्यापहरणे यो नेदिष्ठो नेदिष्ठः सोमः संनिकृष्टदेश इति यावत्। ततो यावदर्थमाहृत्य तमेवाभिषुणुयादित्यर्थः ॥

सोमाहाराय सोमविक्रयिणे वा यथाश्रद्धं दद्यात्। ११।

य इदानीं सोमस्य हर्ता यो वा पूर्वः सोमविक्रयी तयोरन्यतरस्मै यथाश्रद्धं दद्यात् ॥

सोमाभावे पूतीकानभिषुणुयात्। पूतीकाभाव आदारान्फाल्गुनानि च यानि श्वेततूलानि स्युः। तदभावे याः काश्चौषधीः क्षीरिणीररुणदूर्वाः कुशान्वा हरितानिति वाजसनेयकम्। १२।

पूतीकादय ओषधिविशेषाः. फाल्गुनानि तृणविशेषाः। तेष्वादाराः फाल्गुनानि च समुच्चीयन्ते। तत्रादारादयोऽपि सोमस्यैव प्रतिनिधयः. न पूतीकादेः. सोमस्याङ्गत्वात्। तेन सर्वेषां तद्धर्मतच्छन्दौ भवतः ॥

अप्यन्ततो व्रीहियवान्। १३।

हरितानित्येव। सर्वालाभेऽपि हरितान्व्रीहिस्तम्बान्यवस्तम्बान्वाभिषुणुयात्. न लभमाष्य विरमेदित्यर्थः ॥

प्रतिधुषा प्रातःसवने सर्वान्सोमाञ्छ्रीणीयात्। शृतेन माध्यंदिने सवने। दध्ना तृतीयसवने शीतमिश्रेण वा। १४।

सर्वेष्वप्येतेषु प्रतिनिधिकल्पेषु प्रतिधुगादिभिः सर्वसोमानां श्रयणं स्यात्। समुच्चीयते च तत्प्राकृतैः श्रयणैर्मैत्रावरुणादीनाम्। प्रतिधुग् अशृतं दुग्धमात्रं पयः। तथा च भारद्वाजः. प्रतिधुगिति

दुग्धमात्रं स्यादिति। नीतमिति नवनीतं. तन्मिश्रेण केवलेन वा द्रव्या श्रयणम् ॥

अथैकेषाम्। प्रतिधुक्च प्रातःसवने पूतीकाश्च। शृतं च माध्यंदिने सवने पूतीकाश्च। दधि च तृतीयसवने पूतीकाश्चेति। १५।

प्रतिधुगादयः पूतीकाश्च सहाभिषूयन्ते. न तु श्रयणं प्रतिधुगादिभिरित्यर्थः ॥

अग्निष्टोमः सोमः स्याद्रथंतरसामा। १६।

आरब्धः क्रतुरग्निष्टोमान्त एव कार्यो रथंतरसामा च यद्यपि संस्थान्तरं सामान्तरं वाभिहितमासीत् ॥

य एवर्त्विजो वृताः स्युस्त एनं याजयेयुः। १७।

प्रतिनिधिना प्रवृत्तस्य क्रतोः कर्मान्तरत्वभ्रमादृत्विगन्तरपरिग्रहनिरासार्थो ऽयं नियमः ॥

एकां गां दक्षिणां दद्यात्तेभ्य एव। १८।

यद्यपि पुनरिज्यायां तेभ्यो दास्यन्ते दक्षिणास्तथापि तेभ्य एवेत्यर्थः। एवं च पुनरिज्यायामपि त एवर्त्विज इति सिद्धं भवति ॥

पुनः सोमं क्रीणीयात्। १९।

ब्राह्मणवाक्यमेतत्पुनरिज्याविधानार्थं व्याख्यातुमुदाह्रियते। तत्र च

क्रीणीयादिति लिङ्गेन पुनरिज्यानुमीयते। वाक्यशेषश्च भवति. यज्ञेनैव तद्यज्ञमिच्छतीति। अत्रैवमुच्यतां तर्हि. कियदन्तः पूर्वक्रतुः· कियदादिश्चोत्तरः कश्च तस्य कालः का वा संस्थेति। तदे- तत्सर्वमाह॥

अवभृथादुदेत्य पुरस्ताद्द्वादश्यास्तस्मा एव क्रतवे पुनर्दीक्षेत। २०।

अवभृथान्तस्तावत्पूर्वः क्रतुः. दीक्षणीयादिश्चोत्तरः। दीक्षायाश्च पूर्व- सुत्याप्रभृत्यर्वाग्द्वादशरात्रात्कालः। तस्मा एव च क्रतवे दीक्षेत यत्संस्थः प्रागारब्ध इत्यर्थः। आश्वलायनस्तु अत्र पूर्वमपि क्रतुमुद- वसानीयान्तमुक्तवान्. यथा यज्ञं संस्थाप्योदवसाय पुनर्यजेतेति। विकल्पं त्वाह कात्यायनः. यथा समाप्य पुनर्यज्ञो ऽवभृथान्तो वेति॥

तच तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात्। २१।

तामेव दक्षिणां दद्यात् यां पूर्वस्मिन्क्रतौ दास्यन्स्यात्। दक्षिणे- त्यर्थवचनसामर्थ्यात् प्राग्दक्षिणाभ्यो ऽपहार एवायं विधिः। दत्तासु दक्षिणासु रसस्यर्जीषस्य वापहारे ऽपि समाप्तिरेव प्रतिनिधिना। तथा प्रवृत्तद्रव्यलाभे नायं विधिः सर्वत्र। तथा चाश्वलायनः. सोमाधिगमे प्रवृत्त्येति एवं च पूतीकानेव क्रीतवतस्तदपहारे पुन- स्तानेव लभमानस्य नायं विधिर्भवति। तथा सर्वापहार एवायं विधिः. असर्वापहारे त्वतिशिष्टमन्येन वर्धयित्वाभिषुणुयुः। सर्वः क्रीतापहारविधिः क्रीतनाशदोषयोरपि दर्शनार्थः. तुल्यन्यायत्वात्.

अभिदग्धे तु तत्प्रायश्चित्तं यदपहृत इति लिङ्गाच। तथा क्रीते राजनि नष्टे दग्धे वेत्याश्वलायनः ॥

इति चतुर्विंशी कण्डिका।

यदि सदोहविर्धानान्यभिदह्येरन्ग्रहानध्वर्युः स्थापयेत्। स्तोत्राण्युद्गाता। शस्त्राणि होता। १।

ग्रहान्गृहीतानगृहीतान् हुतान्होष्यमाणांश्चाध्वर्युः स्थापयेत्. बुध्येतेत्यर्थः ॥

अनभिदग्धे सोमे पार्श्वतो देवयजनमध्यवसाय कृतान्तादेव प्रक्रामेयुः। २।

देवयजनाध्यवसाने वेदिकरणादीनि तूष्णीं क्रियन्ते मन्त्रेण वा प्रागुक्तन्यायात्। तथा अनावृता क्रियेरन् आवृता वेत्याश्वलायनः। कृतान्तादिति यावत्कर्म कृतं ततः परं तन्त्रमित्यर्थः। प्राग्वंशादिमण्डपदाहे तु न देवयजनान्तरं गम्यते ॥

अभिदग्धे तु तत्प्रायश्चित्तं यदपहृते। ३।

अभिदग्धे तु सोमे यदपहृतप्रायश्चित्तं यो नेदिष्ठी स्यादित्यादि तदेव भवति ॥

गोः स्थाने पञ्च गा दद्यात्। पञ्च वा वरान्। ४।

गौरिति पदच्छेदः । या तत्रोक्ता गौः एकां गां दक्षिणां दद्यादिति तस्याः स्थाने तत्र पष्ठ दद्यात् । अनडुहो ऽपि प्राप्त्यर्थं वरवचनम् । प्रवृत्तद्रव्यस्य लाभे त्वचापि प्रकृत्या समाप्तिर्द्रष्टव्या ॥

यदि प्रातःसवने ग्रावाणं नाधिगच्छेत्पलाशदण्डमाहृत्य तेनैवाभिषुणुयात् । एतदेवास्य प्रायश्चित्तं भवतीति विज्ञायते । ५ ।

ग्राव्णो नष्टस्यानधिगमे ऽयं विधिः. एतदेव प्रायश्चित्तमिति वचनात् ॥

यदि माध्यंदिने यदि तृतीयसवन एतदेव । ६ ।

गतः ॥

यदि प्रातःसवने ग्रावा शीर्येत पुरस्ताद्बहिष्पवमानाद्द्युतानस्य मारुतस्य ब्रह्मसाम्ना स्तुवीरन् । ७ ।

शीर्येत खण्डितः स्यात् । द्युतानस्य मारुतस्य यत्साम तेनात्र स्तुवीरन् । यद्यपि न तस्य छन्दोगैर्ब्रह्मसामत्वमुक्तं तथाप्यत एवानुवादात्क्वचिद्विधिर्द्रष्टव्यः ॥

ब्रह्मसाम्ना वैव । ८ ।

अथवा प्रकृतेनैव ब्रह्मसाम्ना नौधसेन स्तुवीरन् ॥

यदि माध्यंदिने यदि तृतीयसवन एतदेव पुरस्तात्पवमानेभ्यः स्तुवते । ९ ।

पवमानेभ्य इति द्विवचनस्थाने बहुवचनं व्यत्ययेन ॥

यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीष्वित्युक्तम्। १०।

उक्तमिदं ब्राह्मणे. यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्. यदि मध्यंदिने दीर्येत वषट्कारनिधनं साम कुर्युः. यदि तृतीयसवन एतदेवेति। तद्यथाब्राह्मणमेवानुसंधातव्यमित्यर्थः। कलश इति द्रोणकलशस्यैवैकदेशग्रहणं. यथा सत्यभामा भामा. भीमसेनो भीम इति। दीर्येत भिद्येत। निधनं अन्तिमा भक्तिः. तद्वषट्कारो यस्य तद्वषट्कारनिधनम्। तत्साम गायेयुः ॥

अथैकेषाम्। यदि प्रातःसवने कलशो दीर्येत वषट्कारनिधनं ब्रह्मसाम कुर्यादिति। असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा अभ्रपाय स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा गणश्रिये स्वाहा मलिम्लुचे स्वाहा ज्योतिषे स्वाहाभिभुवे स्वाहाधिपतये स्वाहा दिवां पतये स्वाहेति चयोदशाज्याहुतीर्हुत्वा। ११।

इति पञ्चविंशी कण्डिका।

इन्द्रस्य ग्रहो ऽस्यगृहीतो ग्राह्यो देवानां पूरसि तं

त्वा प्रपद्ये सह ग्रहैः सह प्रग्रहैः* सह प्रजया सह पशुभिः सहर्त्विग्भ्यः सह सोम्यैः सह सदस्यैः सह दाक्षिणेयैः सह यज्ञेन सह यज्ञपतिना॥ इन्द्राग्नी परिधी मम वातो देवपुरा मम। ब्रह्म वर्म ममान्तरं तं त्वेन्द्रग्रह प्रपद्ये सगुः साश्वः॥ वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यः। वर्म मे ब्रह्मणस्पतिर्मा मा प्रापदतो भयम्॥ इन्द्राग्नी परिधी मम वातो देवपुरा मम। ब्रह्म वर्म ममान्तरं तं त्वेन्द्रग्रह प्रविशानि सगुः साश्वः सपूरुषः। सह यन्मे अस्ति तेनेति दीर्णं यजमानो ऽनुमन्त्रयते। १।

यद्वषट्कारनिधनं साम तद्ब्राह्मणाच्छंसिसाम कुर्यात्। तथा अग्नये स्वाहेत्याहुतिषु हुतास्वध्वर्युणा दीर्णमनुमन्त्रयते यजमानः। नोत्तरयोः सवनयोरयं विधिः, प्रातःसवनग्रहणात्, उत्तरविधावनुसवनमिति वचनाच्च॥

अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय गायत्र्या अभिभूत्यै स्वाहा। अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय त्रिष्टुभो ऽभिभूत्यै स्वाहा। अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय जगत्या अभिभूत्यै स्वाहा। अरिष्ट्या अव्यथ्यै संवेशायोपवेशायानुष्टुभो ऽभिभूत्यै स्वाहा। अरिष्ट्या

* सह प्रग्रहैः is missing in BCHL.

अव्यथ्यै संवेशायोपवेशाय पङ्क्त्या अभिभूत्यै स्वाहेत्येतैः प्रतिमन्त्रमनुसवनं दीर्णे पञ्चाहुतीर्जुहोतीत्येके। २।

सवनत्रयार्थो ऽयं कल्पः. तेन सर्वत्र विकल्पते। एवं कृते प्रायश्चित्ते संधानीयद्रव्यैः कलशं प्रतिलिम्पेत्। तथा च बौधायनः. स यद्यवदीर्णो भवति प्रतिलिम्पत्येनमिति। धारणासमर्थत्वे त्वन्यं मन्त्रेण प्रयुज्य तस्मिन्नमवनयेत्। स्कन्ने तु रसे विधिमाह बौधायनः. आग्रयणादवात्तं प्रस्कन्दयतीति॥ पूतभृद्दाधवनीययोस्तु दीर्णयोः सर्वप्रायश्चित्तं कृत्वायमेव प्रकारो द्रष्टव्यः। तथा च तावेवैकैकं प्रकृत्याह बौधायनः. स यद्यवदीर्णो भवति लिम्पत्येनमिति. तथा आग्रयणादेवात्तं प्रस्कन्दयतीति॥ समानो ऽयं प्रकार आग्रयणस्थाल्यां विदीर्णायाम्। कलशात्तु रसोत्पत्तिः. यथोक्तं यदाग्रयणः कलशादिति॥

यदि बहिष्पवमानं सर्पतां प्रस्तोतापच्छिद्येत यज्ञस्य शिरश्छिद्येत। ब्रह्मणे वरं दत्त्वा स एव पुनर्वर्तव्यः। ३।

अथ पवमानात्सर्पतामुद्गातॄणामपच्छेदे प्रायश्चित्तमारभ्यते। स एव पुनः पूर्ववदृत्विग्वरणविधिना वर्तव्यः॥

यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत। सर्ववेदसं दद्यात्। ४।

क्रतुदक्षिणार्थे सर्ववेदसं दद्यात्॥

यद्युद्गाता यज्ञेन यजमानो व्यृध्येत । अदक्षिणः स यज्ञः संस्थाप्यः । अथान्य आहृत्यः । ५ ।

स यज्ञ उदवमानीयान्तः संस्थाप्यः । अथानन्तरे पर्वणि स एव क्रतुः पुनराहर्तव्यः ॥

तच्च तद्द्यायत्पूर्वस्मिन्दास्यन्स्यात् । ६ ।

उक्तो ऽर्थः ॥ ननु सत्त्वेते विधय एकैकस्यापच्छेदे । यदा पुनरेषां त्रयाणां द्वयोर्वा युगपदपच्छेदस्तत्र को विवेकः । किमत्र विवेचनीयं. यावतामपच्छेदस्तावतां प्रायश्चित्तानि समुच्चेयन्ते. निमित्तसंनिपातात् । सत्यं. समुच्चीयतां सर्वत्र प्रस्तोतृप्रायश्चित्तं. अविरोधात् । उद्गातृप्रतिहर्त्रोस्तु विरुद्धे प्रायश्चित्ते कथं समुच्चेयेते. सहस्रदक्षिणत्वसर्वस्वदक्षिणत्वयोः समुच्चयसंभवः । तत्राह ॥

युगपदपच्छेदे तूद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तम् । ७ ।

उद्गातृप्रतिहर्त्रोर्निमित्तसंनिपाते मुख्यत्वादुद्गातुरेव प्रायश्चित्तं प्रवर्तते. न प्रतिहर्तुः. तेन विरोधात् । तस्य तु कृते सर्वप्रायश्चित्तमात्रं भवतीत्यर्थः ॥ अस्त्वेवं यौगपद्ये । क्रमादपच्छेदे ऽपि किमयमेव न्यायः । नेत्याह ॥

पूर्वापरापच्छेदे यो जघन्यो ऽपच्छिद्येत तस्य प्रायश्चित्तम् । ८ ।

पौर्वापर्ये त्वनयोर्यतरो जघन्यो ऽपच्छिद्येत तस्यैव प्रायश्चित्तमेव

प्रवर्तते. सर्वप्रायश्चित्तमात्रं त्वितरस्य भवति. पूर्वबाधेनैव जघन्य-प्रायश्चित्तस्योत्पत्तेः। तथा च मीमांसकाः. पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति। एतदुक्तं भवति. यदा प्रतिहर्ता जघन्यस्तदा सर्व-वेदसमेव दीयते. न पुनरिज्या. यदा तूद्गाता जघन्यस्तदा पुन-रिज्यैव भवति. न तत्रैव क्रतौ सर्ववेदसमात्रमिति। तत्र तु पुन-रिज्यायां सर्ववेदसं देयमिति प्रतीयात्। कुत एतत्। पूर्वस्मिन्क्रतौ प्रागुद्गातुरपच्छेदात्प्रतिहर्त्रपच्छेदने तस्यैव प्राप्तत्वात्. तत्र तद्दद्या-त्पूर्वस्मिन्दास्यन्स्यादिति नियमाच्च। तथा च मीमांसकाः. यद्यु-द्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन्निति॥ येषां त्वनुक्रमपच्छेदप्रायश्चित्तं ब्रह्मादीनां तेषां सर्वप्रायश्चित्तमेव सर्वत्र॥

यदि माध्यंदिन एतदेव। यद्याभवे सर्वप्रायश्चित्तं जुहुयात्। ९।

माध्यंदिने पवमान इति शेषः। आर्भवे सर्वप्रायश्चित्तमेव सर्वेषां कृते जुहुयात्॥

इति षड्विंशी कण्डिका।

इत्यष्टमः पटलः॥

यत्कलश उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्याध-मन्तर्धायापो ऽवनीय पयो ऽभ्यवनयेत्। अर्धमभ्युन्नायं ग्रहैः प्रचरेयुः। १।

हिरण्यस्यार्धं द्रोणकलशे ऽवधाय वसतीवरीर्गृहीत्वा तासु पयः क्षिपेत्। तत्सोमस्थाने भवति। तस्मात्तु येषां ग्रहणं ग्रहाणां पवमानानामर्धमभ्युन्नीय होमः पूर्ववत्॥

**महर्त्विग्भ्यश्चतुरो वरान्दद्यात्। २।**

उक्तार्थः॥

**अथैकेषाम्। यत्कलश उपदस्येदाग्रयणाद्गृह्णीयात्। यदाग्रयणः कलशात्। ३।**

गतः। अथान्यं विधिमाह॥

**यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयादन्या-ञ्छुक्राद्ध्रुवाच्च। ४।**

शुक्रध्रुवरहितानां ग्रहाणां कलशस्य चाग्रयणो योनिरिति। अथान्यं विधिमाह॥

**द्रोणकलशाद्गृह्णन्त इति सर्वग्रहाणां स्कन्नानामुपद-स्तानां च विज्ञायते। ५।**

सर्वेषामेव ग्रहाणां शुक्रध्रुवसहितानां उपदस्तानां स्कन्नानां च कलश एव योनिरिति। त एते चत्वारो विधयस्तत्रतत्र विकल्पन्ते। केचित्तु सर्वग्रहाणामित्यनेन पवमानग्रहाणामपि ग्रहणमिष्ट्वा पूतभृदाधवनीययोरप्युपदस्तयोः कलशादुत्पत्तिमाहुः। तदयुक्तं. यद्ग्रहो वा कलशो वेति कलशस्य पृथग्ग्रहणेन पवमानग्रहाणामत्र ग्रहग्रहणे-

नाग्रहणावगमात्। अतः कलशवदाग्रयणादेव तयोरुत्पत्तिः. यथा तंतं प्रकृत्याह बौधायनः. आग्रयणाद्देवांशुं प्रस्कन्दयतीति। चम-सानां तु सर्वत्र पूतभृत एवोत्पत्तिः. तद्योनित्वात्. सर्वेषामप्येषां विधीनां योनिविशेषपरत्वात्॥ क्वचिदुपदासग्रहणं क्वचित्स्कन्दनो-पदासग्रहणं चैवमादेर्नाशप्रकारस्य प्रदर्शनार्थं द्रष्टव्यम्। तथा सर्वत्र सशेषस्कन्दने सोमे सोममभिगृह्य जुहुयादित्ययमपि विधिरनु-संधातव्यः। यदा तु निःशेषः स्कन्दति तदा स्वेनस्वेन मन्त्रेण यथायोनि गृहीत्वा सादयेत्॥

यद्रुव उपदस्येत्स्कन्देद्दीर्येत वा तमभिमन्त्रयेतायुर्धा असि ध्रुवायुर्मे धेहि। वर्चोधा असि ध्रुव वर्चो मे धेहि। तनूपा असि ध्रुव तन्वं मे पाहीति॥ तस्मिञ्छत-मानं हिरण्यमवधाय स्वाहा दिव आप्यायस्व स्वाहा-न्तरिक्षादाप्यायस्व स्वाहा पृथिव्या आप्यायस्वेत्याप्या-ययति। ६।

स्थालीमाहृत्य द्रोणकलशादाप्याययति। यदा तु दीर्णा स्यादस-मर्था च तदान्यां प्रयुज्य स्कन्नशेषस्यावनीयाप्याययति। निःशेष-स्कन्नस्तु ग्रहणमन्त्रेणैव ग्राह्यः॥

अध्वरो ऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय। विश्वस्मै भूतायाध्वरों अस्तु देवाः। स पिन्वस्व घृतवद्देव यज्ञ॥ द्रप्सैर्वैधि माप च्योष्ठाः पर्वत

इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु धारय ॥ इन्द्र एणम*दीधरद्ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् । ध्रुवा ह पर्वता इमे ध्रुवो राजा विशामयमित्येताभिश्चतसृभिः सन्नमभिमन्त्र्य वरं ददाति । ७ ।

सन्ने ऽभिमन्त्रिते चाध्वर्युणा वरं ददाति यजमानः ॥

इति सप्तविंशी कण्डिका ।

यदि नाराशंस उपदस्येयमध्वर्युः पूर्वं ग्रहं गृह्णीयात्तं वषट्कृतानुवषट्कृते हुत्वा चमसाध्वर्यवे प्रयच्छेत् । तेनैनं स आप्याययत्याप्यायस्व समेतु त इति । १ ।

भक्षिताप्यायितस्चमसो नाराशंस इत्युक्तम् । स यदि शोषणादिना नश्येत् तदा यज्ञमनाप्यायनादेनन्तरो यह ऐन्द्राग्नादिः तं स्वकाले कृत्वा चमसाध्वर्यवे दद्यात् । स च भक्षं शेषयित्वा तेन चमसमाप्याययति अनुप्रकम्पयति च द्विः. तदर्थत्वादाप्यायनस्य ॥

यदि प्रातःसवने सोमो हविर्वा स्कन्देन्माध्यंदिने तृतीयसवने नक्तं तिरोअह्न्येषु वा देवां जनमगन्यज्ञ

* Thus all MSS.

इत्येतैर्यथापूर्वमभिमन्त्र्य मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्। २।

हविः सवनीयादि। नक्तं रात्रिपर्यायेषु। तिरोअह्न्येषु संधिचमसेषु। एवमनुक्रमणात्तिरोअह्न्येभ्यः परेष्वप्तोर्यामचमसगणेषु नायं विधिर्भवति। यथापूर्वमित्यनेन देवां जनमगन्यज्ञ इत्येकेषामित्यत्राप्यभिमन्त्रणार्था एते मन्त्रा इति ज्ञाप्यते। व्याख्यातं च तत्रैवास्माभिः॥

त्रयस्त्रिंशत्। द्रप्सश्चस्कन्द। यस्ते द्रप्सः। यो द्रप्सः। यस्ते द्रप्स इत्येतैः प्रतिमन्त्रमनुसवनं स्कन्ने पञ्चाहुतीर्जुहोतीत्येके। ३।

सोमे हविषि वा स्कन्न इति विपरिणामेनान्वयः। यस्ते द्रप्स स्कन्दति. यस्ते द्रप्सो मधुमानित्यनयोर्मन्त्रयोरुपादानम्। यस्ते द्रप्स इत्यनुसवनमिति पुनर्विशेषोपादानात् परेष्वपि तिरोअह्न्येभ्यो ऽयं विधिर्भवति॥

यद्दतुग्रहैः प्रचरन्तौ मुच्येयातां विसृष्टधेनाः सरितो घृतश्चुतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः। शरद्धेमन्त ऋतवो मयोभुव उदप्रुतो नभसी संवसन्ताम्॥ आ नः प्रजां जनयतु प्रजापतिर्धाता ददातु सुमनस्यमानः। संवत्सर ऋतुभिश्चाकुपानो मयि पुष्टिं पुष्टिपतिर्दधातु॥ आ देवानाम्। त्वमग्ने व्रतपा असि। यद्वो वयं प्रमिनाम। मधुश्चेत्येतैः प्रतिमन्त्रं जुहोति। ४।

मन्त्रतो मुखतः प्रैषतो मार्गतो वा विपर्यासो मोहः। तत्र विसृष्टधेना इति पञ्चभिः मधुश्चेति त्रयोदशमासनामभिश्च जुहोति। ततः कृतान्ताप्त्यक्रामतः॥

त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभे ऽनु मारभध्वं स्वाहेत्यृतुनामस्वनुषजति। ५।

ऋत्वन्तरवत्सु मासेष्वृतुशब्दः॥

यदि सोमः स्कन्देद्ब्रह्मन्त्सोमो ऽस्कानित्युक्त्वाभूद्देवः सविता वन्द्यो नु न इत्यभिमन्त्र्य भूपतये स्वाहेति पञ्च प्रादेशान्निमीते यथा पुरस्तात्। ६।

ब्रह्मणः स्कन्दनादि वदनं प्रायश्चित्तानुसंधानार्थम्। तत्र अभूद्देव इत्यृचा स्कन्नमभिमन्त्र्य तस्योपरि पूर्ववत्प्रादेशान्निमीते॥ त्रयस्तावदेते स्कन्नप्रायश्चित्तविधयः सोमस्य. यथायमेकः पूर्वतरो ऽन्यः पूर्वतमो ऽन्य इति। तत्राशेषस्कन्दने चतुर्थो ऽप्युक्तः प्रागेव. सोमे स्कन्ने सोमे सोममभिगृह्य जुहुयादिति। पञ्चमो ऽपि सामान्यविधिरुक्तः. भूपतये स्वाहेत्यादिना स्कन्नमनुमन्त्रयेतेति सर्वेष्वविशामनवयवेन श्रूयत इति। तत्रैतेषां समुच्चयं मन्यामहे: एकस्मिन्दोषे श्रूयमाणानीति न्यायात्। पूर्वतरस्तु पूर्वतमेन विकल्पते. एकशब्दयत्नात्॥

इत्यष्टाविंशी कण्डिका।

यदि चमसमभक्षितं स्तोत्रेणाभ्युपाकुर्यादारमतेत्यु-क्तोत त्या नो दिवा मतिरदितिरूत्यागमत्। सा शन्ताची मयस्करदप स्रिधः ॥ उत त्या दैव्या भिषजा शं नस्क-रतो अश्विना। यूयातामस्मद्रपो अप स्रिधः॥ श-मग्निरग्निभिस्करच्छं नस्तपतु सूर्यः। शं वातो वात्वरपा अप स्रिध इति तिस्र आग्नीध्रीये हुत्वा तं सदसि भक्षयित्वोत्तरवाससा प्रच्छाद्य दक्षिणां द्वार्बाहुमनु नि-हृत्य मार्जालीये प्रक्षाल्य पूर्वयातिहृत्य तदित्पदं न विचिकेत विद्वान्यन्मृतः पुनरप्येति जीवान्। त्रिवृद्य-द्भुवनस्य रथवृज्जीवो गर्भो न मृतः स जीवादिति तं चमसेष्वपिसृज्य हिरण्यगर्भः समवर्तताग्र इत्याहुतिं हुत्वाप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः। भवा नः सप्रथस्तम इत्याप्याययति। १।

यद्यभक्षिते चमसगणे उत्तरस्मै चमसगणाय स्तोत्रमुपाकुर्यात् तदा आरमतेत्युक्ताहुत्वा हुत्वेता आहुतीः सदसि भक्षयन्ति भक्षिणः ॥ द्वार्बाहुः द्वारस्थूणा. तामनु तत्समीपतः। पूर्वया हविर्धानस्य पूर्वया द्वारा ॥ नाप्यायनमन्यत्र नाराशंसात् अमत्रभक्षाद्वा चमसात्। ग्रहे त्वभक्षिते नायं विधिः. चमसग्रहणात् आप्यायनवचनाच्च। यदि हि ग्रहचमससाधारणं विधिमभिप्रैष्यत् तदा यदि सोममभक्षितमित्येवा-वक्ष्यत्। अतः सर्वप्रायश्चित्तमेव हुत्वा भक्ष्यो ग्रहः ॥

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर। अरंगमाय जग्मवे ऽपश्चाद्दघ्वने नर इत्यवदृष्टं भक्षमभिमन्त्र्येन्दुरिन्दुमवागादिन्दोरिन्द्रो ऽपात्। तस्य त इन्दविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति भक्षयति। २।

यत्र वर्षबिन्दुः पतितः सो ऽवदृष्टः। तस्य लेतात्रवेक्षणभक्षणमन्त्रौ नित्यमन्त्रप्रत्याम्नायौ ॥

यदि दीक्षितो ऽवकिरेदप्स्वग्न इत्येषा॥ तपो ष्वग्ने अन्तराँ अमित्रांस्तपा शंसमररुषः परस्य। तपा वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः॥ यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात्। तमजरेभिर्वृषभिस्तप स्वैस्तपा तपस्व तपसा तपिष्ठ॥ स स्मा कृणोतु केतुमा नक्तं चिद्दूर आ सते। पावको यद्वनस्पतीन्प्रास्मा मिनोत्यजरः॥ नहि ते अग्ने तनुवे क्रूरमानाश मर्त्यः। कपिर्बभस्ति तेजनं स्वं जरायु गौरिव॥ मेष इव यदुप च वि च चर्वरि यदग्नररूपरस्य खादति। शीर्ष्णा गिरौ वक्षसा वक्ष एजयन्नंशुं गभस्ति हरितेभिरासभिरिति* षट् पूर्णाहुतीर्हुत्वा प्रत्याहुति वरान्दद्यात्। ३।

* This last verse is totally corrupt; cf. Atharva Veda 6. 49. 2.]

ब्रह्मचर्यलक्षणस्य योनौ रेतःस्कन्दनं अवकिरणम्। अयोनावपि बुद्धिपूर्वमित्यपरे। पूर्णया स्रुचाहुतिः पूर्णाहुतिः। प्रत्याहुतीत्यनेनैकैकस्या आहुतेरेकैको वरो दक्षिणेति दर्शितं. न त्वाहुतावाहुतौ हुतायां देय इति. अन्यथा षट् पूर्णाहुतीर्हुत्वेत्यनेन विरोधात्. अग्निष्टकं दक्षिणा ददातीत्यादौ तथादर्शनाच्च॥

इत्येकोनत्रिंशी कण्डिका।

यद्देवा देवहेडनमिति वा दशाहुतीर्हुत्वा पवमानः सुवर्जन इत्येतेनानुवाकेनाभिषिञ्चेत्। १।

अभिषेकवचनात् नावगाहेत। पत्न्या सहावकिरणे तन्त्रेणाहुतीर्हुत्वा पृथगुभयोरभिषेकः। यदि पुनर्दास्यामयोनौ वा रेतःस्कन्दनं स्यात्तदा मामयाचारिको ऽपि विधिरनुसंधातव्यः. शूद्रायां च रेतः सिक्त्वायोनौ वाब्लिङ्गाभिरप उपस्पृशेत्. वारुणीभिर्वा. अन्यैर्वा पवित्रैरिति। अबुद्धिपूर्वकस्कन्दने त्वक्त एव विधिः यन्मे ऽद्य पयस इत्यादिना॥

यदि हुताहुतौ सोमौ संसृज्येयातामन्तःपरिधि अङ्गारं निवर्त्य यज्ञस्य हि स्थ ऋत्वियाविन्द्राग्नी चेतनस्य च। हुताहुतस्य तृप्यतमहुतस्य हुतस्य च॥ हुतस्य चाहुतस्य चाहुतस्य हुतस्य च। इन्द्राग्नी अस्य सोमस्य

वीतं पिबतं जुषेथामित्यङ्गारे हुत्वा तमस्मै भक्षं प्रयच्छेत्।२।

यदा हि ग्रहस्य चमसस्य वा हुतस्य भक्षायानीयमानः शेषः प्रमादात्कश्चिदहुतग्रहादावापतेत् अहुतो वा ग्रहादिर्हुतशेषे तदा तं संसृष्टमेवं हुत्वा तस्मै भक्षं प्रयच्छेयुः पूर्वहुतशेषभक्षणः प्राप्तः॥

मा यजमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः। मा यः सोममिमं पिबात्संसृष्टमुभयं कृतमिति भक्षयति।३।

प्रत्याम्नायो ऽयं नित्यस्य भक्षमन्त्रस्य॥

मा नो ध्वारिषुः पितरो मोत वीरा मा नः सबन्धुरुत वान्यबन्धुः। मा नो दुश्चक्षा अघशंस ईशताहुतो ऽयं यज्ञमप्येतु देवानिति भक्षयन्तमभिमन्त्रयते।४।

अध्वर्युरिति शेषः॥ यदा त्वध्वर्युर्भक्षयति तदैनं प्रतिप्रस्थाताभिमन्त्रयते। एवं संसृष्टं सोममिन्द्राग्निभ्यां प्रतिपाद्य पुनर्योनित उत्पन्नेन स्वकाले तां देवतां यजेदस्यै गृहीतो ऽयमहुतो ऽन्यत्र प्रतिपन्नः। यदा त्वहुतस्यैकदेश एव हुतशेषे पतितो न कृत्स्नः तदा शेषेणैव वर्धितेन यजेत्॥

सप्तर्त्विजः सप्त सदांस्येषां दश क्षिपो अश्विना पञ्च वाजाः। प्राणो व्यानो ऽपानो मन आकूतमग्निः स्वा-

इयाहुतं हविरदन्तु देवा इति भक्षं व्यापन्नमभिमन्त्र्येदं विष्णुर्विचक्रम इति दक्षिणपूर्व उपरवे ऽवनयेत् । ५ ।

केशकीटादिभिरुपघातो व्यापत्तिः । तत्र पात्रमपि निर्णिज्यते निर्लिख्यते वा यथादोषम । न चान्यो भक्ष उत्पाद्यः, अप्रयोजकत्वात्, प्रतिपत्त्यन्तरेण शेषकार्याच्च । नाराशंसार्थस्तूत्पाद्य एवानुप्रकम्पनार्थम् ॥

उत्तरपूर्वे वा । ६ ।

गतः ॥

यः सोमवामी स्यात्तस्मा एतं सौमेन्द्रं श्यामाकं चरुं निर्वपेत् । ७ ।

न तावदृत्विजां सोमं वमतामेतत्प्रायश्चित्तं, परार्थपानत्वात्तेषाम् । अतो यजमानस्यैव स्वचमसं भक्षयित्वोद्गिरतो ऽयं विधिः । चरौ च सवनीयतन्त्रं प्रसज्यते, तन्मध्यपातात् । अग्नीषोमीयविकारश्च, सोमस्य मुख्यत्वात् । तथा सौत्रामणीमप्यस्य वक्ष्यति, तथा सोमवामिनं याजयेदिति । सा त्वनन्तरे पर्वणि भवति, मा प्रधानकालो बाधीदिति ॥

इति त्रिंशी कण्डिका ।

इति नवमः पटलः ॥

यदि सदोहविर्धानानि कृष्णशकुनिरुपर्युपर्यतिपतेत्पक्षाभ्यामाधून्वान इवाभिनिषीदेद्वेदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात्। यद्युच्चैः पतेन्न तदाद्रियेत। १।

यदि हवींष्यामन्नानि कृष्णशकुनिरित्यत्रैव व्याख्यातः॥

यद्यनो रथो वान्तराग्नी सदोहविर्धाने वा वीयात्प्रायश्चित्तीं पूर्ववन्निर्वपेत्। २।

अग्नी इति गार्हपत्याहवनीययोरेव निर्देशः. नान्ययोरित्युक्तमनेकश। यद्येवमन्तराग्नी इत्येव सिद्धे किमर्थं सदोहविर्धानग्रहणम्। अनुगतावप्यग्न्योस्तदन्तरागमने प्रायश्चित्तार्थम्। किं च. सदोहविर्धानसंयोगात् तन्निर्माणोत्तरकाल एवायं विधिः। पूर्वकाले तु यस्यानो वा रथो वेत्ययं सामान्यविधिरेव भवति। यदा तु निरुप्ते हविषि निमित्तागमः तदा यस्य सांनाय्ये ऽधिश्रित इत्ययमेव विधिरिष्यते। सामान्यविधेः सर्वत्र विकल्प इत्येके। यथा चास्य विधेर्विकल्पो यथाचानुपहो बहूर्चैरुक्तः तत्सर्वं सामान्यविधावेव दर्शितमस्माभिः॥ पूर्ववदिति पथो ऽन्तिकाद्धविषो ऽतिदेशः. न तु दक्षिणायाः. सोमाङ्गत्वादिष्टेः. सवनीयतन्त्रप्रसङ्गित्वाच्च॥

यदि हविर्धानं पद्येतोदस्ताम्भीत्सविता मित्रो अर्यमा सर्वानमित्रानवधीद्युगेन। बृहन्तं मामकरद्वीरवन्तं रथंतरे श्रयस्व स्वाहेत्याहवनीये जुहुयात्। ३।

हविर्धानमित्येकवचनात् मण्डपस्य पतन एतत्प्रायश्चित्तम् । अनयो-रुत्तरच वक्ष्यति ॥

एतेनैव पृथिव्यां वामदेव्ये श्रयस्व स्वाहेति होत्रीये यदि सदः । ४ ।

यदि सदः पतेत तदाप्येतयैवर्चा पृथिव्यां वामदेव्ये श्रयस्वेति चतुर्थपादेन विकृतया होत्रीये जुहुयात् । अविद्यमाने तु तत्राग्ना-वाग्नीध्रादाहृत्य जुहुयात् ॥

अन्तरिक्षे बृहति श्रयस्व स्वाहेत्याग्नीध्रीये यद्याग्नी-ध्रम् । ५ ।

यद्याग्नीध्रमण्डपः पतेत्तदाग्नीध्रीय एव होमः । पूर्ववद्योजना ॥

यदि प्राग्वंशं सर्वैः शालामुखीये जुहुयात् । ६ ।

प्राग्वंशपतने त्रिभिरपि मन्त्रैर्जुहुयात् ॥

दिवि बृहता त्वोपस्तभ्नोमीति सर्वेषामुपस्तम्भनः समानः । ७ ।

एवं हुत्वा तत्तत्पतितमुत्तभ्नोति । तत्र तु दिवि बृहतेत्येव सर्वेषां मन्त्रः ॥

यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयादनु मा सर्वो यज्ञो ऽयमेतु विश्वे देवा मरुतः सामार्कः ।

आप्रियम्छन्दांसि निविदो यजूंष्यस्यै पृथिव्यै यद्यज्ञि-यमिति।८।

पूर्वमार्त्विज्याद्‌ग्रितस्य यजमानं जिघांसतः काम्यो दशहोतोक्तः। तस्ये-वेदानीं यजमानमपहाय क्रतुमेव तमभिजिहीर्षतो ऽयं होमः. मन्त्र-लिङ्गात्॥

अन्ययज्ञे सोमं भक्षयित्वाग्निभ्यः परिभक्षमाज्येना-हवनीये जुहुयात्।९।

इत्येकत्रिंशी कण्डिका।

अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धामाग्नेः प्रियतमं हविः स्वाहा। अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धामेन्द्रस्य प्रियतमं हविः स्वाहा। अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धाम विश्वेषां देवानां प्रियतमं हविः स्वाहेति।१।

आहिताग्नेरार्त्विज्यवशादन्यदीययज्ञे सोमं भक्षितवतः परिभक्षो नाम होमसमुदायो विधीयते परिवर्जनार्थः स्वाग्निभ्यः। तेन सोमभक्षो निमित्तं यस्य स तथोक्तः। केचित्तु परिवित्तादिवदाहिताग्नेरसोम-याजिनो विनाग्निभिः प्रथमभक्षण एव परिभक्षदोषमिच्छन्ति॥ आज्यग्रहणं सोमशङ्कानिवृत्त्यर्थम्। आहवनीयग्रहणं लौकिके ऽग्नौ यथा स्यादिति॥

वयं सोम व्रते तव मनस्तनूषु पिप्रतः । प्रजावन्तो अशीमहीति शेषं भक्षयित्वा देवेभ्यः पितृभ्यः स्वाहा सोम्येभ्यः पितृभ्यः स्वाहा काव्येभ्यः पितृभ्यः स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति । २ ।

आज्यशेषं भक्षयित्वान्येनाज्येन प्राचीनावीती दक्षिणाग्नौ जुहोति ॥

तं जघनेन दक्षिणाप्रागग्रान्दर्भान्संस्तीर्य दधि ददाति देवास इह मादयध्वं सोम्यास इह मादयध्वं काव्यास इह मादयध्वमिति । ३ ।

दर्भेषु दक्षिणाप्रागपवर्गानेव दधिपिण्डान्ददाति ॥

अनन्तरिताः पितरः सोम्याः सोमपीथादित्युपतिष्ठते । ४ ।

दधिपिण्डानुपतिष्ठते पितृन्वा येभ्यस्ते दत्ताः ॥

भये जाते ऽशक्ये यष्टुं सर्वेभ्यो हविर्भ्यः सोमेभ्यश्च द्रोणकलशे समवधाय ये देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो ऽग्निहोतृभ्यो देवेभ्यः स्वाहेति द्रोणकलशेन हुत्वाभये पुनर्यजेत । ५ ।

यदा यज्ञमध्ये राष्ट्रक्षोभादिनिमित्तं भयं जायते न शक्यते च कथंचिद्देशान्तरे ऽप्युद्वसाय यष्टुं तदा सर्वेभ्यो ऽपि निष्पन्नेभ्यः पयौषध-

सोमेभ्यः किंचित्किंचिद्द्रोणकलशे गृहीत्वा तेनैव जुहुयात्। यत्त्वनिष्पन्नं हविर्नैव निष्पादयति. न चासंज्ञप्तं पशुं संज्ञपयति. न चानभिषुतं सोममभिषुण्वन्ति । सोमस्तु तूष्णीं कुट्टयित्वा ग्राह्यः प्राधान्यादित्यन्ये ॥ तत उत्थायाभये पुनर्यजेत. आदित एवारभ्य तेनैव क्रतुना. यदि न गलितः कालो वसन्तादिः। इतरथागामिनि काले यजेत । न चैवं कृते यज्ञविभ्रंशनिमित्तो ऽग्निष्टुत् न च वैधातवीया ॥ अथ यज्ञमध्ये यजमानमरणे ऽप्येवमेव सर्वहविःसोमानां प्रतिपत्तिमिच्छन्ति । तत्र च यो ऽन्यो विधिः सो ऽपि दर्शित एवास्माभिः. यदि विसंस्थितायामिष्ट्यां यजमानो म्रियेतेत्यत्र ॥

यदर्धर्चाल्लुप्येताभिप्रतिगृणीयाद्वा त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापत इति चतस्र आहुतीर्जुहुयात् । व्याहृतीश्च । ६ ।

अर्धर्चे प्रतिगरस्यावचनं अर्धर्चाल्लोपः । यथोक्तादधिकप्रतिगरवचनं अभिप्रतिगरः ॥

यद्यृक्तो यज्ञं भ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयात्। यदि यजुष्टो भुव इति दक्षिणाग्नौ। यदि सामतः सुवरित्याहवनीये। यदि सर्वतः सर्वा जुहुयात् ।७।

व्याख्यातः प्राक् । पुनर्वचनमुत्तरविकल्पार्थम् ॥

इति द्वात्रिंशी कण्डिका ।

ब्रह्मा वा मनसा ध्यायन्नासीत ।१।

ऋत्विक्षु तां तां व्याहृतिं ब्रह्मा ध्यायन्नासीत वा। नाध्वर्यु-र्जुहुयात्. न चायं विकल्पः सोमादन्यत्रेष्यते. पूर्वप्रायश्चित्तेष्व-वचनात् ॥

यद्यौदुम्बरी नश्येदन्यां प्रच्छिद्योर्गस्यर्जं मयि धेहि श्रियां तिष्ठ प्रतिष्ठिता। दिवं स्तब्ध्वान्तरिक्षं च पृथिव्यां च दृढा भव। धर्त्रि धरित्रि जनित्रि यमित्रीत्यध्वर्यु-रुद्गाता यजमानश्चोच्छ्रयन्ति ।२।

नाशः क्रिमिभक्षणमपहारादिर्वा ॥

संमितां नित्येन यजुषाभिमृशति ।३।

तूष्णीं निखाय द्युतानस्त्वेति यजुषाभिमृशत्यध्वर्युः ॥

यदि हविर्धाने पद्येयातां दक्षिणमध्वर्युरुन्नह्लीया-त्प्रतिप्रस्थातोपस्तभ्नुयात्। उत्तरं प्रतिप्रस्थातोन्नह्ली-यादध्वर्युरुपस्तभ्नुयात् ।४।

हविर्धानशकटयोरुभयोरन्यतरस्य वा पतने दक्षिणमध्वर्युरुद्गृह्णीयात उत्कर्षयेत्. प्रतिप्रस्थातोपस्तभ्नुयात् मेथ्यामवदध्यात्। एतदेव विप-रीतमुत्तरस्य ॥

वैष्णव्योपस्तभ्नुतः। वैष्णव्योपमिनुते। आश्विन्या कल्पयतः ।५।

तयोद्धरणं तावदुभयोस्तूष्णीकं. उपस्तम्भनं तु वैष्णव्या कुरुतः। ततस्तयैवोपमायाश्विन्या कल्पयतश्च। तत्र यथास्थानमवस्थापनं उपमानमवस्थापनस्य दृढीकरणं कल्पनम्। इदं विष्णुरिति वैष्णवी। यद्वा दिवो वा विष्णो. विष्णोर्नु कमिति पृथगृचावुभयोः. नित्यस्थापने तयोर्दर्शनात्। तदा तु वैष्णवीभ्यामिति भवितव्यम्। या वां कशेत्याश्विनी॥

अग्ने वाजस्य गोमत इति तिस्रः॥ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः। भद्रा उत प्रशस्तयः॥ भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये। येना समत्सु सासहः॥ येना समत्सु सासहो ऽव स्थिरा तनुहि भूरि शर्धताम्। वनेमा ते अभिष्टिभिरिति षड्भिरुष्णिक्ककुब्भिराग्नीध्रीये जुहुतः।६।

षड्भिरुष्णिक्ककुब्भिरिति श्रुतिरुदाहृता। तां व्याचष्टे॥

पूर्वाभिरुष्णिग्भिरध्वर्युः। उत्तराभिः ककुब्भिः प्रतिप्रस्थाता।७।

पूर्वाभिस्तिसृभिरुष्णिग्भिरध्वर्युर्जुहोति. इतराभिस्तिसृभिः ककुब्भिरितरः॥

शिरो यज्ञस्य प्रतिधीयताममृतं देवतामयम्। वैष्णव्या क्रियतां शिर आश्विन्या प्रतिधीयतामिति पञ्चगृहीतेन समानौ होमौ जुहुतः।८।

इयमप्याकृतिराग्नीध्रीये ऽधिकारात्। समानौ होमाविति समाम्नाता मन्त्रैक्ये॥

यस्याग्निरुख्यामा भिद्येत संसृज्यैनां पुनः कुर्यात्।९।

उखा यद्यामा भिद्येत तदा तान्येव कपालानि संसृज्याद्भिरुपसृज्य पुनः कुर्यात्. तूष्णीं मन्त्रैर्वा. सामर्थ्यात्तानेतानाम्नायात्॥

यदि पक्वा संपिष्यान्यया मृदा संसृज्योखां कारयेत्।१०।

यदि पक्वा भिद्येत तदा कपालानि पिष्ट्वा मृदं तेन सह संसृज्य कारयित्वा कुर्यात्॥

इति चयस्त्रिंशी कण्डिका।

यस्याग्निरुख्य उद्वायेद्गार्हपत्यादन्यं प्रणयेत्। स एव पुनः परीध्यः। स्वादेवैनं योनेर्जनयतीति विज्ञायते।१।

उखायांभव: उख्यः। स यदि प्राक् संनिवापादुद्वायेत् गार्हपत्यादन्यमाहवनीयमायतने प्रणयेत्। ततश्च स एवाहवनीयः पुनः परीध्यः परित उखाग्निध्यः. प्रणकुलायेनेत्यारभ्य जातोपस्थानान्तेन प्रकृतविधिना पुनरुखायामुत्पादयितव्य इत्यर्थः। यस्य तु कामतो निमित्ततो वा प्रदाव्यादियोनिर्निर्मन्थ्यो वा भवत्युख्यः तत्रापि स्वात्स्वाद्योनेराहृत्याधेयः. न तु परीध्यः. पुनः परीध्य इति विज्ञात्. स्वादेवैनं योनेर्जनयतीति विज्ञाय॥

कृष्णं वासः कृष्णा धेनुः कृष्णो वा गौः शतमानं च हिरण्यं दक्षिणा। २।

गौः बलिवर्दः॥ अथाहर्गणेषु केषांचित्कर्मणां भ्रेषे प्रायश्चित्तं वक्ष्यं-स्तत्रादरविशेषार्थं तेषामेव तावत्कर्मणामर्थवादान्दर्शयति॥

यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने क्रियते तेनाहरभ्यासजति। तेन यज्ञं संतनोति। ३।

यत्पूर्वेद्युरुत्तराहार्थं कर्म क्रियते यथा नवनीतस्य भावर्हिराहरणादि तेनोत्तरमहः पूर्वस्मिन्नहन्यासजति. पूर्वोत्तरयोरह्नोः कर्मणी संबध्नातीति यावत्। तेन च यज्ञमेव संतनोति। अन्यथा स एव विच्छिन्नः स्यात्। अतो ऽयमावश्यको ऽभ्यासङ्ग इत्यर्थः॥

यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने वसतीवरीर्यज्ञायज्ञियं प्रति गृह्णाति तेनाहरभ्यासजति। तेन यज्ञं संतनोति॥ यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने पयांसि विशास्ति तेनाहरभ्यासजति। तेन यज्ञं संतनोति॥ यदति-प्रेष्यति तेनाहरभ्यासजति। तेन यज्ञं संतनोति। ४।

यज्ञायज्ञियं प्रति यज्ञायज्ञियकाले। पयांसि आशिराद्यर्थानि विशास्ति विविधं प्रेष्यति. सूक्तवाककाले श्वःसुत्यामिन्द्राग्निभ्यामित्यादिनापि। शेषं पूर्ववत्॥

एतेषामेकस्मिन्नप्यक्रियमाणे नमो ब्रह्मणे नमो

अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि स्वाहे-त्याहुतिं हुत्वा सर्वप्रायश्चित्तं जुहुयाज्जुहुयात् । ५ ।

एतेषामेकस्मिन्नपि कर्मणि पूर्वेद्युरेवाक्रियमाणे जुहुयादेते आहुती । किं पुनर्द्वयोर्बहुषु वेत्यर्थः ॥

इति चतुस्त्रिंशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां दशमः पटलः ॥

इति चतुर्दशः प्रश्नः ॥

---

ओम्।

एवं सर्वसोमप्रकृतिभूतो ज्योतिष्टोमः सप्रायश्चित्तो व्याख्यातः। प्रवर्ग्यस्तु तस्याङ्गभूतो ऽप्यनारभ्याधीतत्वात्सूत्रकृता प्रकरणादुद्धृत्य स्वतन्त्रो व्याख्यातः। स इदानीमस्माभिः क्रतुशीर्षतयात्यन्तान्तरङ्गत्वादत्रैव व्याख्यायते॥

प्रवर्ग्यं संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे तूष्णीं काण्टकीं समिधमाधाय युञ्जते मन इति चतुर्गृहीतं जुहोति।१।

प्रवर्ग्य इति कर्मनाम. प्रवृज्यते तप्यते ऽस्मिन्घर्म इति। तस्य साधनसमवधानं संभरणम्। तच्च पर्वणोः पूर्वपक्षे पुण्यनक्षत्रे वा नियतम्। तेन यो ऽमावास्यायां यक्ष्यमाणो ऽपरपक्षे प्रवृञ्ज्यात्तेन प्रागेव प्रवर्ग्यः संभरणीयः. सुत्यायां वा संभृत्य प्रवृञ्जनीयमिति द्रष्टव्यम्। तत्र यदा बहिःक्रतु संभरेत्तदा कल्पयमानाग्नीनुप उपसमूह्य यावदर्थं सौमिकानृत्विजो वृत्वाग्नींश्च विहृत्य संभरेत्॥ काण्टकीं कण्टकवतीम्॥

अथ यदि दीक्षितः काण्टकीमेवैतया समिधमादध्यात्। यजुरेव वदेदित्येके।२।

दीक्षितस्य तामेव काण्टकीमेतयर्चादध्यात् यजुरेव वा केवलं वदेत्। ऋचि यजुःशब्दो याजुर्वैदिकत्वात्। केचित्तु प्रवर्ग्यमन्त्रानृचो यजूंषि

च वाक्येवाक्ये विच्छिद्य प्रयुज्यते। तथार्धर्चेभ्यो ऽन्यत्र विच्छेदकारणम्। त एव प्रष्टव्याः॥

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादायाभ्रिरसि नारिरसीत्यभिमन्त्रयते। ३।

देवेभ्य इति मन्त्रान्तो ऽभिमन्त्रणे॥

साग्निक्या व्याख्याता। ४।

साभ्रिराग्निक्याभ्र्या व्याख्याता. यथा वैणवीं कल्माषीमित्यादि॥

उत्तिष्ठ ब्रह्मणस्पत इति ब्रह्माणमामन्त्रयते। ५।

गतः॥

उपोत्तिष्ठति ब्रह्मा। उभावुत्तरमर्धर्चं जपतः। आददते कृष्णाजिनम्। अनुनयन्त्यजां पुंश्छगलामश्वं वृषाणमिति। ६।

छगलः अजायाः स्तनंधयः. स पुमान्यस्याः सा पुंश्छगला। वृषा सेक्ता पुमानिति यावत्॥

प्रैतु ब्रह्मणस्पतिरिति प्राञ्चो ऽश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः। ७।

प्राच्यामेव दिशि यत्र मृद्भवेत तत्र गच्छन्ति॥

अपि वास्यैते संभाराः परिश्रिते ऽभ्युदाहृता भवन्ति। ८।

अपि वास्य प्रवर्ग्यस्य एते वक्ष्यमाणाः संभाराः परिश्रिते देशे प्रथममेवाहृता भवन्ति । को ऽसौ देशः. तमाह ॥

अग्रेणाहवनीयं मृत्खनः । पूर्वःपूर्व इतरः । ९ ।

यत्र खेया मृत्स मृत्खनः । सो ऽग्रेणाहवनीयमभ्युदाहृतो भवति । इतरस्य संभारस्ततः पूर्वःपूर्वः ॥

उत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य देवी द्यावापृथिवी इति मृत्खनमभिमन्त्रयते । ऋध्यासमद्येति मृत्खने ऽभ्रिया प्रहृत्य मखस्य शिर इत्यपादाय मखाय त्वेति हरति । मखस्य त्वा शीर्ष्ण इति कृष्णाजिने निवपति । १० ।

गतः ॥

एवं द्वितीयं तृतीयं च हरति । ११ ।

प्रहरणादिनिवपनान्त एको हरणपर्यायः । तं त्रिरावर्तयति । मृत्खनाभिमन्त्रणं तु सकृदेव क्रियते ॥

तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्य आप्तां मन्यते । १२ ।

यावतीं मृदं पर्याप्तां मन्यते तावतीं चतुर्थपर्याये तूष्णीं हरति ॥

एवमितरान्संभारान् । १३ ।

इतरानपि संभारानेवं मन्त्रवदादायाभिमन्त्र्य त्रिभिस्त्रिभिः पर्यायै-स्तूष्णीकं चतुर्थं हरति ॥

अभिमन्त्रणे विकारः ।१४।

अभिमन्त्रणमन्त्रे ॥

इति प्रथमा कण्डिका ।

इयत्यग्र आसीरिति वराहविहतम्। देवीर्वम्री-रिति वल्मीकवपाम्। इन्द्रस्यौजो ऽसीति पूतीकाज-लोमानि कृष्णाजिनलोमानि च संसृज्याग्निजा असि प्रजापते रेत इति ।१।

अभिमन्त्रयत इति शेषः ॥

आयुर्धेहि प्राणं धेहीत्यश्वेनावघ्राप्य मधु त्वा मधुला करोत्वित्यजयाभिद्दोहयति ।२।

अभिदोहनं उपरिदोहनम् ॥

अभिदोहनमेके ऽवघ्रापणात्पूर्वं समामनन्ति ।३।

गतः ॥

बहव आर्याः परिगृह्य हरन्ति ।४।

र्थाः वैदर्भिका एव इरन्ति. मान्य ॥

उत्तरेण विहारमुद्धते ऽवोक्षिते सिकतोपोप्ते परि-
श्रिते निदधाति । ५ ।

गतः ॥

मधु त्वा मधुला करोत्विति मदन्तीरुपसृजति । ६ ।

मदन्तीभिः तप्तोदकेन संभारान्संसृजति ॥

ये चोखासंसर्जनाः संभारा यथान्यदृढार्थं उपार्धं
मन्यते । ७ ।

ये चोखासंसर्जनीयाः संभारा अर्मकपालादयः यथान्यदृढीकरणार्थं
द्रव्यं तैरपि संसृजति । यावच्च सर्वं दृढिमार्थं द्रव्यं संहतमुपार्धं
अर्धस्य समीपे मन्यते. मृदंशस्यार्धकल्पं मन्यत इति यावत्. ताव-
ता संसृजति नाधिकेन ॥

अथात्यन्तप्रदेशः । ८ ।

अथ सर्वप्रवर्ग्यव्यापी विधिरुच्यते . न संभारमात्रविषयः ॥

यत्किंच प्रवर्ग्य उदककृत्यं मदन्तीभिरेव तत्क्रियते ;
नैनं स्त्री प्रेक्षते न शूद्रः । ९ ।

गतः ॥

न कुवन्नभिप्राणिति । १० ।

प्रवर्ग्यपाषाणीति कुर्वन्नध्वर्युर्न तेषामुपरि वर्षति ॥

अपहाय मुखमनभिप्राणन्वेणुना करोति । ११ ।

पुनरपि प्राणननिषेध आदरार्थः ॥

न प्रवर्ग्यमादित्यं च व्यवेयात् । १२ ।

प्रवर्ग्यादित्ययोर्मध्ये यो न व्यवहितः प्रत्यक्षो देशः तेन न कश्चिद-
तिक्रामेत् ॥

यत्र क्व च विप्रक्रान्ते प्रवर्ग्य आदित्यो ऽस्तमियात्
कृतान्तादेव विरमेत् । श्वोभूते शेषं समापुयात् । १३ ।

विप्रक्रान्ते प्रक्रम्यापरिसमाप्ते कृतान्तादेव विरमेत्. यावत्कृतं ताव-
त्येव विरमेत् । केचिदिमं संभरणमात्रविषयं विधिं मन्यन्ते. प्रचरणे
यदि घर्मेण चरत्विति विध्यन्तरदर्शनात् । तदयुक्तं. यत्र क्व च
प्रवर्ग्य इति सामान्यवचनवैयर्थ्यात्. अथात्यन्तप्रदेश इत्यधिकारवि-
रोधाच्च । तस्मात्प्रचरणदशायामुभयं विकल्पते ॥

संप्रक्षिप्य मृदं मखस्य शिरो ऽसीति पिण्डं कृत्वा
यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां निगृह्य महावीरं करोति
व्युषितं पञ्चोद्धिमपरिमितोद्धिं वा प्रादेशमात्रमूर्ध्वसा-
नुमुपरिष्टादासेचनवन्तं मध्ये संनतं वायव्यप्रकारम् ।
। १४ ।

संप्रक्षिप्य मर्दयित्वा। निगृह्य निपीड्य। यत्र घर्मस्तप्यते स महावीरः। उद्धिः उच्छ्रितावयवविशेषः। व्याख्यातः शेषो वायव्येषु। यथोक्तस्यैव प्रकारस्य वायव्येषु व्यक्तत्वात् निदर्शितं वायव्यप्रकारमिति॥

इति द्वितीया कण्डिका।

---

गायत्रेण त्वा छन्दसा करोमीति प्रथमम्। त्रैष्टुभेनेति द्वितीयम्। जागतेनेति तृतीयम्।१।

गतः॥

अपि वा सर्वैरेकैकम्।२।

एकैकस्य वा त्रयोऽपि मन्त्राः॥

मखस्य रास्नासीत्युपबिलं रास्नां करोति।३।

बिलप्रदेशे रज्जुसदृशं वलयं करोति॥

अदितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति।४।

बिलं कुक्षिः॥

तृतीयवेलामतिनयति।५।

तच्च बिलं महावीरस्य तृतीयवेलामतीत्य भवति । बिधाहृतस्य महावीरायामस्य मुखादधो* द्वावंशौ तृतीयांशसीमां चातिगतं करोतीत्यर्थः । तथा च बौधायनः. अथास्य वेणुकाण्डेन द्विभागमवच्छिद्यतीति ॥

यावद्दैवताय सौविष्टकृतायाग्निहोत्राय भक्षायालं मन्येतेत्यपरम् । ६ ।

यावद्वा बिलं त्रिविधहोमभक्षार्थं च घर्मस्य धारणाय पर्याप्तं मन्यते तावत्करोति ॥

सूर्यस्य हरसा श्रायेत्युत्तरतः सिकतासु प्रतिष्ठाप्य मखोऽसीत्यनुवीक्षते । ७ ।

महावीरमिति शेषः ॥

एवं द्वितीयं तृतीयं च करोति । ८ ।

पिण्डकरणाद्यनुवीक्षणान्तो विधिरावर्तते ॥

तूष्णीमितराणि । ९ ।

पात्राणीति शेषः ॥

एतस्या एव मृदो दोग्ध्रे करोति हस्त्याधे प्रसेचनवती यथा स्रुगदण्डैवम् । १० ।

---

* Corrected; the MSS. have मुखादधो.

एतस्याः संज्ञातायाः। दोग्ध्रे दोहने। हस्त्योष्ठ्ये हस्त्योष्ठाकारे। प्रसेचनं आनयनार्थं मुखम्। यथा स्रुगदण्डा. स्रुगाकारमदण्डं च भवतीत्यर्थः॥

वर्षीय आध्वर्यवं प्रतिप्रस्थानात्॥११॥

येन प्रतिप्रस्थाता कर्म करोति तत्प्रतिप्रस्थानम्॥

आज्यस्थालीं रौहिणकपाले च परिमण्डले घोटप्रकारे।१२।

एतस्या इत्येव॥ घोटो ऽश्वः। परिमण्डलबुघ्ने घोटाकाराकारे च कपाले करोति. यथाश्वाकाराविव रौहिणौ भवतः॥

घर्मेष्टकां कुलायिनीमिति यदि साग्निचित्यो भवति ।१३।

साग्निचित्ये क्रतावप्रवर्ग्ये ऽपि करोत्येवैते॥

माप्रवर्ग्ये स्यातामित्यपरम्।१४।

अस्मिन्कल्पे लुप्यत एव तयोरुपधानम्॥

श्लक्ष्णीकरणैः श्लक्ष्णीकुर्वन्ति।१५।

श्लक्ष्णान् अजर्राणि कुर्वन्ति तद्द्रव्यैः। कानि पुनस्तानि॥

अहतखण्डातकैर्गवीधुकैः क्लीतकाभिर्वेणुपर्वभिराज्येनेति।१६।

अहतं नवं अच्छादकं वरत्नीवपनीयो वासोविशेषः । गवीधुका नाम सस्यानि । क्षीतका यष्टिमधुकमिति नैघण्टुकाः ॥

वृष्णो ऽश्वस्य शकृता गार्हपत्ये प्रदीप्य प्रथमकृतं महावीरं शफाभ्यां परिगृह्य धूपयति वृष्णो अश्वस्य निष्पदसीति ।१७।

यथा व्याख्यातः ॥

एवं द्वितीयं तृतीयं च धूपयति । तूष्णीमितरांश्च ।१८।

गतौ ॥

शफाभ्यामेवात ऊर्ध्वं महावीरानादत्ते ।१९।

यथा महावीरो न पतति तथा यन्त्रयित्वाध्वर्युरेवादत्ते ॥

अग्रेण गार्हपत्यमवटं खात्वा लोहितपचनीयैः संभारैरवस्तीर्य तेषु महावीरानुपावहरति ।२०।

इति तृतीया कण्डिका ।

अर्चिरसीति प्रथमम्। शोचिरसीति द्वितीयम्। ज्योतिरसि तपो ऽसीति तृतीयम्। १।

यैः पक्वानि लोहितायन्ते ते लोहितपचनीयाः तृणकाष्ठविशेषाः॥

तूष्णीमितराण्यन्ववधाय लोहितपचनीयैः संभारैः प्रच्छाद्य गार्हपत्ये मुञ्जानादीप्योपोषत्यर्चिषे त्वेत्येतैः प्रतिमन्त्रं प्रतिदिशम्। २।

उपोषति दहति॥

अपि वा सर्वैः सर्वतः। ३।

सर्वतो दिशि वा चतुर्भिश्चतुर्भिर्मन्त्रैः॥

पच्यमानान्मैत्र्योपचरत्यभीमं महिना दिवमिति। ४।

प्रक्षेपकाष्ठक्षेपादिस्तदर्थो व्यापार उपचारः॥

उत्तरया वा। ५।

मैत्र्योरच विकल्पो भवति. नोभयोरत्र समुच्चय इति भावः॥

पक्वेषु सिद्ध्यै त्वेति धृष्टी आदाय भस्मापोह्य प्रथमजातं महावीरं शफाभ्यां परिगृह्योद्वासयति। ६।

शिष्टौ त्वेत्यावृत्तिरेकवचनात्। शफाभ्यामेवात ऊर्ध्वमित्येव सिद्धे पुनः-शफवचनमादरार्थं अविस्मरणार्थं वा ॥

देवस्त्वा सवितोद्वपत्वित्युद्वास्यापद्यमानः पृथिव्यामाशा दिश आपृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्य सूर्यस्य त्वा चक्षुषान्वीक्ष इत्यनुवीक्षते ।७।

उत्तरतस्तस्यैवावटदेशस्य ॥

एवं द्वितीयं तृतीयं चोद्वासयति । तूष्णीमितराणि ।८।

गतौ ॥

अथैनान्प्रदक्षिणं सिकताभिः पर्यूहतीदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति । विशेति राजन्यस्य । पशुभिरिति वैश्यस्य ।९।

एनान् महावीरान्। आमुष्यायणमिति गोत्रनिर्देशः. बबरः प्रावाहणिरितिवत् पितृनिर्देश इत्यपरम् ॥ तत्र राजन्यवैश्ययोर्विकारवचनात् यथापठितो मन्त्रो ब्राह्मणस्येत्युक्तं भवति। केचित्तु परिशेषात् ब्रह्मवर्चसेनेत्येतावद्ब्राह्मणस्येच्छन्ति । तदयुक्तं. सर्वपाठविरोधात् । यदि हि तथाभिप्रैष्यत्तावदेव प्रावक्ष्यत्. न कृत्स्नं. यथा ब्रह्माणि धारयेति । राजन्यस्यादावुक्तेश्च । ब्राह्मणेऽपि प्रथमस्य वर्णस्य त्रिभिः फलार्थवादमुक्त्वैकैकेनोत्तरयोरूहः. यथा विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याहेत्यादि । तस्माद्यथापठित एव ब्राह्मणस्य मन्त्रः ॥

**अथैनान्प्रभूतेनाजापयसा छृणत्ति। गायत्रेण त्वा छन्दसा छृणद्मीत्येतैस्त्रिभिस्त्रिभिरेकैकम्।१०।**

छृणत्तिर्दीप्तिकर्मा. तन्मयं ह्यचिरपक्वमजाक्षीरेणोक्षितमुज्ज्वलं भवति। तत्र गायत्रेणेत्यादि नव यजूंषि त्रीणित्रीणि विभज्य त्रिकात्रिकात्प्रथमैस्त्रिभिः प्रथमं महावीरं छृणत्ति. मध्यमैर्द्वितीयं. उत्तमैस्तृतीयं. यथा गायत्रेण त्वा छन्दसा छृणद्मि. छृणत्तु त्वा वाक्. छृन्धि वाचमित्यादि॥

**अपि वा सर्वैरेकैकम्। तूष्णीमितराणि।११।**

नवभिरपि यजुर्भिर्यथाम्नातमेकैकमपि वा छृणत्ति॥

**अथैनान्कृष्णाजिन उपनह्यासजति देव पुरश्चर सघ्यासं त्वेति।१२।**

एतान्महावीरानेकवद्बद्ध्वासजति निदधाति कचिन्मन्त्रेण। तूष्णीमितराणि पात्राणि॥

**उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम्।१३।**

निधानोत्तरकालं वा मन्त्रं वदेत्। मन्त्रान्तैः कर्मादीनित्यस्यापवादः। पक्वानामेव पात्राणां यजुषा करणमनुज्ञातवान्कात्यायनः. यथा दग्धेषु यजुः क्रियासंभवादिति॥

इति चतुर्थी कण्डिका।

. इति प्रथमः पटलः॥

प्रवर्ग्येण प्रचरिष्यन्तः संवृण्वन्ति द्वाराणि। १।

अवान्तरदीक्षोपायनानन्तरं प्रवर्ग्येण प्रचरिष्यन्तः प्राग्वंशस्य द्वाराणि संवृण्वन्ति॥

परिश्रयन्ति पत्न्याः। २।

यथा पत्न्या स्वस्थानस्थया न दृश्यते प्रवर्ग्यस्तथा छादयन्ति॥

पश्चाद्धोतोपविशति। पुरस्तादध्वर्युः। दक्षिणतो ब्रह्मा यजमानः प्रस्तोता च। उत्तरतः प्रतिप्रस्थाताग्नीध्रश्च। ३।

पश्चाद्दक्षिणत इत्यादि खरापेक्षया द्रष्टव्यम्। तथा चाश्वलायनः. उत्तरेण खरं परिव्रज्य पश्चादस्योपविशति॥

मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाग्रेण गार्हपत्यं दर्भान्संस्तीर्य तेषु महावीरानुपावहरति देव पुरश्चर सघ्यासं त्वेति। ४।

उग्रो ह्ययं प्रवर्ग्यः. यज्ञशिरसश्छिन्नस्य स्वरूपत्वेन भावनात्। अतस्तत्संयोगिभिरुग्राभ्यामिमाभ्यामनुवाकाभ्यामाद्यन्तयोः शान्तिः कार्या। तदर्थतया समुच्चारणमेव शान्तिकरणम्॥ महावीरान्यथानिहितमेकत्रद्धानेवोपावहरति। अतो नावर्तते मन्त्रः॥

उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम्। ५।

व्याख्यातः॥

अथैव सर्वं परिघर्म्यम् । ६ ।

सर्वं उक्तं वक्ष्यमाणं च । परिघर्म्यं घर्मसाधनमुपावर्तीत्यन्वयः ॥

अथौदुम्बराणि । सम्राडासन्दीं नितराम् । राजासन्द्या वर्षीयसीमेके समामनन्ति । मौञ्जीभी रज्जुभिरेकसराभिर्व्युताम् । ७ ।

भवतः ॥

चतस्रः स्रुचः । ८ ।

पूर्ववदन्वयः ॥

द्वे अनिष्टुब्धे । ९ ।

तासु द्वे अनवतिट्टबिले भवतः ॥

निष्टुब्धयोर्वर्षीयस्युपयमनी प्रोक्षणीधान्याः । १० ।

इतरयोस्तु निष्टुब्धयोरुपयमौ प्रोक्षणीधानौ । वर्षीयमौ लस्या उपयमनौ भवति ॥

स्रुवौ शफौ महावीरसंमितावरत्नी धृष्टी मेथीं मयूखान्षट् शकलान्काण्टकीं च समिधं त्रयोदश वैकङ्कतान्परिधीन्वैकङ्कतानि घर्मेन्धनानि । खादिराणि पालाशान्यौदुम्बराण्यर्कमयाणि कार्ष्मर्यमयाणि वैणवानि शमीमयानि वा । ११ ।

पूर्ववदन्वयः । महावीरग्रहणार्थे दीर्घकाष्ठे शफौ. तयोर्यः प्रदेशस्त-

दूहणार्थमावध्यते स आसन्दः। अङ्गारनिरूहणार्थे काष्ठे धृष्टी। गोबन्धनार्थं काष्ठं मेथी। मयूखाः शङ्कवः. ते च त्रयो वत्साजावर्कराणां बन्धनार्थाः। काण्टकी तु यज्ञियवृक्षान्तरजा. न त्वौदुम्बरी. तस्या अकण्टकजनत्वात्। परिधयो महावीरार्थत्वात् तत्संमितायामाः। प्रादेशमात्रानित्येव कात्यायनः॥

त्रीणि कार्ष्णाजिनानि धवित्राणि शुक्लकृष्णलोमानि।१२।

धवित्राणि व्यजनानि। पूर्ववदन्वयः॥

तेषां वैणवा दण्डा बाहुमात्रा भवन्तीति विज्ञायते।१३।

गतः॥

औदुम्बरदण्डानीत्यपरम्।१४।

धवित्राणीति शेषः॥

द्वौ रुक्मौ. रजतसुवर्णौ।१५।

पूर्ववदन्वयः॥

शतमानौ भवतः।१६।

तौ शतमानौ भवतः॥

अथ मौञ्जानि।१७।

वक्ष्यन्त इति शेषः॥

वेदौ । १८ ।

पूर्ववदन्वयः ॥

तयोरन्यतरः परिवासितः । १९ ।

परिवासितः छिन्नाग्रः। द्वौ च तूष्णीकौ, मन्त्रानतिदेशात्, अनैष्टिकत्वाच्च ॥

अभिधानीं निदाने त्रीणि विशाखदामानि प्रभूतान्मुञ्जप्रलवान्। रौहिणयोः पिष्टान्यफलीकृतानाम्। खरेभ्यः सिकताः। मौञ्जे पवित्रे। दर्भमये इत्यपरम्। २० ।

अभिधानी गोबन्धनार्था रज्जुः। पादबन्धनार्थे निदाने। वत्सादिबन्धनार्थानि द्विशिरस्कानि* दामानि विशाखदामानि। मुञ्जतृणान्येव खण्डशीर्णानि मुञ्जप्रलवाः। अफलीकृतानां तुषविमोचनमात्रेणावहतानां तण्डुलानां पिष्टानि। खरेभ्यः खरार्थम्। पवित्रे अपि तूष्णीके पूर्ववत् ॥

प्रोक्षणीनामावृता प्रोक्षणीः संस्कृत्य ब्रह्माणमामन्त्रयते । २१ ।

इति पञ्चमी कण्डिका।

* Corrected; the MSS. have द्विशिरस्कानि.

ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः। होतर्घर्ममभिष्टुहि। अग्नीद्रौहिणौ पुरोडाशावधिश्रय। प्रतिप्रस्थातर्विहर। प्रस्तोतः सामानि गायेति। १।

पवित्रान्तर्हितायामित्यादि आपो देवीरग्रेपुव इत्यभिमन्त्र्येत्यन्तया मदन्तीनां संस्कारः। ब्रह्मामन्त्रणग्रहणं प्रदर्शनार्थं होत्रादिसंप्रैषस्यापि॥

यजुर्युक्तं सामभिराक्तखमित्युपांशूक्त्वोमिन्द्रवन्तः प्रचरतेत्युच्चैरनुजानाति। २।

ब्रह्मेति शेषः॥

प्रचरतेति वा। ३।

इन्द्रवन्त इत्येतावतो लोपः॥

यमाय त्वा मखाय त्वेति सर्वं परिघर्म्यमभिपूर्वं त्रिः प्रोक्षति। ४।

अभिपूर्वमिति यत एवारभ्य प्रथमं प्रोक्षितवांस्तत एवारभ्य पुनः प्रोक्षतीत्यर्थः। सकृदेव तु मन्त्रः॥

प्रोक्षितानि व्यायातयति। ५।

व्यायातयति विभज्य गमयति॥

अधिश्रयत्याग्नीध्रो रौहिणौ पुरोडाशौ तूष्णीमुपचरितौ। ६।

तूष्णीमुपयच्छताविति धर्मादानादिभस्माभ्यूहनान्तो विधिस्तूष्णीं भवतीत्यर्थः। अधिश्रयणं चाहवनीये गार्हपत्ये वा। पात्रे संवापस्तु नेष्यते। संयवनं तु मदन्तीभिर्भवति॥

एतस्मिन्काले प्रतिप्रस्थाता दर्विहोमसंस्कारेणाज्यं संस्करोति। ७।

दर्विहोमसंस्कारेण गृहोक्तेन पवित्रानुप्रहरणान्तेन॥

नैतस्य संस्कारो विद्यत इत्यपरम्। ८।

अस्मिन्पक्षे ते एव पवित्रे प्रज्ञाते निदधाति॥

अथ दध्यधिश्रयति। ९।

दधि निरूप्य गार्हपत्येऽधिश्रयति। असंस्कारपक्षेऽपि भवत्येव दध्नोऽधिश्रयणम्। संस्कारपक्षेऽप्येतावानस्य संस्कारः॥

अथैतां सम्राडासन्दीमादायाग्रेणाहवनीयं पर्याहृत्य पुरस्ताद्राजासन्द्याः सादयति। १०।

गतः॥

तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्प्रचरणीयौ महावीरावुपावहरति देव पुरश्चर सघ्यासं त्वेति। ११।

अप्रचरणीयौ कृष्णाजिनात्पृथक्त्वात् शफाभ्यामेवोपावहरति। आवर्तते ऽपि मन्त्र एकैकस्य, युगपदुपादानत्वात्॥

उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम् ।१२।

गतः ॥

अथैतां मेथीं मयूखान्विशाखदामानीत्यादायाग्रेण होतारं जघनेन गार्हपत्यं दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन दक्षिणं द्वारं मेथीं निहन्ति होतुः समीक्षायै ।१३।

समीक्षाभावाद्दक्षिणद्वाराभावे ऽपि यत्र द्वारं तत्र निहन्ति ॥

एतस्यैव द्वारस्य पूर्वस्यै द्वार्यायै दक्षिणतो वत्साय शङ्कुम् ।१४।

निहन्तीत्यन्वयः। द्वार्या द्वारस्थूणा ॥

एतस्यैवापरस्यै द्वार्यायै दक्षिणतो ऽजाया अभ्यन्तरम् ।१५।

अभ्यन्तरमिति वत्सशङ्कोरुत्तरत इत्यर्थः। तथा तमुत्तरेण छागाया इत्येव बौधायनः ॥

उत्तरतो बर्कराय ।१६।

बर्करः छगलपर्यायः अजायाः स्तनंधयः। तदर्थमपरस्या द्वार्याया उत्तरतः प्राग्वंश एव शङ्कुं निहन्ति। बहिरेव प्राग्वंशादजाशङ्कुपेक्षया उत्तरत्वमिति केचित् ॥

तेषु विशाखदामानि आयातयति ।१७।

तेषु शङ्कुषु व्यायातयति वितत्य बध्नाति ॥

तान्येव व्यायातितानि भवन्त्योद्वासनात्। १८।

गतः ॥

तैरेनान्काले बध्नन्ति। १९।

काले दोहनकाले ॥

ततः खरानुपवपति। २०।

ततः सिकताभिः खरान्कल्पयति ॥

उत्तरेण गार्हपत्यमेकम्। उत्तरेणाहवनीयमेकम्। २१।

खरावन्तःप्राग्वंशमेवोपवपति. उत्तरेणेत्येनसा दूरत्वनिषेधात्. तथा संवृतत्वाद्वाराणामुपनिष्क्रम्येत्यवचनाच्च। खरयोः प्रमाणं चाह बौधायनः. प्रादेशमात्रं परिमण्डलमिति ॥

उत्तरपूर्वं द्वारं प्रत्युच्छिष्टखरं करोति बाह्यतो निःषेचनवन्तम्। २२।

द्वारग्रहणेन देशलक्षणा. पाक्षिकत्वाद्वारस्य। तयोत्तरपूर्वमन्तराक्षर-देशं प्रतीत्येव भारद्वाजः। तथ चान्तःप्राग्वंशमेव खरः पूर्ववत्। तयोत्तरे शालामण्डल इत्येव बौधायनः॥ उच्छिष्टार्थः खरः उच्छिष्ट-खरः. घर्मोच्छिष्टक्षालनार्थं इत्यर्थः। यथा वक्ष्यति तदुच्छिष्टखरे प्रक्षाल्येत्यादि। केचित्तु यजमानस्याचमनार्थमुच्छिष्टखरमपि तत्रेति मन्यन्ते। तदयुक्तं मन्यन्ते. प्रमाणाभावात्. मार्जालीयस्याग्नेराधारि-

भविष्यतो ऽस्यान्तरेण वचनमुपघातायोगाच्च॥ बाह्यतो निःषेचनवन्तमिति बाह्यत खरस्थण्डिलादर्धं निर्गमनमार्गो यस्य स तथोक्तः। बाह्यतः प्राग्वंशादित्यपरम्॥

उत्तरेणाहवनीयं शृतदध्यासादयति। २३।

इति षष्ठी कण्डिका।

शकलान्काष्ठकीं च समिधम्। १।

अधिश्रितत्वात् प्रकृताभिधानम्। शकलाः षट् पूर्वोक्ताः॥

अथैतं प्रचरणीयं महावीरं शफाभ्यां परिगृह्याप्रच्छिन्नाग्रेण वेदेनोपरिष्टात्संमार्ष्टि देव पुरश्चर सघ्यासं त्वेति। २।

शफाभ्यां परिगृह्येत्यविस्मरणार्थम्॥

प्राणाय स्वाहा व्यानाय स्वाहेति स्रुवेणाहवनीये सप्तैकादश वा प्राणाहुतीर्हुत्वा देवस्त्वा सविता मध्वानक्त्विति स्रुवेणोपर्याहवनीये महावीरमक्त्वा पृथिवीं तपसस्त्रायस्वेत्यपरस्मिन्खरे राजतं रुक्मं निधाय प्रतिष्ठाप्य महावीरमन्यस्मै वा प्रदाय इयामुञ्जप्रलवानादाय दक्षिणेषामग्राणि गार्हपत्ये प्रदीपयत्यर्चिषे त्वेति। तेषामग्रैरुत्तरेषां मूलानि शोचिषे त्वेति। तेषां मूले-

दक्षिणेषां मूलानि ज्योतिषे त्वेति । तेषां मूलैरुत्तरेषा-मग्राणि तपसे त्वेति । ३ ।

प्राणाङ्गतिलं प्राणसंबन्धात् । कल्पान्तरकारैः कैश्चिद्गार्हपत्ये होम-वचनात् तन्निरासार्थमाहवनीयग्रहणम् । अग्नौ सव्येन परिगृह्य दक्षि-णेन हस्तेन संमार्गः स्रुवाकृतयश्च । तथा सव्ये पाणौ समावृत्येत्येव बौधायनः । महावीरप्रतिष्ठापनं रुक्मादन्यत्र . रुक्मे स्थापनस्योत्तरत्र-वचनात् । दक्षिणेषां दक्षिणहस्तस्थानाम् । एवमुत्तरेषामिति ॥

तान्व्यत्यस्तानुपरि रुक्मे निदधात्यर्चिरसि शोचि-रसि ज्योतिरसि तपो ऽसीति । ४ ।

व्यत्यस्तान् कांश्चित्प्रागग्रानितरान्प्रत्यगग्रान् ॥

संसीदस्व महाँ असीति तेषु महावीरं प्रतिष्ठा-प्याञ्जन्ति यं प्रथयन्त इति स्रुवेण महावीरमनक्ति । अभिपूरयति वा । ५ ।

अभिपूरणं तावद्घर्मनिष्पत्त्यर्थत्वात् नित्यम् । तेन यदा मन्त्रेणानक्ति तदाप्यभिपूरयत्येव तूष्णीम् । यदा त्वभिपूरयति मन्त्रेण तदा लुप्यत एवाञ्जनं . अभिपूरणेनैव सिद्धार्थत्वात् । अथैनमाज्येनाभिपूरयतीत्येव कल्पान्तरकाराः ॥

अध्यधि महावीरमसंस्पृशन्यजमानः प्राञ्चं प्रादेशं धारयमाणो जपत्यनाधृष्या पुरस्तादित्येतैर्यथालिङ्गम् । ६ ।

अध्यधि* महावीरं महावीरस्योपरि। प्राञ्च एव सर्वे प्रादेशाः। यथालिङ्गमिति तत्तद्दिग्लिङ्गैर्मन्त्रैः. तत्तच्च दिग्भाग इत्यर्थः॥

मनोरश्वासि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशति ।७।

गतः॥

सिद्ध्यै त्वेति धृष्टी आदत्तो ऽध्वर्युः प्रतिप्रस्थाता च।८।

छान्दसं परस्मैपदम्॥

तपो ष्वग्ने अन्तराँ अमित्रानिति गार्हपत्यादुदीचो ऽङ्गारान्निरूह्य चितः स्थ परिचित इति प्रदक्षिण-मङ्गारैः पर्यूह्य।९।

इति सप्तमी कण्डिका।

वैकङ्कतैः परिधिभिः परिधत्तः।१।

महावीरमिति शेषः। कर्मण्येतानि द्वावपि कुरुतः॥

मा असीति प्राञ्चावध्वर्युर्निदधाति। प्रमा असी-त्युदञ्चौ प्रतिप्रस्थाता।२।

---

* Is missing in the MSS.

प्राञ्चौ दक्षिणत उत्तरतश्च . उदञ्चौ पश्चात्पुरस्ताच्च । तत्र द्वयोर्द्वयोः परिध्योरेकैकस्य मन्त्रस्यावृत्तिः ॥

एवमवशिष्टानां पूर्वेणपूर्वेण मन्त्रेणाध्वर्युः । उत्तरेणोत्तरेण प्रतिप्रस्थाता । ३ ।

निदधातीत्यन्वयः ॥

अध्वर्युरेव दक्षिणतस्त्रयोदशं निदधात्यन्तरिक्षस्यान्तर्धिरसीति । ४ ।

अन्तिमयोराध्वर्यवत्वात्तदनुवृत्तिमेव द्योतयत्येवकारः ॥

दिवं तपसस्त्रायस्वेति सौवर्णेन रुक्मेणापिधायाभिर्गीर्भिरिति तिसृभिरभिमन्त्र्य धविचाण्याद्त्ते । गायत्रमसीति प्रथमम् । त्रैष्टुभमसीति द्वितीयम् । जागतमसीति तृतीयम् । ५ ।

रुक्मं शतमानम् । तेनापिदधाति महावीरस्य बिलम् ॥

तैरेनं त्रिरूर्ध्वमुपवाजयति मधु मध्विति*ति । ६ ।

त्रयो मधुशब्दा एको मन्त्रः । तेन सकृदुक्तेन त्रिरग्निमुपवाजयति ॥

तेषामेकं प्रतिप्रस्थात्रे प्रयच्छति । एकमाग्नीध्राय । ७ ।

गतः ॥

---

* मधु twice only according to all MSS., in spite of the commentator and Taitt. Ār. 4. 5. 7.

आग्नीध्रप्रथमास्त्रिः प्रदक्षिणमूर्ध्वं धून्वन्तः परि-यन्ति । ८ ।

आग्नीध्रस्तावत्प्रथमः । तमन्वितरयोः क्रमानियमः ॥

तमभिमुखाः पर्युपविशन्ति । पुरस्तादध्वर्युः । दक्षि-णतः प्रतिप्रस्थाता । उत्तरत आग्नीध्रः । ९ ।

प्रतिप्रस्थाता त्वत्र दक्षिणत इति विशेषः ॥

अव्यतिषङ्गमूर्ध्वं धून्वन्तः प्रणवैः संराधयन्त इन्धा-नाः समञ्जन्तो वाग्यता आसते । १० ।

अव्यतिषङ्गमिति धवित्राण्यव्यतिषजन्त इत्यर्थः । तथा च ब्राह्मणं . प्राणा वै धवित्राणि . अव्यतिषङ्गं धून्वन्ति प्राणानामव्यतिषङ्गाय कृत्या इति । ऊर्ध्वं धून्वन्तः धवित्रैरग्निम् । प्रणवैः होतृप्रणवसमसमयैः । संराधयन्तः संभावयन्तो ऽभिष्टवम् । इन्धानाः घर्मेन्धनैरग्निम् । समञ्जन्तः महावीरम् ॥

प्रज्वलिते रुक्ममपादत्त इति विज्ञायते । ११ ।

प्रज्वलिते ज्वलितुमारब्धे ऽग्नौ ॥

यत्राभिजानाति याभिर्वर्तिकां ग्रसितामसुञ्चतमिति तदध्वर्युर्महावीरमभिमन्त्रयते दश प्राचीर्दश भासि दक्षिणेत्यनुवाकेन । १२ ।

अभिज्ञानं चिह्नत्वेन ज्ञानम् ॥

यथाभिजानात्यप्स्वतीमश्विना वाचमस्मे इति तदु-पोत्तिष्ठन्नध्वर्युराह रुचितो घर्म इति । १३ ।

गतः ॥

अध्वर्युप्रथमा अनभिधून्वन्तस्त्रिः प्रतिपरियन्ति ।१४।

पूर्ववद्चापि क्रमनियमः ॥

धविचाण्यादायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति । ता-नि प्रतिप्रस्थाताग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां सादयति । १५ ।

गतौ ॥

यथालोकमवस्थाय सर्व ऋत्विजो यजमानश्चा-धीयन्तो महावीरमवेक्षन्ते ऽपश्यं गोपामिति । १६ ।

यथालोकं यथास्थानम् । सर्वे ये घर्मसंयोगिनो भवन्ति । अधीयन्तः अधीयाना एवावेक्षन्ते. न स्मन्तः ॥

अनुवाकशेषं तु परिश्रिते प्रतिप्रस्थाता पत्नीं वाच-यति त्वष्टीमती ते सपेयेति । १७ ।

परिश्रितस्थानं गत्वा पत्नीं वाचयति ॥

इत्यष्टमी कण्डिका ।

इति द्वितीयः पटलः ॥

ततः संप्रेष्यत्यग्नीद्ध्रौहिणी पुरोडाशावासादयेति। १।

गतः॥

अनिष्टुब्धयोः स्रुचोरुपस्तीर्णाभिघारितौ पुरोडाशावासादयति। दक्षिणं परिधिसंधिमन्वेकम्। उत्तरं परिधिसंधिमन्वितरम्। २।

आग्नीध्रो ऽङ्गारापोहनादिविधिना तूष्णीकेन स्रुचोरेवोद्वास्य ताभ्यां सहैवासादयति पश्चात्परिधिसंध्योः। यदा तु गार्हपत्ये ऽधिश्रितौ तदा होत्रादीनामात्मनश्च परिहारः परिहर्तव्यः॥

सावित्रेण रशनामादायादित्यै रास्नासीत्यभिमन्त्र्य पूर्वया द्वारोपनिष्क्रम्य त्रिरुपांशु *घर्मदुघमाह्वयतीड एह्यदित एहि सरस्वत्येहीति। ३।

रशना अभिधानी॥

प्रत्येत्य द्वेग्ध्रे निदाने इत्यादाय दक्षिणया द्वारोपनिष्क्रम्य त्रिरुच्चैरसावेह्यसावेहीति यथानामा भवति। ४।

यथानामा गौर्भवति तेन नाम्नामात्रेहीति त्रिरुच्चैराह्वयति. यथा गङ्ग एहि गङ्ग एहीति। केचित्तु. त्रिभिर्नामभिराह्वयति. मनुष्यनामैरेवैनामाह्वयतीति लिङ्गात्। तदयुक्तं. स्वनाम्नैवाह्वानवचनात्.

* Thus (not घर्मदुघामा०) all MSS., cf. Sutras 5 and 6 in this kaṇḍikâ.

एकस्या गोस्त्विनामत्वानियमाच्च । तथा यदस्या नाम भवति तेना-सावेह्यसावेहीत्येव बौधायनः । कात्यायनस्त्वाह. नाम्ना विरूपैरिति । ब्राह्मणं तु जात्याख्याभिप्रायमाख्यनामाभिप्रायं द्रष्टव्यम् ॥

अदित्या उष्णीषमसीति रशनया घर्मदुघमभि-दधाति । वायुरस्यैड इति वत्सम् । ५ ।

वत्सं शिशाख्यदाम्ना बध्नाति । वत्सायां च ऐडीत्यूह्यो मन्त्रः ॥

पूषा त्वोपावसृजत्वित्युपावसृज्य यस्ते स्तनः शशय इति घर्मदुघमभिमन्त्रयते । ६ ।

उपावसृज्य प्रस्नवनार्थं वत्सं मुक्त्वा ॥

उस्र घर्मं शिंषोस्र घर्मं पाहि घर्माय शिंषेति नि-दाय वत्सं बृहस्पतिस्त्वोपसीदत्वित्युपसीदति । ७ ।

निदाय बद्धा ॥

दानवः स्थ पेरव इति स्तनान्संमृश्याश्विभ्यां पिन्व-स्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वे-न्द्राय पिन्वस्वेन्द्राय पिन्वस्वेति वर्षीयसि दोग्ध्रे दोग्धि । ८ ।

वर्षीयसीति पुनर्वचनं विस्पष्टार्थम् ॥

तूष्णीं प्रतिप्रस्थाता हसीयस्यजाम् । ९ ।

प्रतिप्रस्थाताभिबन्धनादिविधिना 'तूष्णीकेनाजां दोग्धि। यस्तु गवा-जामालभमाने दुग्धमेव तयोर्लभते तस्य दुग्धे दोहनमन्त्राः सांनाय्य इव दर्शिताः ॥

यत्राभिजानात्युत्तिष्ठ ब्रह्मणस्पत इति तदुपोत्तिष्ठन्तावग्नीधे पयसी प्रदाय पूर्वावतिद्रुत्य शफोपयमानाददाते। गायत्रो ऽसीति प्रथमम्। त्रैष्टुभो ऽसीति द्वितीयम्। जागतमसीत्युपयमनं प्रतिप्रस्थाता।१०।

पूर्वत्वमाग्नीध्रात्पयोभ्यां वा। तथा च वक्ष्यति, आग्नीध्रो ऽनुप्रपद्यत इति ॥

यत्राभिजानात्युपद्रव पयसा गोधुगिति तदाग्नीध्रो ऽनुप्रपद्यते।११।

गतः ॥

सद्योर्जो भागेनोप मेहीति पय आह्रियमाणं प्रतीक्षते।१२।

ग्नीध्रः पयो ऽध्वर्युः प्रतीक्षते ॥

इति नवमी कण्डिका।

इन्द्राश्विना मधुनः सारघस्येति महावीरे गोमय आनयति।१।

होमार्थेनैवानयति. पात्रान्तरावचनात्। नहि स्रुक्स्वमाकृतिमानस्य इति वचनात् अन्येन दारुपात्रेणेति केचित्। तदयुक्तं. आनयतिचोदनादहोमत्वात्। न च वषट्कुर्यादित्यादिना मन्त्रगतस्य वषट्कारस्य वषट्कारत्ववचनाद्धोमत्वं शङ्कनीयं. अन्यपरत्वाच्छ्रुतेः. इतरथाग्नौ तप्यमानब्राह्मणस्य सं ते वायुरिति स्रुक्खने ऽपामानयनस्यापि होमत्वप्रसङ्गाच्च। तस्माद्धोमार्थेनैवानयति॥

स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्युद्यन्तमूष्माणमनुमन्त्रयते।२।

उद्यन्तं महावीरादूर्ध्वगन्तम्॥

मधु हविरसीत्यजापयः।३।

अजापयो ऽध्वर्युरेवानयति. न प्रतिप्रस्थातेति. अस्यान्य होतृवद्वचनात्॥

अजापयस आनयनमेके पूर्वं समामनन्ति।४।

गतः॥

सूर्यस्य तपस्तपेत्यूष्माणम्।५।

अनुमन्त्रयत इत्यन्वयः॥

द्यावापृथिवीभ्यां त्वा परिगृह्णामीति शफाभ्यां महावीरं परिगृह्य प्रच्छिन्नाग्रेण वेदेन भस्म प्रमृज्यान्तरिक्षेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छति।६।

पूर्वेणोत्तरं पाणी समाहृत्य महावीरमध्वर्युणा प्रत्तं भस्मनि प्रति-प्रस्थातोपयच्छति ॥

देवानां त्वा पितॄणामनुमतो भर्तुं शकेयमित्या-दायोत्थाय तेजोऽसि तेजोऽनुप्रेहीति हरति ।७।

तमुपयतमुपयमनेनाध्वर्युरादाय हरति ॥

व्रजन्ननवानं पञ्च वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेति ।८।

अनवानं अनुच्छ्वसन् । षष्ठसप्तमयोर्वातनाम्नोश्चतुर्थपञ्चमाभ्यां वि-कल्पः ॥

अपान्य पञ्चोत्तराण्यग्नये त्वा वसुमते स्वाहेति ।९।

उत्तराणि यजूंषीति शेषः । तत्रापि षष्ठं विकल्पार्थम् ॥

एतस्मिन्काले प्रतिप्रस्थाता दक्षिणं रौहिणं प्रति-ष्ठितं जुहोत्यहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषां स्वाहेति ।१०।

प्रतिष्ठितं जुहोति, यथा हुतो न चलेत तथा स्रुचैवानिष्टुभ्यया जुहोति । स्रुचा प्रतिष्ठितं जुहोतीत्येव भारद्वाजः ॥

अपरेणाहवनीयं दक्षिणातिक्रामन्निश्वा आशा दक्षिणसदिति ब्रह्माणमीक्षते । विश्वान्देवानयाडिहेति

होतारम्। स्वाहाकृतस्य घर्मस्येति घर्ममभिमन्त्र्या-श्राव्य प्रत्याश्राविते संप्रेष्यति घर्मस्य यजेति। अ-श्विना घर्मं पातमिति वषट्कृते जुहोति। स्वाहेन्द्रा-वडित्यनुवषट्कृते। ११।

गतः॥

घर्ममपातमश्विनेत्यनुवाकशेषेणोपस्थायोपर्याहव-नीये धार्यमाणं प्रतिप्रस्थाता शृतदध्नाभिपूरयति।१२।

उपस्थायेत्येतद्धारयतिना समानकर्तृकत्वेन द्रष्टव्यं. न पूरयतिना। तेनायमर्थः. उपस्थाय घर्ममुपर्याहवनीये ऽध्वर्युणा धार्यते महावीरः. तमभिपूरयति प्रतिप्रस्थातेति॥

इषे पीपिह्यूर्जे पीपिहीति विक्षरन्तमनुमन्त्रयते।१३।

पूर्णाद्विलाद्विक्षरन्तं महावीरमनुमन्त्रयते. अध्वर्युरित्यर्थः। दृष्टश्च सकर्मकः क्षरतिः मधु क्षरन्ति सिन्धव इत्यादौ॥

इति दशमी कण्डिका।

अथैनं दिशो ऽनु प्रहावयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेति। १।

अथैनं महावीरं दिशो ऽनु अनुदिशं प्रहावयति स्रावयति. महावीरेणैव जुहोतीति यावत्। अन्ये तु व्याचक्षते. स्वयं हुत्वा पश्चादेनं प्रतिप्रस्थातारमपि ह्रावयतीति यावत्। तदयुक्तं. प्रतिप्रस्थातुर्व्यवहितस्याम्नादेशायोगात्. अनेर्दिशां लक्षणस्य मतः पश्चाद्भावप्रकाशनाभावेश्च। न चानुरक्ष न दिशां लक्षण इति वक्तव्यं. ब्राह्मणविरोधात्. सर्वा अनु दिशः पिन्वयतीति। पिन्वयति स्रावयतीत्यर्थः। भारद्वाजस्त्वाध्वर्युमेवाधिकृत्याह. अथैनमुपर्याहवनीये धारयन्कृतदभ्राभिपूरयति. विक्षरन्तमनुमन्त्रयत इषे पीपिहीति. अथैनं दिशो ऽनु प्रहावयतीति। यत्राभिपूरणमप्याध्वर्यवमित्येतावान्विशेषः॥

प्रत्याक्रम्योपयमने शेषमानीयान्तर्वेद्युपयमनं निधाय पूर्वस्मिन्खरे राजतं रुक्मं निधाय तस्मिन्महावीरं प्रतिष्ठापयति धर्मासि सुधर्मामेन्यस्मे ब्रह्माणि धारयेति। क्षत्राणि धारयेति राजन्यस्य। विशं धारयेति वैश्यस्य।२।

परिशेषात् ब्रह्माणि धारयेति ब्राह्मणस्येत्युक्तं भवति॥

नेत्त्वा वातः स्कन्दयादिति।३।

इत्ययं मन्त्र विशेषस्त्रयाणामप्यविशिष्ट इत्यर्थः॥

यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेत्।४।

अदसः स्थाने शत्रोर्नामनिर्देशः ॥

अथ प्रतिप्रस्थाता पूर्ववदुत्तरं रौहिणं जुहोति।५।

पूर्ववत् अहर्ज्योतिरिति प्रतिष्ठितं जुहोति ॥

अथैताञ्छकलानुपयमनेऽञ्जञ्जुहोति पूष्णे शरसे स्वाहेत्येतैः प्रतिमन्त्रम्।६।

एतानेव शकलान्। अञ्जञ्जुहोति एकैकमञ्जन्। यथाग्नौ बिन्दवः स्रोतन्ते तथादधातीत्यर्थः। पित्र्यं प्राचीनावीत्यादधाति ॥

षष्ठं शकलं सर्वेषु लेपेष्वक्तानन्वीक्षमाण उदञ्चं निरस्यति रुद्राय रुद्रहोत्रे स्वाहेति।७।

उदञ्चं बहिःप्राग्वंशं निरस्यति। तथा उत्तरतः शालाया इत्येव कात्यायनबौधायनौ ॥

पुरस्ताद्रौहिणहोमाच्छकलानेके समामनन्ति।८।

रौहिणहोमादुत्तरस्मादिति द्रष्टव्यमानन्तर्यात् ॥

अथाप उपस्पृश्य तूष्णीं काण्टकीं समिधमाधायैतस्मादेव शेषादुपयमनेनाग्निहोत्रं जुहोति भूः स्वाहेति। तूष्णीं वा।९।

अत्र केचित् अप उपस्पृश्येति वचनात् होष्यन्नप उपस्पृश्येत्यादि प्रधानमात्रमेवाग्निहोत्रकर्मणः कार्यं मन्यन्ते। तदयुक्तं. अग्निहोत्रं

जुहोतीति नाना सर्वधर्माणामतिदेशात्. यथामासमग्निहोत्रं जुहोतीत्यादौ। न च अप उपस्पृश्येत्यनेनाग्निहोत्रिकमुपस्पर्शनमनूद्यते। अपि तद्वचत्यरौद्रत्वकल्पनिरसननिमित्तकम्। यद्यप्येतत्परिभाषया सिद्धं तथापि ब्राह्मणे ऽत्रैव प्रतिपदोक्तत्वाद्रौद्रत्वनिरसनद्वयसमावेशादादरार्थं वचनमित्यदोषः॥ तस्माद्विभ्याहरणादि कृत्स्नमेवाग्निहोत्रकर्म क्रियते। तथा अग्निहोत्रस्यावृता कुर्वेत्येव कात्यायनः। बौधायनश्चाह. अग्निहोत्रविधिं चेष्टित्वेति॥ इयांस्तु विशेषः. होत्रमाद्युपसादनान्तं कर्मार्थलोपान्निवर्तते. तच्च काण्डकौवचनाच्च पात्राग्नी. द्रव्याभावाच्चापराग्निहोमाः. असर्वभक्षत्वाच्च निर्लेहनाद्युदग्रहेशान्तं कर्म। यच्चान्यदर्थलुप्तं प्रत्याम्नातं वा ततो ऽन्यत्सर्वं कार्यमिति द्रष्टव्यम्॥

उपयमने शेषं सर्वं समुपहूय भक्षयन्ति।१०।

उपयमनं होत्रे प्रदाय ततः सर्वे घर्मसंयोगिनो भक्षयन्ति॥

असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते। उपहूत इति प्रतिवचनः।११।

व्याख्यातः प्राक्॥

होताध्वर्युर्ब्रह्मा प्रतिप्रस्थाताग्नीध्रो यजमानश्च।१२।

उपह्वयक्रमार्थं वचनं. प्रस्तोतृनिवृत्त्यर्थं च॥

सर्वे प्रत्यक्षम्।१३।

प्रत्यक्षं साक्षादास्येन भक्षयन्ति. न तु घ्राणेन परोऽक्षम्॥

अपि वा यजमान एव प्रत्यक्षम् । अवघ्रेणेतरे । १४ ।

गतः ॥

हुतं हविर्मधु हविरिति भक्षयित्वोपयमनं प्रतिप्रस्थात्रे प्रयच्छति । १५ ।

सर्वैर्भक्षिते ऽध्वर्युः प्रयच्छति ॥

तदुच्छिष्टखरे प्रक्षाल्यान्तर्वेद्युपयमनं निधाय तस्मिन्नुक्थावधाय मदन्तीरानीयापोहिष्ठीयाभिर्मार्जयित्वा निनीयापो ऽत्रैव सर्वं परिघर्म्यं समवधाय । १६ ।

इत्येकादशी कण्डिका ।

---

घर्माय संसाद्यमानायानुब्रूहीति संप्रेष्यति । संसाद्यमानायानुब्रूहीति वा । १ ।

मार्जनं हस्तावनेजनं. तच्च सर्वेषां भक्षिणामिष्यते पुरुषसंस्कारत्वात् । तथा मार्जयन्त इत्येव बोधायनः । अत्रैव अन्तर्वेद्येव निनीयापः । समवधाय सहावधाय कचित् । अत्र घर्मप्रायश्चित्तान्याह बोधायनः. यथा तत्र मदन्तीरपो निनीयाज्यस्थाल्याः स्रुवेणोपघातं घर्मप्रायश्चित्तानि जुहोति प्राणाय स्वाहा पूष्णे स्वाहेत्येताभ्यामनुवाकाभ्यामिति ॥

आ यस्मिन्सप्त वासवा इत्यभिप्रायाग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां सादयति स्वाहा त्वा सूर्यस्य

रश्मिभ्य इति प्रातः। 'स्वाहा त्वा नक्षत्रेभ्य इति सायम्। २।

गतः॥

यद्यभिजानात्यद्वि तृणमद्येव विश्वदानीमिति तस्या-मवसृज्य मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कुर्व-न्ति। ३।

तत् तस्य। गामवसृज्य घर्मदुघं बन्धनान्मुक्त्वा। शान्तिकरणं प्रागेव व्याख्यातम्॥

एवं सायंप्रातः प्रवर्ग्योपसद्भ्यां चरन्ति। ४।

एवं प्रवर्ग्येण प्रचरिष्यन्त इत्यादिना विधिना चरन्ति। उपसद्ग्रहण-मप्यवधानार्थं द्वयोः॥

त्र्युपसत्के षट्कृत्वः। षडुपसत्के द्वादशकृत्वः। द्वाद-शोपसत्के चतुर्विंशतिःकृत्वः*। ५।

त्र्युपसत्के साह्ने क्रतौ षट्कृत्वः। तस्मिन्नेव साग्निके द्वादशकृत्वः। द्वादशोपसत्के अहीने चतुर्विंशतिःकृत्वः। कृः छान्दसः। सायंप्रात-रित्येव सिद्धे त्रिः प्रवृणक्तीत्यादिना ब्राह्मणव्याचिख्यासया गुरु सूत्रकरणं प्रयोजनं च। प्रकृतावेव तुल्यविकल्पं मा विज्ञापिषतेति॥

एतावन्नाना। ६।

द्वितीयादिष्विति शेषः॥

* sic.

उत्तरेण मन्त्रेण सायं रौहिणं जुहोति॥ अपीपरो माह्नो रात्रियै मा पाहि। एषा ते ऽग्ने समित्तया समिध्यस्व। आयुर्मे दा वर्चसा माञ्जीरिति सायं समिधमादधाति। अपीपरो मा रात्रिया अह्नो मा पाहीति प्रातः।७।

सायं आपराह्णिकेषु. प्रातः पौर्वाह्णिकेषु। केचित्तूत्तमप्रवर्ग्येषु तूष्णीं काष्ठकीमिच्छन्ति। तदयुक्तं. अविशेषेण मन्त्रवचनात्। बौधायनश्चाह. प्रातर्मन्त्रेणात ऊर्ध्वं पौर्वाह्णिके. सायंमन्त्रेणापराह्णिक इति॥

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोति। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः।८।

सायंप्रातरिति पूर्ववत्। नात्र भूः स्वाहेति तूष्णीं वेति विकल्पः। उत्तमे प्रवर्ग्ये पूर्ववत्॥

संसृष्टहोमं वा।९।

व्याख्यातो ऽग्निहोत्रे॥

अग्निष्टोमे प्रवृणक्ति।१०।

अन्यनारभ्याधीतत्वात्प्रवर्ग्यस्य सिद्धैव प्रकृत्यर्थता। तत्किमर्थं वचनम्। सत्यम्। प्रथमयज्ञे ऽप्यग्निष्टोमे मा निवर्तिष्टेत्यारम्भः। अथवा शाखान्तरदर्शनेन प्रथमयज्ञे विकल्पः प्रत्याचितो भवति॥

नोक्थ्ये प्रवृञ्ज्यात्।११।

अग्निष्टोमगुणविकारत्वादुक्थ्यसंस्थायामपि प्रातः प्रतिषिध्यते ॥

विश्वजिति सर्वपृष्ठे प्रवृणक्ति।१२।

उक्थ्यसंस्थायां प्रतिषेधादेव सर्वस्मादुक्थ्यविकारात्प्रच्युतः सर्वपृष्ठे प्रतिप्रसूयते। अत एव प्रतिप्रसवादवगच्छामः. अस्ति सर्वपृष्ठो ऽपि विश्वजिदुक्थ्य इति ॥

तेन प्रवृज्य संवत्सरं न मांसमश्नीयात्। न रामामुपेयात्। न मृन्मयेन पिबेत्। नास्य राम उच्छिष्टं पिबेत्। तेज एव तत्संश्यतीति विज्ञायते।१३।

तेन प्रवर्ग्येण। रामा. रमणायैव गृहीता शूद्रा। तथा वसिष्ठः. नाग्निं चित्वा रामामुपेयात्. कृष्णवर्णा रामा. रमणायैव न धर्मायेति। रामः शुश्रूषुः शूद्रः. रामैव वा राम उक्तो लिङ्गव्यत्ययेन। स नास्य यजमानस्योच्छिष्टमश्नीयात्। संश्यति निशितं करोति व्रतचर्यया ॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

---

प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति। पष्ठौहीं ब्रह्मणे। धेनुं होत्रे। रुक्मावध्वर्यवे।१।

प्रवर्ग्यसाधनसमुदाये प्रवर्ग्यशब्दः। पष्ठौही गौर्गर्भिणी. सा त्वचर्मसंयुक्ता दीयते ॥

अपरं खरं पूर्वस्मिन्खरे ऽध्योच्छिष्टखरं संकृष्योत्तरेणाहवनीयं सम्राडासन्दीं प्रतिष्ठाप्य तस्यां सर्वं परिघर्म्यं समवधायौदुम्बर्यां स्रुचि चतुर्गृहीतं गृहीत्वा घर्म या ते दिवि शुगित्येतैर्यथालिङ्गं जुहोति। २।

संकृष्य यथा ग्रहणयोग्यं भवति तथा काष्ठादिनोल्लिख्य। स्रुचि उपयमन्यां प्रोक्षणीधान्यां वा। यथालिङ्गमिति. घर्म या ते दिवि शुगित्युच्चैर्गृहीतया स्रुचा. अन्तरिक्षे शुगिति नीचैः, पृथिव्यां शुगिति नीचैस्तरामित्यर्थः। तिस्रस्त्वाहुतीस्तेनैव चतुर्गृहीतेन जुहोत्यासीनः॥

अपि वा प्रतिप्रस्थाता चीन्संनखाञ्छलाकामुष्टीनादाय तेषामेकमाहवनीये प्रदीप्यास्यदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या ते दिवि शुगिति। तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृत्य नाभिदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या ते ऽन्तरिक्षे शुगिति। तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृत्य जानुदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या ते पृथिव्यां शुगिति। ३।

संनखान् संनताङ्गुल्यङ्गुष्ठनखान्। शलाकादर्शनाच्चिष्ठन्जुहोति. आसीनस्याशक्यत्वात्। तस्मिन् शलाकामुष्टौ॥

आहवनीय एवैनमनुप्रहरति। ४।

एनं शलाकामुष्टिम् ॥

अनु नो ऽद्यानुमतिरिति परिश्रिते प्रतिप्रस्थाता पत्नीमुदानयति । ५ ।

परिश्रित इति. यथैषा प्रवर्ग्यं न पश्यति तथा तिरोधीयत इत्यर्थः । तथा च बौधायनः. अथैनां पत्नीमुदग्दशेन वाससान्तर्दधातीति ॥

अन्विदनुमत इत्युपनिष्क्रामन्ति । ६ ।

सम्राडासन्दीमादाय सर्वे मन्त्रेण निष्क्रामन्ति प्राग्वंशात् ॥

अनुहरन्ति मेथीमभ्रिं मयूखान्विशाखदामानि खराविति । ७ ।

संयुक्तौ खरौ पात्रेण गृहीत्वा मेथ्यादींश्च परिकर्मिणो ऽनुहरन्ति ॥

दक्षिणत उच्छिष्टखरं परिहरति । ८ ।

उच्छिष्टखरमपि कश्चित्पात्रे गृहीत्वा दक्षिणतो विहाराद्गत्वा मार्जालीयसमीपं नयति ॥

सम्राडासन्द्या द्वावन्तर्वेदि पादौ द्वौ बहिर्वेदि प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतः साम गायेति । ९ ।

गतः ॥

सर्वे सहपत्नीकास्त्रिः साम्नो निधनमुपयन्ति। अथाध्वे

द्वितीयम्। प्राग्यापरेणोत्तरवेदिं तृतीयम्। सर्वत्र संप्रेष्यति। १०।

उत्तरवेदिग्रहणं प्रदर्शनार्थं वक्ष्यमाणानामण्वासनदेशानाम्। व्याख्यातः शेषो ऽवभृथे ॥

इति त्रयोदशी कण्डिका।

---

दिवस्त्वा परस्याया इति प्रथमे ऽभिप्रव्रजन्ति। ब्रह्मणस्त्वा परस्याया इति द्वितीये। प्राणस्य त्वा परस्याया इति तृतीये। १।

प्रथमे साम्नि गीत इति शेषः. अध्वनीति वा। एवं द्वितीये तृतीय इति। तत्रोत्तरवेदेरपरदेशादुत्तरदेशगमने तृतीयो गमनमन्त्रः॥

उत्तरेणोत्तरवेदिं सम्राडासन्दीं प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतर्वार्षाहरं साम गायेष्टाहोत्रीयं साम गायेति। इष्टाहोत्रीयस्य साम्नो निधनमुपयन्ति। न वार्षाहरस्य। २।

गतः॥

यद्युपरिष्टात्परिषिञ्चेत्तत्र वार्षाहरं चोदयेत्। ३।

वक्ष्यति. उपरिष्टादेके परिषेचनं समामनन्तीति। तत्र चेत्परिषिञ्चेत्तदा तत्रैव वार्षाहरं प्रेष्यति। इष्टाहोत्रीयमेव त्वत्रेत्यर्थः॥

उदकुम्भमादायाध्वर्युर्वेत्सुरसि शंयुधाया इति त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन्पर्येति। निधाय कुम्भं शं च वक्षि परि च वक्षीति त्रिरपरिषिञ्चन्प्रतिपर्येति। ४।

पित्र्यायां व्याख्यातः॥

चतुःस्रक्तिर्नाभिर्ऋतस्येत्युत्तरवेदिमभिमृश्य सदो विश्वायुरित्युत्तरेणोत्तरनाभिं खरौ न्युप्यानुव्यूहति। ५।

अभिमर्शनमन्त्रं तूत्तरवेद्यामुद्दामन एवेच्छन्ति. न देशान्तरेषु. चतुःस्रक्तिरिति लिङ्गात्॥

अप द्वेषो अप ह्वर इति मार्जालीयदेश उच्छिष्टखरम्। ६।

मार्जालीयदेशे यत्र मार्जालीयो निवप्यते। तत्र गत्वाध्वर्युर्न्युप्यानुव्यूहति॥

उत्तरेणोत्तरनाभिं खरे हिरण्यं निधाय तस्मिन् प्रचरणीयं महावीरमुपावहरति। ७।

अत्रापि शफाभ्यां परिग्रहो महावीरस्य न प्रस्मर्तव्यः॥

अत्रैवेतरौ पूर्वापरौ दक्षिणोत्तरौ वा। ८।

प्रचरणीयस्यायतः पूर्वापरौ दक्षिणोत्तरौ वा। तथा अपि प्रचरणीयमित्येव बौधायनः॥

अत्रैव सर्वं परिघर्म्यं सर्वतः परिमण्डलमादित्यस्य रूपं करोति। ९।

असौ खलु वा आदित्यः प्रवर्ग्य इति स्थितेः आदित्यरूपसादृश्यं परिमण्डलेन करोति ॥

महीनां पयो ऽसीति महावीरे गोपय आनयति। ज्योतिर्भा असि वनस्पतीनामोषधीनां रस इति मधु। वाजिनं त्वा वाजिनो ऽवनयाम इति दधि। १०।

तथा पूर्यते प्रचरणीयः. तथाग्निन्पयआदीनि त्रीण्यानयति. तथोत्तरसूत्रे व्यक्तत्वात् ॥

एवं द्वितीयं तृतीयं च पूरयति। ११।

गतः ॥

अपि वाज्यमेव प्रथम आनयेत्। मधु द्वितीये। दधि तृतीये। १२।

अपि वा प्रथमं पूरयन्नाज्यमेवानयति पयोमन्त्रेण। एवमितरयोर्मधुदधीति ॥

घर्मैतत्ते ऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेण पात्राणि पूरयति यान्यासेचनवन्ति। अभ्युक्षतीतराणि। अरिक्तताया इति विज्ञायते। १३।

अबिलवन्त्यभ्युक्षति। एवं सर्वमरिक्तं भवति ॥

इति चतुर्दशी कण्डिका।

अथ यदि पुरुषाकृतिं करिष्यन्स्यात्समानमा प्रथमस्योपावहरणात्। अथैवेतरावुपावहृत्य शिरसो रूपं करोति। अप्रच्छिन्नाग्रं वेदमुपरिष्टान्निदधाति शिखाया रूपम्। अभितो दोग्ध्रे कर्णयो रूपम्। अभितो हिरण्यशकलावाज्यस्रुवौ वाक्ष्यो रूपम्। अभितः स्रुवौ नासिकयो रूपम्। प्रोक्षणीधानीं मुखस्य रूपम्। आज्यस्थालीं ग्रीवाणां रूपम्। अभितो धृष्टी जत्रूणां रूपम्। अभितः शफावंसयो रूपम्। अभितो रौहिणहवन्यौ बाह्वो रूपम्। प्राचीं मेथीं पृष्टीनां रूपम्। अभितो धविचे पार्श्वयो रूपम्। मध्ये तृतीयमुरसो रूपम्। मध्य उपयमनमुदरस्य रूपम्। तस्मिन् सर्वं रज्जुमयं समवदधात्यान्त्राणां रूपम्। उदीचीमभ्रिं श्रोण्यो रूपम्। अभितः शङ्कू सक्थ्यो रूपम्। मध्ये तृतीयं मेढ्रस्य रूपम्। अभितो रौहिणकपाले पार्ण्योः रूपम्। रौहिणपिष्टं प्रेषेणापध्वंसयति मज्जारूपम्*। वेदं विस्रस्यानुविकिरति स्नावां रूपम्। अवकाभिर्धूपतृणैरिति प्रच्छादयति मांसस्य रूपम्। दध्ना मधुमिश्रेणावोक्षति लोहितस्य रूपम्। कृष्णाजिनेनोत्त-

---

* B C मज्ज्ञानां रूपम्.

रश्लोम्ना प्रच्छादयति त्वचो लोम्नां रूपम्। सम्राडासन्दीं विस्तस्योपरिष्टान्निदधाति साम्राज्यस्य रूपम्॥१॥

पुरुषाकृतिचिकीर्षायामा प्रचरणीयोपावहरणात्कालेतरावुपावहरं- स्त्रिभिः शिरसो रूपं करोति। शिखाया रूपमिच्छन्ति. एतच्छि- खाया रूपं भवति. तथा द्वितीयान्तानां दोग्भ्रादीनां निदधाती- त्यन्वयः। तथा अभित इति दक्षिणतश्चोत्तरतश्चेत्यर्थः। आज्य- स्रुवौ आज्यबिन्दू। जत्रूणां कण्ठा धमनीनाम्। पृष्टीनां पृष्ठस्था- नाम्। अपध्वंसयति अभिप्रकिरति। अवकाभिः शैवालैः। धूप- तृणैः मुञ्जप्रलवैः। साम्राज्यस्य रूपमिति. साम्राज्ये हि सम्रा- डासन्दी भवतीति भावः. सम्राट्शब्दसंबन्धाद्वा॥ अत्र प्राक्शिर- स्त्वात्पुरुषस्य महावीरेभ्यः पश्चादाज्यस्थाली। ततः पश्चाच्छ्रपौ। ततः पश्चात्प्रतीच्यौ रौहिणहवन्यौ। तयोर्मध्ये मेथी धवित्राणि च। तेभ्यः पश्चादुपयमनम्। ततः पश्चादभ्रिरित्यादि द्रष्टव्यम्॥

इति पञ्चदशी कण्डिका।

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य। उत्तरवेद्यामन्नाद्यकामस्य॥१॥

अथ नित्याः काम्याश्चोद्वासनदेशा उच्यन्ते। तत्रोत्तरवेद्या एव नित्याया एव कामा इति व्याख्यति॥

पुरो वा पश्चाद्वोद्वासयेत्। अपां मध्य उद्वासयेत्। नदिद्वीप उद्वासयेत्॥२॥

पुरोदेशे देवयजनस्य पश्चाद्देशे वा। अपां मध्ये कश्चिन्नद्याः पुलिने वा। नदिद्वीप इति ह्रस्वश्छान्दसः प्रामादिको वा। एते विकल्पाश्चत्वारो नित्याः कामाननुबन्धात्। अत उत्तरवेद्या विकल्पन्ते॥

यदि नदिद्वीप उद्वासयेन्न परिषिञ्चेत्।३।

द्वीपग्रहणादपां मध्ये ऽपि परिषिञ्चत्येव॥

यं द्विष्याद्यत्र स स्यात्तस्यां दिश्यौदुम्बर्यां शाखायामुद्वासयेत्। ऊर्ग्वा उदुम्बरो ऽन्नं प्राणः शुग्घर्मः। इदमहममुष्यामुष्यायणस्य शुचा प्राणमपिदहामीति शुचैवास्य प्राणमपिदहति। ताजगार्तिमार्छतीति विज्ञायते।४।

अभिचारकामो यस्यां दिशि द्वेष्यः स्थितस्तस्यामौदुम्बरीं शाखां निधाय तस्यां सर्वं परिघर्म्यं इदमहमित्येवमादिना निदध्यात्। एवं कुर्वन्यथामन्त्रवर्णं शुचैवास्य प्राणं दहति। कथमिति चेत्। अन्नं वा उदुम्बरः. प्राणश्चान्नादनार्थान्तरं. घर्मः पुनः शुक् शोकहेतुः. अतः सिद्धो घर्मात्मकेन शोकेनौदुम्बरात्मकप्राणदाहः॥ ताजक् सद्यः॥

यत्र दर्भा उपदीकसंतताः स्युस्तदुद्वासयेद्वृष्टिकामस्य।५।

यत्रोपदीकाभिः वल्मीभिः सञ्चितशेषा दर्भाः शीर्णाग्रा भवन्ति तत्रेत्यर्थः॥

उत्तरवेद्यां नित्यं कल्पं ब्रुवते।६।

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्येत्याद्युक्तान्ते तस्मादुत्तरवेद्यामेवोद्वासयेदित्यवधारणादिति भावः। एवं च तस्यां कामश्रुतिर्दधिग्रहवद्वाख्येयेत्युक्तं भवति ॥

**नैनमुद्वासितं वयांसि पर्यासीरन्नाग्नेः प्रणयनात् ।७।**

परितः पक्षिणामासनं परिहरेदित्यर्थः ॥

**अत्रैके परिषेचनं समामनन्ति । ८।**

गतः ॥

**अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्व इति ।९।**

एनं प्रवर्ग्यं सर्वे ऽप्युपतिष्ठन्ते ॥

**एतत्त्वं देव घर्म देवो देवानुपागा इत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्य सुमित्रा न आप ओषधय इति मार्जालीयदेश उच्छिष्टखरे मार्जयित्वोद्वयं तमसस्परीत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति। उपतिष्ठन्त इत्येके। इममू षु त्यमस्मभ्यमित्याहवनीये जुहोति। उपतिष्ठन्त इत्येके । १०।**

एते ऽपि समानविधयः सर्वेषाम्। यदा तु गार्हपत्याहवनीययोर्होमस्तदाध्वर्युरेव जुहोत्येकवचनात् ॥

इति षोडशी कण्डिका।

इति चतुर्थः पटलः ॥

यदि घर्मः स्कन्देदस्कान्द्यौः पृथिवीमिति द्वाभ्या-मेनमभिमन्त्रयेत ।१।

अथ घर्मप्रायश्चित्तान्युच्यन्ते। यद्यभिपूरणप्रभृत्याग्निहोत्रहोमात् घर्मः स्कन्देत्तदा अस्कानित्यभिमन्त्रयेत. भूपतये स्वाहेत्यादिना च. सर्वहविषामनवयवेनेति वचनात्॥ तत्र प्राग्घर्मेज्यायाः सर्वस्कन्दनशोषणादौ पुनः प्रवृञ्ज्यात्. तूष्णीं वावृत्तिः. यावदन्ते वाप्यापद्येतेति न्यायात्। परतस्त्विज्यायास्तेनैव कथंचिद्वृध्यादिवर्धितेन समाप्नुयात्। दधिपयसोस्तु स्कन्दने भूपतय इत्यनुमन्त्रणमेव सर्वत्र॥

यदि घर्मेण चरत्सु विद्युदापतेद्या पुरस्ताद्विद्युदापतदित्येतैर्यथालिङ्गं जुहुयात् ।२।

यथालिङ्गमिति. यस्यां दिशि विद्योतते तल्लिङ्गेन मन्त्रेणेत्यर्थः। असकृद्विद्योतने ऽपि सकृदेवाऽऽवृत्तिरेकस्यां चर्यायाम्॥

यदि सर्वतः सर्वा जुहुयात् ।३।

यौगपद्यार्थं वचनम्॥

प्राणाय स्वाहा पूष्णे स्वाहेत्येतावनुवाकौ घर्मप्रायश्चित्तानि ।४।

घर्मसंयोगी यो विध्यपराधस्तस्य सर्वस्येमानि सामान्यप्रायश्चित्तानि॥

घर्मेष्टकामुपदधात्युदस्य शुष्काङ्गानुनीतत्यनुवाकेन। कुलायिनीं घृतवतीमिति अग्न आर्द्रा योनयः इत्यनुवाकेन।

ऐडिक्या चित्याध्वर्युरग्निमभिमृशत्यग्निरसि वैश्वानरो ऽसीत्यनुवाकेन । ५ ।

उत्तरे त्रयो ऽनुवाका अग्नौ विनियुक्ताः नात्रान्वीयन्ते ॥

भूर्भुवः सुवरिति सर्वप्रायश्चित्तानि । ६ ।

संभरणादेवारभ्य सार्वत्रिकान्येतानि प्रायश्चित्तानि. समुच्चीयन्ते च तेनतेन प्रायश्चित्तेन ॥

यदि महावीरः पर्येतोर्ध्व ऊ षु ण ऊतय इति द्वाभ्यामेनमुच्छ्रयीत । ७ ।

यदि सम्राडासन्द्याः खराच्छफाभ्यां वा महावीरः पतेद्द्वाभ्यामेनमुच्छ्रयीत उत्थापयेत् ॥

यदि भिद्येत विधुं दद्राणमिति संदध्यात् । ततो यानि दृढार्थे संश्लेषणानि स्युस्तैरेनमभिदिह्याद्यदन्यन्मांसान्माषेभ्यश्च यद्वते चिदभिश्रिष इति । ८ ।

माषमांसव्यतिरिक्तानि यानि तैरेनं लिम्पेत् पचेच्च यावदर्थम् । तथा च बौधायनः. अश्मचूर्णानि छागापयसि प्रकीर्य तैः प्रयुज्य. उत्तमुकैरसंधानयोग्यस्य. पुनःक्रियामुक्त्वा पक्वमाच्छृद्य निदधाति. अथान्यमप्रवर्ग्यीयं महावीरं प्रवृणक्तीति । अन्यमिति यो ऽन्यः पूर्वनिहितस्तमित्यर्थः ॥

यदि घर्ममतिपरीयुर्न वा प्रतिपरीयुः पुनरूर्जा सह रय्येत्येताभ्यामेनं प्रतिपरीयुः । ९ ।

यदि परीत्य चतुर्थमपि परीयुर्न वा त्रिः प्रतिपरीयुः तत्रोभय-त्रापि एतदेताभ्यां प्रतिपरीयुः ॥

मा नो घर्म व्यथित इत्यष्टौ घर्मे व्यथिते प्रायश्चित्तानि। १०।

व्यथनं च्यवनवमनादिशब्दा बुद्बुदोत्स्रुतिः। तत्राष्टावाज्याहुतयः प्रायश्चित्तानि ॥

अपि वा घर्ममेव व्यथितमेतासां चतसृभिरभिमन्त्रयेत। ११।

घर्ममेवाभिमन्त्रयेत. न त्वग्नौ जुहुयादित्यर्थः ॥

यदि घर्मेण चरत्वादित्यो ऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योद्वयं तमसस्परीत्युपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वा प्रवृज्य श्वो भूते वयः सुपर्णा इत्यादित्यमुपतिष्ठन्ते। १२।

उद्वयमिति हिरण्यमुपतिष्ठते ऽध्वर्युः। श्वो भूते सर्वे ऽप्युपतिष्ठन्ते आदित्यम् ॥

इति सप्तदशी कण्डिका।

यदि घर्मधुग्दोहकाले नागच्छेदन्यां दुग्ध्वा प्रवृज्य तां सुत्यायां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्स्यात्। १।

ब्राह्मणायर्त्विजे वा कस्मैचिद्दद्यात् यं प्रति स्वयमर्थितया न गमिष्यति ॥

यदि घर्मधुगि* पयो न स्याद्दृतेश्चतुर्थं पादं स्तनं कृत्वा पिन्वयेत् । २ ।

दृतिं चतुष्पदां कृत्वा पयसाभिपूर्य पादेष्वन्यतमं स्तनं कल्पयित्वा तेन पिन्वयेत् पयः स्रावयेद्दोहमन्त्रैः ॥

यदि दधि दुहीत बार्हस्पत्यं शंसेत् । ३ ।

यदि दुह्यमाना घर्मधुक् स्वयमेव दधि क्षरेत्तदाभिष्टवस्य प्रागुक्तमाया येन केनचिद्बार्हस्पत्येन सूक्तेन शंसेत्. होताभिष्टुयादित्यर्थः ॥

यदि पय आश्विनं सोदर्कम् । ४ ।

पयस उदर्को दधि. तत्सहितं चेत्पयो दुहीत तदाश्विनेनाभिष्टुयात् ॥

यद्यु वै लोहितं दुहीत रौद्रयर्चा जुहुयात् । ५ ।

रौद्र्या यया कयाचित्. इमा रुद्रायेत्यादिकया ॥

यदि नश्येद्धातुर्ऋग्भ्यां जुहुयात् । ६ ।

अदर्शनं नाशः। धाता ददातु नो रयिमित्यादौ धातुर्ऋचौ ॥

यद्यस्यै वत्सो वायोर्नियुत्वत ऋचा जुहुयात् । ७ ।

---

* sic, only BC have घर्मदुघि.

आ वायो भव शुचिपा इत्यादिः विपुलता पूर्वक्। पर्णेन च अन्यां दुग्ध्वेत्यादि समानं द्रष्टव्यं अन्यत्र हुतेः ॥

यद्यमेध्यमयज्ञियं वाभिनिषीदेदाग्नेय्यर्चा जुहुयात्। आग्निवारुण्येत्येके। ८।

अमेध्यं अशुद्धद्रव्यं, तदभिनिषण्णायां गवि होमः। शुद्धमपि यज्ञानर्हद्रव्यमात्रमभिनिषण्णायां वा। अग्ने नयेत्यादिराग्नेयी। त्वं नो अग्न इत्यादिराग्निवारुणी। तया हुत्वा तामेव प्रचाल्य दुह्यात् ॥

यद्येनां वयो ऽभिविक्षिपेदाश्विन्यर्चा जुहुयात्। ९।

अभिविक्षेपः पक्षवातादिः। या वां कशेत्यादिराश्विनी। तया हुत्वा तामेव दुह्यात् ॥

यद्युद्वा पतेत्सं वा विजेत शार्दूलो वा हन्यादर्क-क्षीरमजाक्षीर आश्चोत्य तेन प्रचरेत्। १०।

उत्पतेत् उत्प्लुत्य गच्छेत्। संविजेत तथोद्विग्ना दुर्दोहा स्यात्। शार्दूलः प्रदर्शनार्थो हिंस्राणाम्। अर्कक्षीरं दोहमर्केर्दोहमपि आसिच्य प्रचरेत्। अत्राह बौधायनः, यदि घर्मदुघं न विन्देतान्यां दोह-येत्, यद्यन्यां न विन्देताजां दोहयेत्, यद्यजां न विन्देतार्कक्षीरैः प्रचरेत्, यद्यर्कं न विन्देत यवपिष्टानि व्रीहिपिष्टानि श्यामाक-पिष्टानि वाद्भिः संसृज्य तैः प्रचरेदिति ॥

सुत्यायां प्रवृञ्जनमेके समामनन्ति। ११।

गतः ॥

तत्र मीमांसा। १२।

तत्रैवं कृता वेदितव्येत्यर्थः। सा च कालतो देशतः संख्यातः प्रकारतश्चेति चतुष्टयी भविष्यति। तत्र कालस्य तावन्निर्णयमाह॥

यदा पुरस्तादरुणा स्यादथ प्रवृञ्ज्यः। उपकाश उपव्युषं समयाविषित उदितानुदित उदिते वा। प्रातः संगवे माध्यंदिने वा पवमाने स्तुते। १३।

पुरस्तादरुणा स्यात् प्राची दिगरुणकिरणाविला स्यात्। उपकाशे समन्ततः प्रकाशे जाते। उपव्युषं उषःसमीपे। समयाविषिते ईषदाविर्मण्डले। सूर्ये उदितानुदिते अर्धोदिते। उदिते सर्वोदिते। प्रातः नवधाकृतस्याह्नः प्रथमे भागे। संगवे तृतीये* भागे॥ प्रवृञ्ज्य इति सर्वत्रान्वयः। प्रवर्ग्य इति शेषः॥ अथ देशनिर्णयमाह॥

आग्नीध्रागारे प्रवृञ्ज्यः। १४।

तत्राग्नीध्रीयो गार्हपत्यस्थानीयो भवति। औत्तरवेदिके होमः॥ अथ संख्यानिर्णयमाह॥

सकृदेव प्रवृञ्ज्य इति विज्ञायते। १५।

स च पौर्वाह्णिकः मुख्यत्वात्॥ अथ प्रकारनिर्णयमाह॥

तान्येतान्यौपसदैः प्रवृञ्जनैर्विकल्पेरन्। १६।

तान्येतानीति जात्याख्यायां बहुवचनं. व्यक्तिबहुत्वापेक्षया वा।

---

* h द्वितीये.

तदेतच्छौत्यं प्रवृञ्जनमौपसदैर्विकल्प्यते. न तु समुच्चीयते। अतस्तच प्रवृञ्जनमच वा. न तूभयचेत्यर्थः। एवं प्रवृज्य तदानीमेवोद्वास्य कृताकृतात्प्रक्रामेत् ॥

दधिघर्मं भक्षयन्ति भूर्भुवः सुवरित्यनुवाकेन ।१७।

उक्तं च. दधिघर्मे तस्यारण्येऽनुवाक्यो भक्षमन्त्र इति ॥

इत्यष्टादशी कण्डिका।

---

व्याख्याता घोरास्तन्वो ऽरण्येऽनुवाक्यो गण उत्तरौ चानुवाकौ ।१।

अथोत्तरे षडनुवाका व्याख्याताः उक्तविनियोगाः। तचाद्यौ ताव-दनुवाकौ घोरतन्वौ नाम आधाने व्याख्यातौ. यथा अरण्येऽनुवाक्या भवन्तीति। मध्यमौ त्वरण्येऽनुवाक्यगणानामाग्निकराजसूयिकेषु मारुतेषु. यथा मध्ये ऽरण्येऽनुवाक्यगणेन. तस्यारण्येऽनुवाक्यं तृतीयैर्गणैरिति। सर्वेषामरण्येऽनुवाक्यत्वाविशेषे ऽपि तेन गणविशे-षणविशिष्टप्रसिद्ध्यनुसारादिति द्रष्टव्यम्। अथ पञ्चमो ऽग्न्याधेय व्याख्यातः. यथा तस्यारण्येऽनुवाक्येनाग्निष्ठरथवाहनमिति। षष्ठस्तु चातुर्होत्रविधौ. यथा यद्वाचः क्रूरं तेन वषट्करोतीति ॥

यदि घर्मेण चरत्स्वेकस्तक उत्तिष्ठेद्धि गा इन्द्र विच-रन्स्याग्नयस्वेत्येतमभिमन्त्र्योभयत आदीप्योल्मुकमस्मै प्रत्यस्येदग्ने अग्निना संवदस्वेति ।२।

एकसृकः एकचरः सृगालः। अस्मै एनमुद्दिश्य ॥

अथैनमुपतिष्ठन्ते सहस्ते अग्ने नम इत्यनुवाक-शेषेण। ३।

एनं एकसृकं, न तूलूक, पुंलिङ्गात्। न चाग्निलिङ्गविरोधः, अग्ने अग्निना संवदस्वेति लिङ्गात् ॥

अथ यदि गृध्रः सलावृकी भयेडको दीर्घमुख्युलूको भूतोपसृष्टः शकुनिर्वा वदेदसृङ्मुखः। यदेतत्। यदी-षितः। दीर्घमुखि। इत्यादुलूकः। यदेतद्भूतान्यन्वा-विश्य। प्रसार्य सक्थ्यावित्येतैर्यथालिङ्गमभिमन्त्यो-लूकप्रत्यसनादि समानम्। ४।

गृध्रः क्रव्यात्पक्षिविशेषः। सलावृकी शिवा। एडकी मेषः, भय-हेतुरेडकः भयेडकः, यो हृष्टरोमा प्रहारशीलो भवति। दीर्घ-मुखी टिट्टिभः। उलूकः दिवाभीतः। भूतोपसृष्टः पिशाचाद्या-विष्टः पुरुषः। शकुनिः कृष्णशकुनिः, पश्चिमाचमित्येके, तेषां गृध्रादिग्रहणमनर्थकं स्यात्। वदेत् शब्दं कुर्यात् ॥

यदि घर्मधुक्क्रिमिणा स्यादत्रिणा त्वा क्रिमे हन्मी-त्यनुवाकेनास्याः क्रिमीन्हन्यात्। ५।

क्रिमिणा क्रिमिभिरन्तरैर्बाह्यैर्वोपपन्ना, यैस्तुन्ना यद्वो बभूवेति। क्रिमीन्हन्यादिति बाह्यास्तावदपनुन्ना अन्तरास्त्वनुवाकेन तन्निर्णेना-नुमन्त्रिता एव हता भविष्यन्तीति भावः ॥

अपि वा सार्वत्रिकमेतत्प्रायश्चित्तं क्रियेत ।६।

न केवलं घर्मदुघः*. सर्वत्रैव अतधुगग्निहोत्रादेर्गोमात्रस्य क्रियेतेत्यर्थः ।. अजादेरपि प्राणिमात्रस्येत्यन्ये । सुगरणादेरपि द्रव्यमात्रस्येत्यपरे । न त्वकर्मसंयोगिनः क्रियते. प्रायश्चित्तमिति वचनात् ॥

यमभिचरेत्तस्य लोहितमवदानं कृत्वाहरावद्य मृतस्येत्यनुवाकेन जुहुयात् ।७।

तस्य इति तमुद्दिश्य रुधिरमवदानं अवदेयद्रव्यं कृत्वा तेन जुहुयात् । अथवा तस्य लोहितमुपायेनाहृतमवदानं कृत्वेत्यर्थः ॥

यमभिव्याहरिष्यन्स्याच्चिराचावरं ब्रह्मचर्यं चरित्वा गत्वैनमभिव्याहरेद्ब्रह्मणा त्वा शपामीत्यनुवाकेन ।८।

अभिव्याहारः शापः ॥

यं द्विष्यात्तस्य गोष्ठे स्वजमोपधीं निखनेदुदग्निमिजावरीत्यनुवाकेन ।९।

गावो यत्र तिष्ठन्ति तद्गोष्ठम् । स्वजा स्वयंरूढा. स्वजमिति लिङ्गव्यत्ययः ॥

अपि वा गोष्ठस्यैव दक्षिणां दार्वाहुमेतेनैव विखानयेत् ।१०।

दार्वाहुः दारुस्थूणा ॥

---

* sic.

यद्युद्गाता पुरुषसाम न गायेदध्वर्युरेवैतेन साम्नो-द्गायेद्भूर्भुवः सुवरित्यनुवाकेन। ११।

अस्मादौद्गात्रेण पुरुषसाम्नाध्वर्यवमेतत्साम विकल्प्यत इत्यर्थः॥

इत्येकोनविंशी कण्डिका।

इति पञ्चमः पटलः॥

अवान्तरदीक्षां व्याख्यास्यामः। १।

आ शुक्रियकाण्डादाम्नातः प्रवर्ग्यकल्पो व्याख्यातः। इदानीं तस्यैव काण्डस्योपाकरणं मन्त्राम्नानक्रमप्राप्तं व्याख्यायते। तस्योपाकृतसौम्य-काण्डस्यैवावान्तरकाण्डोपाकरणत्वात् अवान्तरदीक्षेत्याख्यायते। अवा-न्तरदीक्षासादृश्याद्वा तद्व्यपदेशः। सादृश्यं च व्रतमध्ये तीक्ष्ण-व्रतान्तरप्रवेशः उष्णोदकादिसंबन्धश्च॥

पर्वण्युदगयन आपूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे केशश्मश्रु वापयित्वापराह्णे प्राचीमुदीचीं वा दिश-मुपनिष्क्रम्य खिले ऽच्छदिर्दर्शे ऽग्निमुपसमाधाय सं-परिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानु-वाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृता-न्यक्ता अभ्यादधाति पृथिवी समिदित्येतैर्मन्त्रैः। २।

उदगयने यत्पर्व शुक्लपक्षे यत्पुण्यं नक्षत्रं वा तस्यापराह्णे क्रियते। खिले अनैरप्रहते ऽरण्यदेशे। अच्छदिर्दर्शे यत्र ग्रामस्य न दृश्यते

रुद्रिः। अग्निमुपसमाधाय यथे कर्षाग्निमित्यादिविधिना लौकिकाग्निं निधाय। पूर्ववदुपाकृत्य यथोपाकरणे समापने चेत्यनोर्नां. तथा सोमाय काण्डर्षये सांहितीभ्यो देवताभ्यः सदसस्पतये च पाकयज्ञविधानेन कुर्वित्यर्थः ॥

अथ देवता उपतिष्ठते ऽग्ने व्रतपते व्रतं चरिष्यामीति।३।

चतुर्भिर्यजुर्भिर्यथालिङ्गं देवता उपतिष्ठते ॥

अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति। प्रथमोत्तमयोर्वा।४।

प्रभृतीः अनुवाकानां आद्यानि यजूंषि। अभिव्याहारयति वाचयत्याचार्यः। प्रथमोत्तमयोः युञ्जते. सवितेत्यनयोः ॥

उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलयति वाचं च यच्छति।५।

उत्तमेन मन्त्रप्रश्नस्य संमीलयति नेत्रे ॥

अथास्याहतेन वाससा प्रदक्षिणं संमुखं शिरो वेष्टयित्वास्तमिते ग्रामं प्रपादयति।६।

संमुखं सहमुखम् ॥

वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा।७।

न तु संविशेत्। तिष्ठेदेतां रात्रिमुपविशेत्संविशेदेति तु बौधायनः॥

श्वो भूते खिले ऽच्छदिर्दर्शे ऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्तयमभिविदर्शयति। सप्ततयमित्येके। अग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नाम्। हिरण्यं सप्तमम्। ८।

संपरिस्तीर्यानन्तरं वासो ऽपहाय सप्ततयमेवाग्रे दर्शयति। यदा षट्तयं तदा हिरण्यं लुप्यते। महती नग्ना महानग्ना. या स्वरमत एव विवसना चरति. बाला कन्येति यावत्। नैघण्टुकास्त्वाहुः. अप्राप्तषोडशा नारी नग्नेति॥

अपि वादितस्त्रीणि विदर्शयित्वा यथोपपातमितराणि। ९।

आदितस्तावत्त्रीणि द्रव्याण्यवश्यं दर्शयितव्यानि. यथालाभं त्वितराणि॥

अथैतद्वासो गुरवे दत्त्वा वयः सुपर्णा इत्यादित्यमुपतिष्ठते। १०।

गतः॥

अथास्य ब्रह्मचर्यमधि। ११।

अधि ब्रह्मचर्यं. ब्रह्मचर्ये यो ऽस्य व्रतविशेषः स वक्ष्यत इत्यर्थः। अथवा अधि ब्रह्मचर्यं. प्राकृताद्ब्रह्मचर्यादधिकं यद्व्रतमित्यर्थः॥

नित्ये। १२।

तच्च नित्ये ग्रहणार्थे प्रथमाध्ययने. न तु जपाद्यर्थे ॥

न नक्तं भुञ्जीत । १३ ।

गतः ॥

यदि भुञ्जीतापज्वलितम् । १४ ।

अमावास्यापज्वलितं ज्वलनेनोल्मुकेनाभिद्योतितं भुञ्जीत ॥

न मृन्मयं प्रति धयीत । १५ ।

मृन्मयं प्रति. मृन्मयेन न धयीत. न पिबेदपः ॥

न स्त्रिया न शूद्रेण संभाषेत । १६ ।

गतः ॥

नोपानहौ न छत्रम् । १७ ।

नास्योपानहौ भवतः. न छत्रं च ॥

न चक्रीवदारोहेत् । १८ ।

चक्रीवत् यानं शकटादि ॥

न गतासुमीक्षेत् । न स्नायात् । १९ ।

गतौ ॥

अष्टम्यः* पर्वाणि चोपवसेद्वाग्यतः । २० ।

अष्टम्यः अष्टमीः ॥

---

BCDH* चाष्टम्याः.

न च संविशेत् ।२१।

न तासु रात्रिषु संविशेत्. स्थानासनाभ्यामेव तु विहरेत् ॥

इति विंशी कण्डिका ।

संवत्सरमेतद्व्रतं चरेत्। एतस्मिन्नेव संवत्सरेऽधीयीत ।१।

संवत्सरादर्वागध्ययनसमाप्तावपि संवत्सरं व्रतं चरेत्। न यापयेच्च बहिः संवत्सरादध्ययनम् ॥

यद्येतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् ।२।

यद्यसमापितं ततो यावदध्ययनं व्रतमनुवर्तयेत् ॥

संवत्सरे पर्यवेते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाहुतैर्मन्त्रैः समिध आधायाहुतैर्देवता उपस्थायोत्तमेनानुवाकेन शान्तिं कृत्वा गुरवे वरं दत्त्वा केशश्मश्रु वापयते ।३।

पूर्ववद्विसृज्य यथोपाकरणे समापने चेत्यादिना समापनेऽपि समानो विधिरुक्तः। तथा आहुतैः अग्निमादारभ्य प्रतिलोमकर्मैः ॥

अथास्य स्वाध्यायमधि नित्ये। ४।

स्वाध्यायः अध्ययनम्। पूर्ववद्योजना॥

नानुत्सृष्टाध्यायो ऽधीयीत। ५।

अनुत्सृष्टेति सवर्णदीर्घस्थाने परसवर्णश्छान्दसः। अध्यायोत्सर्जनविधिना अनुत्सृष्टाध्यायः पश्चान्नाधीयीतेत्यर्थः॥

न नक्तम्। ६।

अधीयीतेत्यन्वयः॥

नातिदोषम* ब्रह्मचर्यमापद्य न मांसं खादित्वा न केशश्मश्रुलोमनखानि वापयित्वा न केशान्प्रसाध्य† न दतः प्रक्षाल्य। ७।

अतिदोषं रात्रौ। ऋतुगमनादिना अब्रह्मचर्यमापद्योत्तरेद्युर्नाधीयीत। एवं मांसं खादित्वोत्तरेद्युर्नाधीयीत॥ ननु कथमेते ब्रह्मचारिणः ऋतुगमनादयः क्रियाः संभवन्तीति ब्रह्मणीयम्। सत्यं न तं प्रत्येते निषेधाः क्रियन्ते. किं तु यथाविद्यया न विरोधेत। मनसा ब्रह्मचारिकल्पेनाधीयीतेत्यादिभिः शास्त्रैरेतस्यमेव पुनरधीयानं प्रतीत्यदोषः॥

नाक्तो नाभ्यक्तो नार्द्रो नार्द्रे नानवदृष्टे‡ नाभ्रे न

* BCL नातिदोषम॰. † ADE प्रक्षाय॰.

‡ Corrected according to the commentary; the MSS. of the text have ॰वद्दृष्टे

छायायां न पर्यावृत्त आदित्ये न हरितयवान्प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नारण्यस्य नापामन्ते। ८।

अभ्यक्तः* अञ्जनालंकृतः। तदपि पूर्ववद्व्याख्येयम्। आर्द्रः स्नानार्द्रः। आर्द्रे देशे। नानववृष्टे. हिमवृष्टितावद्दृष्टतृणादि अववृष्टम्। पर्यावृत्त आदित्ये अपराह्णे। हरितयवाः सस्यविशेषाः॥ सर्वत्र अधीयीतेत्यन्वयः॥

नामृतमुत्पतितं न लोहितं दृष्ट्वा। न हर्म्याणि न शरीराणि न शवं नापपात्रम्। ९।

सर्वत्र दृष्ट्वेत्यनुवर्तते। पूर्ववदन्वयः। अमृतं मांसं क्रव्यादमुखादेरुद्धृत्य पतितं दृष्ट्वा नाधीयीत। लोहितं रुधिरम्। हर्म्याणि गृहाणि। शरीराणि शिरःपाण्यादीनि प्राण्यङ्गानीति यावत्. पतितानि तेषामस्थीनि वा। शवं नेत्तेत्युक्तं प्राक्. प्रमादाद्दृष्ट्वा नाधीयीत। अपपात्रं पतितादि॥

अध्येष्यमाणः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिले ऽच्छदिर्दर्शे ऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वापरेणाग्निं दर्भेष्वासीनो दर्भान्दूर्वा वा धारयमाणः पराचीनमधीयीत। १०।

एवमध्ययनार्था नियमा उक्ताः। इदानीमध्ययनस्यैव प्रकार उच्यते।

---

* Is missing in the MSS.

अहरहरध्येष्यमाणो ग्रामान्निष्क्रम्य प्रथमेनानुवाकेन शान्तिं कृत्वा पराचीनमधीयीत । युञ्जते मन इत्यादि सविता भूत्वेत्यन्ताननु-वाकान्सकृत्सकृदेवाधीयीत. न त्वावर्तयेदित्यर्थः ॥

वरं वा दत्त्वोपासने* । ११ ।

अथवा गुरवे वरं दत्त्वा उपासने आभीक्ष्ण्येन समापयेत् ॥

अध्येष्यमाणो नान्या वाचो वदेत् । १२ ।

अध्येष्यमाणो ग्रामान्निष्क्रान्तः सन्नध्ययनभूतं वर्जयन् वेदाक्षरेभ्यो ऽन्या वाचो वदेत् ॥

यत्र क्वचाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वा-धीयीत । १३ ।

शान्तिं कृत्वाधीयमानो ऽपि यत्र अशान्तिकृतं पश्येत् शान्त्यभावे यदशुभं कृतं भवति तत्पश्येत् तदा पुनरेव शान्तिमावर्तयेत् ॥

अधीत्य चोत्तमेन । १४ ।

शान्तिविपरिणामेनान्वयः । अहरहरध्ययनान्ते च शं नो वात इत्या-दिना शान्तिं कुर्वीतेत्यर्थः ॥

न प्रवर्ग्यायोपनिष्क्रम्याप्रविश्यान्यदधीयीतान्यद-धीयीत । १५ ।

प्रवर्ग्यः शुक्रियकाण्डलक्षणः. प्रवर्ग्यप्रतिपदत्वात् । प्रवर्ग्यायोपनि-

---

*Thus A ; B °पासने, C °पवसंत्, DE °पासन्, L °पासने.

क्रम्य अनुप्रवर्ग्यकाण्डाध्ययनार्थं ग्रामादरण्यं प्रत्युपनिष्क्रान्तः तदेवाधीयीत. नान्यं वेदभागम्। यदाप्यन्याङ्गमधीते तदाप्यप्रविश्य ग्रामं न तदधीयीत. प्रविश्यैव त्वधीयीत ॥

इत्येकविंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः।

इति पञ्चदशः प्रश्नः ॥



# LIST OF ERRATA.

## Vol. I.

Page 15 line 4 read सच्चवक्षा instead of सच्चवक्षा
" " " 11 " आयपिता " " आयुपिता
" 25 " 17 " दर्वा " " दर्वो
" 36 " 7 " प्रवाम्णे " " प्रवाम्णे
" 42 " 2 " गांदाव as one word and correct accordingly Taitt. Br. 3. 7. 4. 14.
" 78 " 9 " सवितात्युनाति० instead of सवितोत्पूनाति०
" 79 " 20 " ०संभवात् " " ०संभवात
" 82 " 1 " पृथं " " पृथं
" 87 " 4 " ०माग्नीध्रो " " ०माग्नीध्रो
" 137 " 2 " तत्संबन्धा० " " तत्संबन्धा०
" 142 " 16 " बर्हिषि " " बर्हिषि
" 158 " 3 " पत्नीसंयाजाः " " पत्नीपसंयाजाः
" 164 " 16 " विमताः " " विमता
" 183 " 13 " } प्रभ्यन " " प्रभ्यन
" 184 " 4 " }
" 191 " 8 " परमं च " " परम
" " " 21 " रुद्राना० " " रुद्रामा०
" 252 " 16 " ०दृश्योदर्म " " ०दृश्योदर्म
" 258 " 16 " प्रथमं " " प्रथम
" 265 " 9 " गृह्माया० " " गृह्माया०
" 424 " 16 " ०मृहाति " " ०मृहाति
" 425 " 5 join यथाप्राप्त
" 438 " 12 read प्रो- " " प्रोक्ष-
" 451 " 5 " ऽव्यथिष्या " " व्यथिष्या
and cf. Pān. 3. 4. 10.
" 460 " 8 " प्रतिप्रख्याता instead of प्रतिप्राख्याता
" 469 " 26 " 226 " 3 " " 226 " 4
" 470 " 1 " line " " note

## Vol. II.

Page 3 line 8 read हिरण्यं instead of हिरण्य
" 36 " 4 " पृथगिडे " " पृथगीडे
" " " 7 " सहेडामवद्यतः " " सहेडामवद्यत
" 45 " 2 " ॰सुम्नाविति " " ॰द्युम्नाविति "
according to the better MSS., and compare the same, but fuller, quotation in the commentary to 13. 21. 1.
" 56 " 8 " अनिष्कासितां instead of अनिष्काषितां; the latter is exhibited by the MSS. BG only; cf. 13. 23. 2.
" 64 " 5 " ऽग्निष्वात्तभ्यो instead of ऽग्निष्वात्तेभ्यो
" 66 " 10 " ॰प्रतिपर्येति " " प्रतिपयेति
" 98 " 14 disjoin दुग्ध्वा पुनर्हातव्यं
" 134 " 1 read परिक्रमौ " " परिक्रमो
" 152 " note " हृत " " हृ
" 161 line 6 insert a stroke before तैः
" 165 " 1 read प्रचर्य instead of प्रचय.
" 172 " 11 " ततश्चातिं " " ततश्चाति
" 188 " 9 " अग्निष्टुत्वं " " अग्निष्टुत्व
" 190 " 14 join इत्यन्योऽन्य॰
" 191 " 15 read ॰द्रामकर्मा॰ " " ॰द्रामकमा॰
" 213 " 9 " वासोप्यतो॰ " " वासौप्यतौ॰
" 240 note " h " " l
" 242 line 19 " चिकीर्षन्नियं " " चिकीर्षन्निय
" 262 note † " AL " " AN
" 269 note, line 7 read h " " l
" 276 line 7 disjoin प्रत्याहा संपदः
" 330 " 19 read सुपर्ण॰ " " सपर्ण॰
" 333 " 15 disjoin पत्नी शालाम॰
" 364 " 15 read कण्डिका " " कण्ठिका
" 378 " 17 " आरर्यम्णः " " आरयम्णः
" 383 " 4 disjoin वाच्यतः पावको

Page 413 at the head read आपस्तम्बीये instead of आस्तम्बीये

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | 438 | line | 16 | disjoin | तव शाखाया० | |
| ,, | 448 | ,, | 17 | read | अध्वर्यो | ,, ,, अध्वया |
| ,, | 450 | ,, | 10 | ,, | पत्नमध्वर्यु० | ,, ,, पत्नमध्वयु० |
| ,, | 451 | ,, | 16 | ,, | वर्हिर्भ्यां | ,, ,, वर्हिर्भ्यां |
| ,, | 452 | ,, | 18 | disjoin | देवेभ्यो देवा | |
| ,, | 455 | ,, | 18 | read | सर्वं | ,, ,, सव |
| ,, | 477 | note*, | line 1 | read | द्भिषत् | ,, ,, द्भिषत |
| ,, | 481 | line | 15 | read | वर्हिर्वाद | ,, ,, वर्हिवहि |
| ,, | 484 | ,, | 19 | ,, | ऋजीषं | ,, ,, ऋजीष |
| ,, | 518 | ,, | 16 | ,, | प्रायणीयाव० | ,, ,, प्रयणीयाव० |
| ,, | 536 | ,, | 16 | ,, | अप्सुवर्च- | ,, ,, अप्सुवच- |
| ,, | 553 | ,, | 7 | ,, | वर्हो पि | ,, ,, वर्होपि |
| ,, | 556 | ,, | 15 | ,, | तन्नं | ,, ,, तंनं |
| ,, | 634 | ,, | 18 | ,, | कुर्वन्न० | ,, ,, कुवन्न० |